श्रीमत्क्षेमराजमुनिविरचिता–

# उपदेशसप्ततिका ( नव्या )

स्वोपज्ञटीकासहिता

न्यायाम्भोनिधिश्रीमद्विजयकमलसूरीश्वरोपदिष्टगोघापट्टननिवासिश्रेष्ठिश्री–धर्मचन्द्रमगनलालद्रव्यसाहाय्येन

[illegible]प्रकाशिका–श्रीजैनधर्मप्रसारकसभा–भावनगर

[illegible] शा० कुंवरजी–आनन्दजीत्यनेन मुम्बापुर्यां निर्णयसागरमुद्रालये

[illegible]प्रापयित्वा प्रकाशितम् । पुनर्मुद्रणाद्याः सर्वेऽधिकारा एतत्संसदधीनाः

वीरसंवत् २४४१ क्रीस्ताब्द १९१५

[illegible]कारिणां साधुसाध्वीवर्गाणां ज्ञानागाराणां चोपदीकरिष्यते

# प्रस्तावना

विदांकुर्वन्तु शेमुषीजुषो विद्वांसः—

इह किल जैनदर्शने द्रव्यानुयोगो गणितानुयोगश्चरणकरणानुयोगो धर्मकथानुयोगश्चेति चत्वारोऽनुयोगा मुख्यत्वेन प्रतिपादिताः। तत्रैकैकस्मिन्ननुयोगेऽनेकेषां विषयाणामन्तर्भावित्वेन प्रसङ्गानुप्रसङ्गत्वेन च रत्नाकररत्ननिकराणामिवाप्रमेयत्वं दरीदृश्यते। तत्र द्रव्यानुयोगे कार्मणादिग्रन्थाः प्रविष्टाः, गणितानुयोगे भूगोलखगोलविषयाः प्रतिपादिताः, चरणकरणानुयोगे साधुश्राद्धानामाचारादिग्रन्था ग्रथिताः, धर्मकथानुयोगे च धार्मिकनैतिकैतिहासिकादिविविधविषयाश्रितमहापुरुषादिदृष्टान्तद्वारेण धर्मोपदेशा उपदिष्टाः। तत्र चोपदेशमाला—उपदेशप्रासाद—सम्यक्त्वसप्ततिका—कर्पूरप्रकरादयो ग्रन्था आचारप्रतिपादकत्वाच्चरणकरणानुयोगे समवतरन्ति मुख्यतया, तथापि तत्तद्धर्मविषयोपदेशाना दृष्टान्तद्वाराद्दृढीकरणाद्धर्मकथानुयोगेऽपि। मुख्यतया धर्मकथाप्रतिपादकानि च त्रिषष्टिशलाकापुरुषादिचरित्राण्यपि आचारादितात्पर्यपरतया प्रायश्चरणकरणानुयोगीन्यपीति उभयानुयोगद्वयं प्रायो नित्यसंबद्धमेव। तथा चायमपि उपदेशसप्ततिका नाम ग्रन्थोऽनुयोगद्वयप्रतिपादकः। यद्यपि मूलेऽस्य केवलाचार एवाभिहितः तथापि मूलकारेणैवास्य स्वकृतटीकाया कथानुयोग स्फुटमेव प्रकटितः। एवंविधा एव कथाद्वारेण धर्मोपदेष्टारो ग्रन्थाः प्राय ऐदंयुगीनाल्पायुर्मेधाज्ञानानामासन्नोपकारिण इति मन्यामहे।

ग्रन्थस्यास्य सटीकस्य के कर्तारः? कस्मिन् काले कस्मिन् देशे केन प्रार्थितास्त्वामुं कृतवन्तः? इत्येतज्जिज्ञासया—

“पढिउं एयं उवएससत्तरिं, मुणंति चित्ते परमत्थवित्थरं। तरित्तु ते दुक्खजरं सुदुत्तरं, खेमेण पावंति सुहं अणुत्तरं ॥ ७२ ॥”

इति मूलचरमश्लोके क्षेमशब्देन, तथा—

"इह भव्यसत्त्वचेतःप्रतिबोधकृते प्रतन्यते मयका । स्वकृतोपदेशसप्ततिकायाः स्पष्टाक्षरा टीका ॥ ७ ॥"

इति पीठिकाचरमछन्दसा, तथा च प्रशस्तौ—

"तच्छिष्याः प्रविभान्ति शान्तिसहिताः सौभाग्यभाग्यश्रिताः, सद्विद्याभ्युदयाधरीकृतसुराचार्याः क्षितौ विश्रुताः ।
कीर्त्तिस्फूर्त्तिमधिष्ठिता मुनिवराः श्रीक्षेमराजाह्वयाः, पुण्योन्नत्यतिशायिपाठकशिरोरत्नोपमानोदयाः ॥ ९-१० ॥
स्वकृतोपदेशसप्ततिकाह्वयसूत्रस्य निर्मिता टीका । तैरेवैषा वर्षे मुनिवेदशरेन्दुभिः ( १५४७ ) प्रमिते ॥ ११ ॥
हिंसारकोट्टवास्तव्यः श्रीमालोत्तमवंशजः । षडुपर्पटगोत्रीयः श्रीमान् दोदाह्वयोऽभवत् ॥ १२ ॥
स श्राद्धगुणरत्नानां रोहणोऽभोहणो हृदि । कृता तस्याग्रहेणैषा नव्या सप्ततिका मुदा ॥ १४ ॥"

इति श्लोकसमुदयेन सुखं भोत्स्यन्त इति तदुल्लेखाद्विरम्यते । खरतरगच्छीयाश्चेमे इत्यपि प्रशस्त्यां "श्रीखरतरगण-मायाः" इत्यस्मिन्नेव श्लोके प्रकटं, नवरं न क्वापि कोऽपि गच्छीयसामाचारीभेदोऽत्र दृष्टिपथमवतरति, सर्वसामान्योपदेशमयत्वादस्य । किं चेमे पूज्याः कतमां भूमिं जन्मना कतमां च विहारादिना भूषयामासुः ? कौ च पितरौ प्रमोदयाञ्चक्रुः ? अन्याश्च काः काः कृतीश्चक्रुवांसः ? इत्यादिकमुल्लेखाभावान्न किमपि ज्ञायते ।

अस्मिंश्च ग्रन्थे मूले सर्वेऽपि श्लोकाः प्राकृतभाषायामिन्द्रवज्रयैव ग्रथिताः, अत एषां मुखपाठमात्रेऽपि महानाह्लादो वक्तृश्रोतॄणां जायते, किमुतार्थविचारणे ? । अत्र प्रथमश्लोके मङ्गलमन्तिमयोश्च फलमभिहितमतोऽवशिष्टाः सप्ततिरुप-

देशश्लोका इत्यन्वर्थेयं उपदेशसप्ततिकेति संज्ञाऽस्य ग्रन्थस्य । प्रतिश्लोकं चात्र प्राय उपदेशचतुष्टयमात्मनोऽत्यन्तहि-
तकारि वरीवृतीति । तदुपरि ऋजुभाषयाऽक्षरशो-मूलकारैरेव संस्कृतभाषायां टीका कृता, तत्तदुपदेशानुसारि चागमोक्त-
प्रायं कथानकजातं गीर्वाणभाषायां प्राकृतभाषायां पैशाच्यादिभाषाया च विविधैः सरसैः सालङ्कारैः सयमकैर्वृत्तैश्छ-
न्दोभिः क्वचिच्च गद्येनापि व्यरचि, एवं चाधिकशतं कथानकानामत्र कथितं । कथानकेषु प्रायः शब्दकाठिन्यं वर्णनका-
ठिन्यं च वर्णितं, व्याकरणप्रयोगाश्च नूतनाः कठिनाश्च प्रयुक्ताः, अतो ग्रन्थकर्तॄणां साहित्यज्ञानं व्याकरणज्ञानं चातीव
समीचीनमासीदिति स्फुटं ज्ञायते । किं बहुना! सर्वथाऽस्य काव्यरसस्यास्वादकारिणो विद्वांस एव । किंच काव्यरचनया
ज्ञातेऽपि व्याकरणपारिकृत्ये पूज्यानां क्वचिदनुपसर्गपूर्वपदेऽपि क्त्वो ल्यबादेशदर्शनाच्छङ्कितमेव हृदयं, कवीनां निरङ्कुशत्वे
स्वीकृते तु समाधीयत एव तत् । एवमन्यत्रापि क्वचिच्चिन्त्यप्रयोगे ज्ञेयं । अत्र वर्णितोपदेशविषयाणां कथितकथानकानां
चानुक्रमणिकायामनेनैव तज्ज्ञौरवं ज्ञापत एवेति तां दृष्टिपथं नेतु प्रार्थ्यन्ते वाचकवर्गाः । मूलं चास्य पाठतोऽर्थतश्चातीव-
रम्यं भव्यजनोपकारीति सर्वैर्विशेषतश्चोपदेष्टृभिः कण्ठे कार्यमिति पृथक्कृत्य प्रारम्भेऽपि मुद्रापितं । आशास्यते च विद्वद्-
र्गोऽस्य मुद्रितो ग्रन्थस्य मुद्रापणप्रयासं द्रव्यव्ययं च पठनपाठनोपदेशदानादिना सफलतां नयेत् ।

अस्य प्रशस्त्याश्चरमे (१४) श्लोके "नव्या सप्ततिका मुदा" इत्यत्र नव्यशब्दोल्लेखकर्त्रा ग्रन्थकर्त्रा इदमसूचि, यदुत—
अयं ग्रन्थो मुनिवेदशरेन्दु (१५४७) प्रमिते विक्रमाब्दे हिंसारकोट्टवास्तव्य दोदाभिधश्राद्धाग्रहेण पूज्यैः श्रीक्षेमराजा-

१ समासेऽपीत्यर्थः

ह्यै र त इति प्रशस्त्यां शंसितं, एतत्प्राचीनश्चैतन्नामा ( उपदेशसप्ततिनामा ) एव ग्रन्थः पण्डितप्रवरैः श्रीमत्सोमधर्मगणिभिरुत्तरपञ्चदशशततमे ( १५०३ ) विक्रमाब्दे निर्मितः योऽत्रत्यया श्रीआत्मानन्दसंस्थया मुद्रापयित्वा प्रकटितोऽस्ति वर्षद्वयादर्वाक् इति तदपेक्षया योग्यमेवास्य नव्यत्वं । अनयोर्द्वयोरपि महान् विषयभेदः कृतिभेदश्च भिन्नभिन्नकर्तृकत्वात् । किंच प्राचीनः संक्षिप्तकथानक आसन्नसहस्रत्रयप्रमितः श्लोकानां, अयं च विस्तृतकथानक आसन्नसहस्राष्टकप्रमितः श्लोकानां, मूलमपि च द्वयोरपि भिन्नमेवेत्यतोऽपि नूतनत्वमस्यान्वर्थमेवेति ध्येयम् ।

ग्रन्थस्यास्य मुद्रापणे न्यायाम्भोनिधिश्रीमद्विजयानन्द (आत्मारामजी) सूरीश्वरपट्टविराजितश्रीमद्विजयकमलसूरीश्वरसदुपदेशामृतसिक्तेन गोघानिवासिना श्रेष्ठिवरेण मगनलालतनुजन्मना श्रीमद्धर्मचन्द्रेण द्रव्यसाहाय्यं दत्तं । संसद्भाण्डागारस्था जेठालालशर्मणा लिखिताऽस्य प्रतिकृतिः प्रथमं पन्यासश्रीमणिविजयाह्वयैः पश्चाच्च पन्यासश्रीदानविजयाभिधैः संशोधिता, मुद्रायन्त्रणप्रतिकृतिसंशोधनेऽप्याभ्यामेव पन्यासवराभ्यामवधानं दत्तमित्यनयोः सूरीश्वराणां श्रेष्ठिवरस्य च महोपकारं मन्यामहे ।

शुद्धिविषये चास्य कृतेऽपि यथाशक्ति प्रयासे कुतोऽपि हेतोर्या काऽप्यशुद्धिर्दृष्टिपथमवतरति विदुषां, तैः कृपापरैः शोधयित्वाऽऽदेश्या संसदियं, येन द्वितीयावृत्तौ तद्विषये यत्येत । इति शम् ॥

द्वितीयभाद्रपद शुक्लचतुर्थ्यां
संवत् १९७३.

प्रकाशयित्री श्रीजैनधर्मप्रसारकसभा
भावनगर.

# ॥ श्री उपदेशसप्ततिका ॥

। सवृत्तिः ।

। नमो गुरुचरणेभ्यः ।

विश्वाजीवविशिष्टकार्यघटनासामर्थ्यमत्यद्भुतं, बिभ्राणः शुचिसच्चरित्रविलसच्चित्रैः सदाऽलङ्कृतैः ।
प्रेङ्खत्पाणिदयामृतेन भरितः सद्भक्ततासाधितः, श्रेयःश्रीशिरसि स्थितः सृजतु शं शान्तीश्वरः स्वर्घटः ॥ १ ॥
श्रेयोराजिसरोजिनीदिनकरा भक्ताङ्गिभद्राङ्कुराः, सर्वाघघमहाम्बुसिन्धुरधरा ज्ञानश्रिया बन्धुराः ।
ये भूताः किल भाविनोऽपि भुवने ये वर्त्तमानास्तथा, ते सर्वेऽपि जिनेश्वराः सुखकराः स्युर्देहिनां सेविनाम् ॥ २ ॥
वन्दे गणधरवृन्दं विवेकव्यक्तैकनिर्मितानन्दम् । यच्चरणनमस्करणं निविडमहाजन्मिभयहरणम् ॥ ३ ॥
श्रीवाग्देवि कुरु प्रसादमसमं यस्मादहं सन्मतिः, स्यां दुर्बुद्धिरपि प्रवीणपरिषत्सन्मानदानोचितः ।
किं कृष्णाञ्जनपर्वतोऽपि धवलीभावं भजेद्याञ्जसा, गौरोदारसुधांशुदीधितिभरैः सम्बन्धमासादितः ॥ ४ ॥
सद्गुरुचरणं शरणं कुर्वे सर्वेऽपि यत्प्रसादेन । विद्याविनोदलेशा जायन्ते सफलताभाजः ॥ ५ ॥

नो वाचश्चतुरोचिता मम मुखे नो कौशलं पेशलं, किञ्चिच्चेतसि पाटवं न हि सदाचारे विचारेऽप्यहो ।
मौखर्यं रचयन्निहास्मि यदहं धर्मोपदेशच्छलात्तच्चिन्तामणिकल्पसद्गुरुपदद्वन्द्वप्रसक्तेः फलम् ॥ ६ ॥
अज्ञानान्धितलोचना न हि जनाः संविद्रते कुत्रचिन्मोक्षाध्वानममानमानविवशाः संसारकान्तारगाः ।
यावन्नो सुगुरूपदेशचतुराग्रण्यः समापद्यते, सत्यस्मिन्निह कौशलं सविपुलं दुर्बोधशास्त्राध्वनि ॥ ७ ॥
इह भव्यसत्त्वचेतःप्रतिबोधकृते प्रतन्यते मयका । स्वकृतोपदेशसप्ततिकायाः स्पष्टाक्षरा टीका ॥ ८ ॥

इह हि भव्यजीवराजीवकाननसमुल्लासनन्व्यदिनकरदीधितितुल्याया अभङ्गसंवेगरङ्गचङ्गसदिक्षुक्षेत्रपरंपरापरिवर्धननिर्मलजलकुल्याया अगण्यगुणश्रेण्याधारजनमनोहारप्रसरत्पुण्यप्राग्भारप्रोत्तुङ्गशृङ्गमहाविहारशिरःपताकिकायाः श्री-उपदेशसप्ततिकाया वृत्तिर्विरच्यते । तस्याश्च प्राकृतमयमिदमादिकाव्यं तद्यथा—

तित्थंकराणं चरणारविंदं, नमित्तु नीसेससुहाण कंदं ।
मूढो वि भासेमि हिउवएसं, सुणेह भवा सुकयप्पवेसं ॥ १ ॥

व्याख्या—अहो भव्या यूयं शृणुत, अहं हितोपदेशं भाषे कथयामि । किंभूतोऽहं ? मुग्धोऽपि मुह्यतीति मुग्धः हेयोपादेयबुद्धिदुर्विधोऽपि । हितश्चासावुपदेशश्च हितोपदेशस्तं तथा । किंभूतं हितोपदेशं ? सुकृतप्रवेशं सुष्ठु कृतं सुकृतं तस्य प्रवेशो यस्माद्येन वा तं तथा । न हि हितोपदेशसमाकर्णनमन्तरेण कस्यचित्सुकृते शेमुषी सन्मुखीनतामास्कन्दति ।

१ दुर्विधो मुग्धः

किं कृत्वा ? चरणारविन्दं नत्वा नमस्कृत्य चरणावेवारविन्दं चरणारविन्दं । केषामिति साकाङ्क्षं वचनं स्यादतस्तीर्थंक-
राणामिति योज्यं, तीर्थं हि द्रव्यभावभेदाद् द्विधाऽभ्यधायि । तद्यथा—"दाहोपशमस्तृष्णाविच्छेदः क्षालनं मलस्य यतः ।
अर्थैस्त्रिभिर्नियुक्तं तत एव द्रव्यतस्तीर्थम् ॥ १ ॥ सम्यग्दर्शनचरणज्ञानावाप्तिर्यतो भवेत् पुंसाम् । आचार्यास्तद्वचनतो
याप्येतद्भावतस्तीर्थम् ॥ २ ॥" तथा द्रव्यतीर्थं गङ्गापगाप्रयागादि, तत्र गतानां हि सत्त्वानां बाह्यमलप्रक्षालनं तृष्णाप-
नोदश्च स्यात्, न पुनः कर्मकालुष्यप्रक्षयः संपद्यते । भावतीर्थं तु सम्यग्ज्ञानचारित्रात्मकं, तदापन्नानां पुण्यात्मनामात्य-
न्तिकी दुष्टाष्टकर्ममलापगमरूपा सिद्धिः संजायतेति । तदात्मकं तीर्थं कुर्वन्तीति तीर्थङ्करास्तेषां जगज्जन्तुवितीर्ण-
कृतां पदाम्भोजं प्रणम्य । किंभूतं तत् ? निःशेषाणि समस्तानि यानि मनुष्यस्वर्गापवर्गादिसौख्यानि तेषां कन्दो मूल-
कारणं, यथा कन्दाद्वनस्पतीनामुत्पत्तिः संपद्यते । तथा भगवत्पदोपास्तिरेव समस्तसुखस्तोमस्य हेतुरिति युक्तमुक्तं । नीसे-
समुदाय कंद इत्यतस्तच्चरणप्रणमनमादौ श्रेयस्करं । ननु यदुक्तं मूढात्मापि सभयं हितोपदेशं वच्मि तत्कथं घटामटा-
ट्यते ? ये सर्वथा यथाजातास्तेषां धर्मोपदेशप्रदानसामर्थ्यं व्यर्थमेव, ये तु स्वयंबुद्धास्त एव परप्रबोधसाधकाः स्युर्नान्ये-
ऽनभिज्ञाः । सत्य, किंचिन्मात्रं वेत्तृत्वं गुर्वनुग्रहान्मय्यप्यास्ते, परं तत्तदप्यसत्कल्पं, सर्वज्ञत्वाज्ञानात्, सर्ववेत्ता तु भग-
वानेव न हि तत्परः कश्चिदपरो विपश्चिज्ज्ञानमाप्नुयात् । न हि सहस्रकरमन्तरेण मणिप्रदीपादिबिम्बैर्भुवनान्तरालव-
भासप्रागल्भ्यमभ्यस्यतीति युक्तमुक्तं गर्वापहारव्याहारोच्चारणं कवेः । अथ यदेवं व्याकृतं—"भो भव्या यूयं हितशिक्षां
कर्णे कुर्वन्तु" तदप्यसङ्गतं, यतो जगत्प्रभुर्निर्विशेषशेमुषीकतया भव्याभव्यजीवपर्षत्समक्षं सर्वं प्राकृतसमयसमुच्चसत्त्व-

जलजलधरमधुरतरवाण्या योजनावधिविस्तारिण्या सद्धर्ममाख्याति, न च भव्याभव्ययोर्विषये किञ्चिद्विशेषमाधत्ते । तथाप्येतदेक (व) मन्तरमजनिष्ट—ये भव्या जीवास्त एवार्हत्समुपदिष्टसर्वोन्य-सत्यं, भगवानविशेषवानेव धर्मोपदेष्टा तथाप्येतदेक (व) मन्तरमजनिष्ट—ये भव्या जीवास्त एवार्हत्समुपदिष्टसर्वोन्य-धर्मगरिष्ठविशिष्टनिःश्रेयससौख्यसाधनपटिष्ठजीवरक्षणाद्यक्षूणहितोपदेशसमाकर्णनाधिकारिणः । तदनु च यथातथश्रेयः-धर्मगरिष्ठविशिष्टनिःश्रेयससौख्यसाधनपटिष्ठजीवरक्षणाद्यक्षूणहितोपदेशसमाकर्णनाधिकारिणः । तथा ये चाभव्यास्ते सम्यक् श्रुतेऽपि श्रीम-पुरीपथानुसारिणः समयसमवायप्रतिपादितपवित्रचारित्रक्रियाकलापकारिणः । तथा ये चाभव्यास्ते सम्यक् श्रुतेऽपि श्रीम-दार्हते सर्वसत्त्वहिते श्रुतेऽपि नैकान्तेन रुचिधर्त्तारः । तथा च न सम्यक् तपःसंयमानुष्ठानानुष्ठातारः । ततस्तेऽर्हद्धर्मेऽन-धिकृता एव प्राकृता इव गौरवार्हनागरिकव्यवहारे । ततस्तेषामुपेक्षैव श्रेयस्करी । यदि सर्वसत्त्वोपकारस्रष्टरि भगवत्यपि समुपदेष्टरि न ह्यमीषामन्तःकरणे सदुपदेशलेशप्रवेशावकाशस्तदा तदीयप्राग्भवानन्त्यसंचितात्यन्तदुर्जेद्यावद्यानामेवान्त-रायविस्फूर्जितं । न हि निर्दोषपोषस्य श्रीजिनेशस्य कश्चिद्दोषसंश्लेषः । यदुक्तं स्वोपज्ञमेघद्वात्रिंशिकायां—"विश्वत्रातरि दातरि त्वयि समायाते प्रयाते महा-भीष्मग्रीष्मभरे प्रवर्षति पयःपूरं घनप्रीतिदम् । दुःखाल्लुष्यति यद्यवासकवनं पत्त्र-याच्चाधिका, यद्भूद्भिर्न पलाशशाखिनि महत्तत्कर्मदुश्चेष्टितम् ॥ १ ॥" अतः सुष्ठूक्तं भव्यानामेव धर्मश्रवणमभ्रणं । उक्तं च—"संक्रामन्ति सुखेन हि निर्मलरत्ने यथेन्दुरविकिरणाः । भव्यहृदये तथैव हि विशन्ति धर्मोपदेशभराः ॥ १ ॥" अहं तीर्थकृतां पदाम्भोजं नत्वा हितोपदेशं कथयामि, भो भव्या यूयं शृणुतेति संटङ्कः । इत्थमिन्द्रवज्राछन्दो-रूपप्रथमकाव्यार्थः ।

सेविज्ज सवन्नुमयं विसालं, पालिज्ज सीलं पुण सव्वकालं ।
न दिज्जए कस्स वि कूडआलं, छिंदिज्ज एवं भवदुक्खजालं ॥ १ ॥

व्याख्या—हितोपदेशक्रममाश्रयम्—सेवेत आश्रयेत सर्वज्ञमतं सर्वं भूतभवद्भाविवस्तुतत्त्वजातं जानन्ति द्रव्यपर्यायात्मकतयेति सर्वज्ञास्तेषां मतं शासनं सर्वज्ञमतं । किंभूतं तत्? विशालं विस्तीर्णं वि विशेषेण सर्वान्यशासनेभ्यः सर्वो स्फुटतया शाल्यते शोभत इति वा विशालं । न हि सर्वविद्याशासनसमुपासनप्रधानधनप्रवर्द्धनमन्तरेणासङ्ख्यातदुःखजातप्रपातकसंघातजनितात्यन्तदौर्गत्यरौद्रदारिद्र्योपद्रवप्रचयः कदाचित्समपनीयते । न हि रत्नाकरसेवनं क्वापि निष्फलं । तथा पालयेच्छीलं सर्वकालं निरन्तरं, अर्हन्मतोपास्तेरेतदेवाधिकं फलं, यत् साधुभिः श्राद्धैर्वा अत्योद्धुरतया सर्वदा सुशीलवत्तया स्थीयते, न पुनर्निश्चलनिर्मलशीलशैथिल्यमाद्रियते, "अथात्मा मुक्तोऽस्तु कस्ये पुनर्नियमकष्टानुष्ठानादि पालयिष्यते" नैवं कदाचिच्चेतसि चिन्तनीयं चेतनावद्भिः । दृढधर्मिणामिदमेवाधिकं जीवितव्यफलं, यत्स्वकीयशीलं निष्कलङ्कतया पाल्यते रोहिण्यादिवत् । तथा च "न दिज्जए त्ति" न दीयते कस्यापि कूडं आलं कूटकलङ्क इति संटङ्कः । एवं क्रियमाणे भवदुःखजालं छिन्द्यात्, जन्तुरित्यनुक्तोऽपि कर्ताध्याहर्तव्यः । भवनं भवः संसारस्तस्य दुःखमेव जालमिव जालं, यथा जालान्तःपतितः शफरः सुतरां दुःखी स्यात्, तच्छित्त्वा यदा बहिर्निर्याति तदैव सुखी नान्यथा, तथैव जन्तुर्भवजालनिर्दलने कृत एव सौख्यभाक्, न चेतरथा वृथाकल्पानल्पविकल्पाकुलप्रबलजालप्रायान्यमतोपासनप्रयासैरिति । अनेन श्रीजिनमताराधनशिक्षाप्रधानं जन्तोरात्यन्तिकानन्तसातजातसंपादनं प्रोक्तं । तथा चोत्तरो

त्तरसुखलाभोऽस्मिन् काव्ये दर्शयांचक्रे । यो जैनमतासक्तचेतास्तस्योज्ज्वलशीलप्रतिपालनेनात्यन्तं विश्वश्लाघनीयत्वं संपत्स्यते, अथ सशीलश्चेत् संपन्नस्तर्ह्यवश्यमन्यस्य कलङ्कदायी न जायत इति ज्ञाततत्त्वतयाऽस्य मृषापापविरक्तत्वादिति-श्रेयस्करीयं हितशिक्षा दक्षात्मनामिति काव्यतात्पर्यार्थः ॥ २ ॥

अथ श्रीसर्वज्ञमतश्लाघाधिकारः—

कंचणगिरी गिरीणं जहा गुरू सुरतरू तरूणं च । हत्थीण हत्थिमल्लो चिंतारयणं च रयणाणं ॥ १ ॥
सरियाणं सुरसरिया जहोसहीणं च धन्नमिह धन्नं । तह सव्वऽन्नमयाणं सव्वन्नूणं मयं गरुयं ॥ २ ॥
अइसीअलमहुररसं पाविय अइरामरत्त सुपवित्तं । कयपुन्नाणं सुलहं जिणमयममयं च पन्हिहाइ ॥ ३ ॥
सन्नाणचरणदंसणरयणुच्चयकंतकंतिरेहिल्लो । न हु मिच्छियमज्झाउ जिणमयरयणायरो जयउ ॥ ४ ॥
न हु पावइ अत्थमणं संतावं कुणइ नेव कस्सावि । सज्झायकरुक्करिसो जिणमयसूरो अउव्वयरो ॥ ५ ॥
कुवलयमुल्लासंतो निव्वुंबणउ अखंडिउ तमसा । ण हु सुन्नपहविलग्गो अहो णवो अरिहमयचंदो ॥ ६ ॥
अमई कई कहेउं सक्को तस्सेस गुणगणमणप्पं । जस्साराहणवसउ पत्तं चोरेहिं साहुत्तं ॥ ७ ॥
इत्थीसिसुगोमहरिसिहच्चाइअकिच्चकारिणोऽणेगे । कूरा वि हु पन्डिबुद्धा जिणमयमाहप्पउ अहह ॥ ८ ॥
दुग्गइउहसयवारण सुग्गइसुहकारणं च सत्ताणं । न हु जिणमयाउ अन्नं वट्टइ भुवणत्तए वि अहो ॥ ९ ॥
जह सूराउ न परो सूरो भुवणंधयारसंहरणे । तह दुरसहदुहदलणो जिणधम्माउ न हुज्ज वरो ॥ १० ॥

नीरेण विणा सस्सा अन्नेण विणा सुहा न जाइ जहा । एगंतियमिह जायइ नेव सुहं जिणमएण विणा ॥ ११ ॥
तम्हा जिणधम्मामयसेवा सययंरेण कायव्वा । जम्हाणेगे भविआ अयरामरभावमावन्ना ॥ १२ ॥

---

असाधुः साधुतां भेजे जिनधर्मप्रभावतः । यथाहि केसरी चौरः केसरीभौजसाऽभनि ॥ १ ॥
सकामनरनारीकं पुरं कामपुराख्यया । आस्ते तत्रावनीनेता विजयी विजयाह्वयः ॥ २ ॥
सिंहदत्तोऽवसत्तत्र श्रेष्ठी श्रेष्ठगुणैकभूः । तदङ्गजः केसरीति जज्ञे शिखिवचौ (चौ) रिकः ॥ ३ ॥
तेनान्यदोर्वीश विज्ञप्तो महाराज मदङ्गजः । अनार्यश्चौर्यकृज्जातः पातकोदयसंभवात् ॥ ४ ॥
निर्दूषणोऽस्म्यहं नेतरस्मिन् स्तेयं प्रकुर्वति । इत्युक्त्वा विनिवृत्तोऽसौ राज्ञाऽथ स मलिम्लुचः ॥ ५ ॥
देशान्निष्कासयामास (से) सोऽगाद्देशान्तरं द्रुतम् । विशश्राम सरस्येकस्मिन् शीतलजलोर्मिले ॥ ६ ॥
अचिन्तयत्तरुच्छायाऽऽसीनोऽसौ दौर्मनस्यभाक् । अद्य यावन्मयाऽपायि विना चौर्यं पयोऽपि न ॥ ७ ॥
धिङ् मामथाम्बु तत्पेयमित्याख्योष्य चिरं हृदि । अञ्जलिभ्यां पपिवांरि शीतलं जिनवाक्यवत् ॥ ८ ॥
तत्र स्नात्वा च भुक्त्वा च वानेयं फलसंचयम् । वृक्षारूढश्चिन्तितवान् दस्युरात्मनि निर्भरम् ॥ ९ ॥
कथं यास्यति हा मेऽद्य दिनं चौर्यविनाकृतम् । किञ्चित्कस्यापि चेद्वस्तु मिलेत्तच्चोरिकां क्रिये ॥ १० ॥
इतश्च कोऽपि विद्याधरानुचतारम्बराध्वरः । पादुकाद्वयमुन्मुच्य प्रविवेशाम्भसोऽन्तरे ॥ ११ ॥

स्नानं निर्माय चास्वाद्य विशदाम्भोऽभवत्सुखी । [illegible] च [illegible]नांश्चेकायेति योग्यसौ न्यूलगतपदः ॥ १२ ॥
प्रविष्टः सरसो मध्ये दृष्टः स्पष्टमसौ मया । ममायं समयः स्तैन्यकर्म कर्तुमथ द्रुतम् ॥ १३ ॥
अस्याकाशगतेर्हेतुर्निश्चितं पादुकाद्वयी । नान्यन्निदानमस्यास्तीति निश्चित्य स्वचेतसि ॥ १४ ॥
अपहृत्य क्षणादेतामुड्डीनो गगनाध्वना । पक्षिवद्यातवान् वेगान्निश्चलाः स्युर्न तस्कराः ॥ १५ ॥
पादुकारूढ एवातिवाह्य क्वापि दिनं समम् । निश्यागान्निजकं धाम जनकं चेत्यतर्जयत् ॥ १६ ॥
रे दुरात्मँस्त्वया राज्ञो मत्स्वरूपं न्यवेदि किम् । त्वामहं मारयिष्यामीत्युक्त्वा निष्कृपधीरधीः ॥ १७ ॥
जघान पितरं शीर्षे विपन्नमवमुच्य तम् । अहार्षीदिभ्यवेश्मभ्यो नानाधनसमुच्चयम् ॥ १८ ॥
यामत्रयं निशीथिन्याः स्थित्वाऽसौ नगरान्तरे । तुरीयप्रहरे याति पुनस्तत्र सरोवरे ॥ १९ ॥
दिवाऽरण्यान्तरास्थाय रात्रौ यात्वा पुनः पुरम् । मुषित्वाऽभ्येति तत्रैव विगोप्य नगराङ्गनाः ॥ २० ॥
कियानपि ययौ कालः कुर्वतोऽस्यैवमन्वहम् । विभ्युर्निशागमाल्लोकाः शोकार्त्ता अन्तकादिव ॥ २१ ॥
राज्ञा तद्वृत्तमाकर्ण्य पुरारक्षः प्रजल्पितः । रे तूर्णमानय स्तेनमेनमादेशमाचर ॥ २२ ॥
बहुशः शोधयित्वाऽसावाचख्यौ क्षितिपं प्रति । स्वामिन्न स धराचारी वियद्गामीव लक्ष्यते ॥ २३ ॥
असाध्यस्यै (स्ये) व दुर्व्याधेः प्रतीकारोऽस्य दुष्करः । ततः परोपकारोत्कहृदयः सदयो नृपः ॥ २४ ॥
स्वयं प्रैक्षिष्ट तं दुष्टमद्दपात्मीयपरिच्छदः । ग्रामारामसुरागारवापीकूपास्पदादिषु ॥ २५ ॥

परं नैवाप पादस्य तस्य वार्तामपि प्रभुः । अजस्य इव मोक्षाभिमनस्यायासयानपि ॥ २६ ॥
ततो राजा अगमाशु पुरोद्यानं सुदूरगम् । मन्धुरं गन्धमाघ्राय चम्पकादिसुमोद्भवम् ॥ २७ ॥
गच्छन् ददर्श वेश्मासौ मालिकायाः पुरःस्थितम् । तन्मूर्तिमर्च्यमानां च कुसुमैश्चन्दनैर्घनैः ॥ २८ ॥
अथार्चकमुपायातं पप्रच्छ स्वच्छधीर्नृपः । विस्मयापन्नहृदस्य यत्र वीक्ष्य विशेषतः ॥ २९ ॥
कोऽयं पूजाविशेषोऽद्य देवार्चक निवेदय । केनार्पितानि वासांसि महासीव सुधाद्युतेः ॥ ३० ॥
ततोऽवादीदयं स्वामिन्नहमायामि नित्यशः । अर्चितुं देवतामेतामभिप्रेतार्थदायिनीम् ॥ ३१ ॥
प्रतिप्रातः पुरः सुर्याः स्वर्णरत्नान्यहं लभे । तत्र त्रैकालिकीं पूजा कुर्वे प्रत्यहमादरात् ॥ ३२ ॥
राज्ञाऽज्ञायि ततोऽवश्यमर्पयेत् कोऽपि तस्करः । समेत्य रत्नस्वर्णार्थं देव्यग्रे ननु मुच्यति ॥ ३३ ॥
नान्यथा सम्भवत्येवं विज्ञायेति महीशिता । स्वावासमासदत्पूर्णं दिनकृत्यान्यसाधयत् ॥ ३४ ॥
रजन्यामागमत्स्वर्णीगृहं वर्मी भटान्वितः । दूरं दूरतरं शूरान् संस्थाप्य स्वयमुद्यतः ॥ ३५ ॥
चैत्यान्तस्तस्थिवान् स्तम्भान्तरे स्वां गोपयँस्तनुम् । अत्रान्तरे समायातः पारिपन्थिककेसरी ॥ ३६ ॥
पादुकायुगमुन्मुच्य मन्दिरन्तर्विवेश सः । प्रधानरत्नैर्देव्यर्चामाचरच्चतुरोचिताम् ॥ ३७ ॥
स्वामिनि त्वत्प्रसादेन निर्विघ्नं चौर्यमस्तु मे । इत्युदीर्य मन्दिराद्यावन्निर्ययौ तावन्नृपोऽवदत् ॥ ३८ ॥
रुद्धद्वारः कथं याता रे जीवँस्तस्कराधम । तर्जितोऽपीत्यसौ वेगान्निर्जगाम बहिर्भुवि ॥ ३९ ॥

नृपान्निमुखमुत्तालः पाडुकाद्वयमात्मनः । निक्षिप्तवान् क्षणादेष विज्ञाय समयोचितम् ॥ ४० ॥
तद्व्यथार्त्ते नृपे जाते जीवन् सोऽहं प्रयाम्यहो । निःससारेति जल्पन् स चण्डिकालयमध्यतः ॥ ४१ ॥
स्वस्थीजूतेऽथ जूनाथे याति यात्येष पातकी । तूर्णं बध्नन्तु धावन्तमहो धावत धावत ॥ ४२ ॥
पूत्कुर्वन्त इति क्ष्माभृद्भटाः शस्त्रबलोद्भटाः । अधावन् केटकेऽमुष्य मार्जारस्येव कुर्कुराः ॥ ४३ ॥
पाडुकां (के) परिधायाथ क्षितिभुग्गगनाध्वना । निगृहीतुमनाश्चौरमन्वगच्छद्विहङ्गवत् ॥ ४४ ॥
लब्धोऽप्यहो गतः स्तेनस्तदेषा महती त्रपा । साम्प्रतं निगृहीष्यामीत्यन्तर्विहितनिर्णयः ॥ ४५ ॥
इतस्ततश्चरँश्चौरः पदानां गोपनाकृते । पक्षीव लूनपक्षः सन् मनसीति व्यचिन्तयत् ॥ ४६ ॥
यदासीत्पाडुकाद्वन्द्वमद्यैतज्ञमितं मया । मुधा कुदन्धनेत्रेण क नश्याम्यधुना हहा ॥ ४७ ॥
राजा व्योमाध्वनाऽऽयाति तद्भटाश्च रणोद्भटाः । पापद्रुः फलितो मेऽद्य यः सिक्तश्चौरिकाम्बुना ॥ ४८ ॥
उपस्थितं मे मरणं शरणं नास्ति सम्प्रति । मनाग्नाराधितो धर्मः पिता व्यापादितस्तथा ॥ ४९ ॥
इतश्च भ्रमता तेन ग्रामारामे मुनीश्वरः । दृष्टः शुश्राव तद्वाक्यं श्रवणामृतसोदरम् ॥ ५० ॥
आत्मध्यानं च समता तथा निर्ममता मता । सद्यः पातकहन्त्री स्यादीपिकेव तमःस्थितेः ॥ ५१ ॥
अर्हन्मतोपास्तिमतिः श्रुतिः श्रौती श्रुतिद्वये । अवद्योच्छेदिनी सद्यो वृक्षस्येव कुठारिका ॥ ५२ ॥
सिद्धेः सुखमसाध्यं यद्याश्च स्वःपदवीश्रियः । यच्च मानुष्यकं सौख्यं तत्साम्येनैव साध्यते ॥ ५३ ॥

श्रुत्वैतत्साधु शुद्धात्मा भेजे वैराग्यवासनाम् । स्थिरीकृत्य निजस्वान्तं सत्त्वेषु समतामधात् ॥ ५४ ॥
रे चेतश्चापलं मुञ्च सौहार्दं भज जन्तुषु । परस्त्रीधनधान्येषु मा पद स्पृहयालुताम् ॥ ५५ ॥
सर्वेषु भवभावेषु निर्ममत्वमुरीकुरु । एवं प्रध्यायतस्तस्य शुक्लध्यानैकचेतसः ॥ ५६ ॥
शेषरात्रिर्व्यतीयाय समभूद्भास्करोदयः । उत्पेदे केवलज्ञानमज्ञानतिमिरात्यये ॥ ५७ ॥
दुष्कर्मच्छिद्रवश्येश्या व्यपरोपणकर्मणि । केसरी केसरीवाभूत् प्रभ्रष्टोऽभूत्स साहसः ॥ ५८ ॥
यथेह कतकक्षोदाद्भवता मलिनाम्भसः । तथैव सद्ध्यानवशादात्मा कालुष्यमुज्झति ॥ ५९ ॥
सर्वत्रान्वेषयत्यन्तरे क्षितिप आगमत् । दिश्येकस्यां भटाश्चापि रे रे निघ्नन्तु तस्करम् ॥ ६० ॥
इत्युच्चैः फूत्कृतिपराः प्रत्यक्षा यमकिङ्कराः । आजग्मुरथ तत्पार्श्वं केवलोत्पत्तिवेदिनः ॥ ६१ ॥
द्वितीयस्यां दिश्यमराः खेचराः किन्नरास्तथा । चिकीर्षवस्तन्महिमामम्बरे स्वविमानगाः ॥ ६२ ॥
यावत्तत्पार्श्वमासीनाः प्रमोदभरनिर्भराः । ततश्च केसरी साधुर्दन्तद्युत्या दिशः समाः ॥ ६३ ॥
द्योतयन् देशनां चक्रे स्वर्णाब्जस्थो मरालवत् । चञ्चच्चरणविभ्राजी जीवराजीवसन्मनाः ॥ ६४ ॥
उपदेशावसानेऽथ पृष्टो राज्ञा स केवली । भगवन् कुत्र ते चौर्यवृत्तिः साधुस्थितिः क्व च ॥ ६५ ॥
क्व चायं केवलोद्बोधः सर्वसत्त्वसुखङ्करः । व्याजहार ततः साधू राजन्नार्यशिरोमणे ॥ ६६ ॥
सारङ्गदुष्कर्मकृच्चोऽहं यत्कृतः केवलश्रिया । तदेतत्साधुगीर्बन्धसाम्यायस्याफलोर्जितम् ॥ ६७ ॥

महांहोराश्यरण्यानी विषयोद्यत्तृणाङ्कुरा । दह्यते दहनेनेव क्षणात्सामायिकेन वै ॥ ६८ ॥
सम्यक् सामायिकासेवा देवादिसुखदायिनी । सुधियां दुर्धियां चापि पापव्यापव्यपोहिनी ॥ ६९ ॥
श्रुत्वेति हृष्टहृद्राजा वैरं निर्मूह्य मूलतः । प्रणम्य शिरसा साधुमाससाद निजं गृहम् ॥ ७० ॥
चिरकालं विहृत्योर्वीमखण्डं भव्यमखण्डम् । प्रबोध्य सिद्धिसौधाग्रवासी जज्ञे स केसरी ॥ ७१ ॥
सार्वज्ञशासनोपासनोदारफलमीदृशम् । धन्या विज्ञाय तत्सेवाहेवाकित्वं विधीयताम् ॥ ७२ ॥

॥ इति श्रीसर्वज्ञमतसेवायां प्रथमपदोदाहरणम् ॥

अथ द्वितीयगाथायाः "पालिज्ज सीलं पुण सव्वकालं" इति द्वितीयपदमत्यन्तामलशीलगुणाविर्भावकं सोदाहरणमुन्नाव्यते—पालयेच्छीलं परयोषिज्जातिनिवृत्त्यात्मकं । योषितस्तु परपुरुषनिषेधात्मकं । पुनर्वारं वारं सर्वकालं निरन्तरमिति पदाक्षरगमनिका । पूर्वं तावत्सर्वज्ञमतोपासनोपदेशः सूचितस्तदनु पुनः शीलं पालनीयमित्यभिहितं । युक्तं हि जात्यजातरूपमुद्रिकोपरि रत्नयोजनं श्रीजैनमताराधनं तावत्सर्वधर्मेभ्यः श्रेष्ठतमं । तदाराधकः श्रावकः पुण्यप्रभावकश्शीलसंपन्नः स्यात्तदातीव प्रशंसास्पदतामास्कन्दतीति तात्पर्यार्थः ॥

दुर्लभमिह मानुष्यं तत्रापि हि निर्मलं कुलं श्रेयः । तत्रापि रूपसंपत्तस्यामपि जिनमतावाप्तिः ॥ १ ॥
तत्रापि शीलमुज्ज्वलमुदितं मनुजेषु चापि नारीषु । तत्पालने प्रयत्नः कार्यश्चातुर्यवर्यनरैः ॥ २ ॥
शीलेन विना न जनाः शोभाविर्भावभाजनं भुवने । वेगविहीनास्तुरगास्तुङ्गा अपि रङ्गदा न स्युः ॥ ३ ॥

रविमण्डलेन गगनं वनं यथा श्लाघ्यते कलभरेण । यद्वत्सलिलेन सरस्तथाङ्गिनां जन्म शीलेन ॥ ४ ॥
शीलाद्भुतिधारी स्फारीभवदुज्ज्वलोरुतरसुयशाः । पञ्चजने स्यान्मान्यो धन्यो नान्योऽयनो तस्मात् ॥ ५ ॥
स्त्रीजातौ प्राधान्यं विशेषतः शीलभूषणस्यैव । सुमहत्यपि यनवीर्यो न निष्फला श्लाघ्यतामेति ॥ ६ ॥
अत्रार्थे रोहिण्या अशोकप्रियायाः कुटुम्बवर्गस्य । संशृणुत भविकलोका अशोकानन्दतश्चरितम् ॥ ७ ॥
अस्त्यत्र भरतमध्ये स्वर्द्धेव स्वर्गतुल्यमभिरामम् । पाटलिपुत्राख्यपुरं पुरं न तादृक् पुरो यस्य ॥ ८ ॥
यत्र धनी वसति धनीभवन् जनो वर्षणेन दानस्य । श्यामीकुरुते न मुखं स मनागप्येतदाश्चर्यम् ॥ ९ ॥
यत्रोत्तुङ्गाश्चङ्गाः श्रीअर्हच्चैत्यराजयो रेजुः । उच्चममनोरथा इव दूरोज्झितपापकालुष्याः ॥ १० ॥
मित्रोद्योतविधातरि खेदेन विनाऽप्यहो खसद्रूपे । यस्य प्रतापदीपे पतङ्गवत् पतति रिपुवर्गः ॥ ११ ॥
सज्जनजनितानन्दो नन्दो नामास्ति तत्र भूमिपतिः । रतिपतिरिव मूर्त्तिधरो यः सृष्टः शंभुना प्रसन्नेन ॥ १२ ॥
श्रेष्ठी तत्र धनावहनामा कामाभिरामरूपश्रीः । अश्रीर्जगाम दूरं यस्सद्मनाच्छर्वरीव रवेः ॥ १३ ॥
सश्रीकः कमलापतिरिव विमलसद्गुणोल्लसत्तेजाः । न जनार्दनः कदाचिन्नोग्रश्चित्रं महच्चदहो ॥ १४ ॥
जायाऽजनि निर्माया सुन्दरकाया शुभे कृतोपाया । शीलगुणैः सच्छाया रोहिण्यभिधा सुधामाया ॥ १५ ॥
पररमणरमणविषये न मनसि यस्याः कदाचिदभिलाषः । किमहो मरालिकायाः कलुषाम्भःसेवनौत्सुक्यम् ॥ १६ ॥
श्रेष्ठी श्रेष्ठगुणौघस्तामनुपमगुणवतीं सतीं पृष्ट्वा । विभवार्जनस्य हेतोर्नगरान्निरगादसौ वेगात् ॥ १७ ॥

संपद्यते न विपुला देशान्तरमन्तरेण किल कमला । इति निश्चित्य स चित्ते वित्ते विहितोद्यमः समभूत् ॥ १८ ॥
तत्प्रभृति निकृतिरहिताऽवहिता स्वहितार्थसाधने साध्वी । विचचार चारुवृत्त्या सत्याचारेण चार्वङ्गी ॥ १९ ॥
नोद्भटवेषं कुरुतेऽलङ्कारं स्फारमपि न परिधत्ते । भक्षयति न ताम्बूलं न मज्जनं नाञ्जनं च दृशोः ॥ २० ॥
न हि संस्कुरुते वेणीमेणीनयना न सानुरागतया । पुरुषेण सहालापं कुरुते सुरतेच्छया रहिता ॥ २१ ॥
याश्च कुशीला महिलाः सकलास्ताः परिहरत्यसौ दूरे । शुचिरुचिशीलालङ्कृतिवती सती तिष्ठति सुखेन ॥ २२ ॥
जनयन् सरसीशोषं पोषं सवितुः प्रतापपूरस्य । संवर्धयंश्च दिवसान् रजनीयामान् लघूकुर्वन् ॥ २३ ॥
देहेषु देहभाजां सृजन्नजस्रं प्रभूतपरितापम् । पिशुन इवोद्वेगकरः प्रससार ग्रीष्मसमयोऽथ ॥ २४ ॥
रन्तुमना उद्याने तदाऽन्यदा मेदिनीपतिर्नन्दः । स्वच्छोज्ज्वलवेषधरः शशधरवत्प्रीतिदः पुंसाम् ॥ २५ ॥
मुक्ताकलापनिर्मलकलावलीमञ्जुलश्रियं कलयन् । पौरचकोरश्रेणीनयनानन्दोदयं तन्वन् ॥ २६ ॥
दीप्तसुधादीधितिवत्सौम्यगुणाधिक्यवन्धुरतरश्रीः । शुभ्राभ्रहर्म्यनगराम्बरान्तरान्निर्जगाम बहिः ॥ २७ ॥
पश्यन् विस्मेरदृशा कृशानुवद्दीप्तिभृत् पुरः कुतुकम् । प्रस्वेदमिश्रगात्रां वातायनमाश्रितां तन्वीम् ॥ २८ ॥
मूर्त्तिमतीमिव देवीमुर्वीतटमागतां शुभैः पुंसाम् । तरुणगणचित्तहरिणीं ददर्शेऽसौ रोहिणीं तरुणीम् ॥ २९ ॥
युवजनचेतःपृषतप्रहारभल्लीमनङ्गसुमवल्लीम् । दृष्ट्वा दृष्ट्या तामतिहृष्टात्मा समजनिष्ट नृपः ॥ ३० ॥

१ निकृतिर्माया. २ युवजनचेतः एव पृषतः मृगः युवजनचेतःपृषतस्तस्य प्रहारे भल्लीव.

एषा योषा कथमपि यदि मद्वशमेति रतिरिवोदारा । स्फारा भवति तदानीमनिन्दिता भोगसामग्री ॥ ३१ ॥
किमुपवनैः किमु भवनैः सयौवनैः किं धनैस्तथा स्वजनैः । यदि न मिलति ललिताङ्गी नयनद्वितयीजितकुरङ्गी ॥३२॥
इति चिन्तयन् स्वचित्ते मनोज्ञ श्यातिज्ञुर्मदाक्रान्तः । शीतलघनगहनेष्वपि द्विगुणं सन्तापमाप नृपः ॥ ३३ ॥
वेश्माजगाम कामार्दितस्ततः सत्वरं स पापमनाः । न गृहे न बहिर्वाऽपि हि सुखायते रागवशगानाम् ॥ ३४ ॥
पापप्रसूतिकामथ समाहूय दूतिकामकार्यपराम् । नरकाध्वदूतिकामिव स मदीमघया भवाभिमुखः ॥ ३५ ॥
शृणु सुश्रोणि मदुक्तं वचनं न च निन्दनाद्बिभेतव्यम् । न हि रोहिणीं विना मे मनोरतिः स्फीतिमुपयाति ॥ ३६ ॥
विन्ध्याचलवनवीथीमिव हस्ती मालतीमिव भ्रमरः । चक्षुर्विकलो दृष्टिं जलधरवृष्टिं शिखंमीव ॥ ३७ ॥
विद्यानिव सद्विद्यामनवद्यामात्मनः स्थितिं साधुः । तद्वत्स्मरति रतिप्रतिरूपां तामन्तरात्मा मे ॥ ३८ ॥
तर्ह मदीयमङ्गं तद्विरहग्रीष्मभीष्मतापेन । कुरु कैतवपाटववति तत्संयोगामृतासिक्तम् ॥ ३९ ॥
आर्यमनार्यं वेदं वचःपदं वाच्यशब्दं विश्वे । नैवं मनसि विचार्यं कार्यं कार्यं न विस्मार्यम् ॥ ४० ॥
इति वचसि भूभर्तुर्हृदि हृष्टाऽवदत् साऽतिपापिष्ठा । न हि किञ्चिदसाध्यं मे कियदेतत्कृत्यमल्पतरम् ॥ ४१ ॥
रम्भा दम्भारम्भादपि मे तव जायते सुलभा भोः । किं पुनरेषा नारी तृणायते मत्पुरस्तूर्णम् ॥ ४२ ॥
मन्त्रैरपि यन्त्रैरपि तन्त्रैरथ कार्मणैर्महामगुणैः । स्ववशीकृत्य त्वरितं दासीमिव ते करिष्येऽहम् ॥ ४३ ॥
नरमपि दृषत्कठोरं स्ववचनरचनाम्बुना विभिद्याहम् । कुर्वे द्विधा मुधा तद्बलमबलायाः कियन्मात्रम् ॥ ४४ ॥

इत्याख्यायादायालङ्कारस्फारहारवस्तूनि । रोहिण्यागारमसावुपेत्य सविकारमिदमूचे ॥ ४५ ॥
रूपं तेऽप्रतिरूपं लावण्यमगण्यमङ्गमतिचङ्गम् । रम्भागर्वारम्भापहारि सौन्दर्यमनिवार्यम् ॥ ४६ ॥
दयिते गतेऽन्यदेशं क्लेशं विरहोद्भवं कथं सहसे । सम्भोगयोगशून्यं नृजन्म वन्ध्याङ्गजप्रायम् ॥ ४७ ॥
लोभाभिभूतचित्तो वित्तोपार्जनकृते वणिग्लोकः । बम्भ्रम्यते पृथिव्यां न तद्गृहिण्यः सुखिन्यः स्युः ॥ ४८ ॥
वर्णिन्यः खलु वर्ण्याः पुण्यातिशयादवाप्ततारुण्याः । अभिलपितरमणरमणाद्याः सुखमिह भुञ्जते स्वैरम् ॥ ४९ ॥
भवतीमतिरूपवतीमिच्छति भूमिपतिः सुदति नन्दः । सर्वा अवरोधवधूरवधूय समृद्धलावण्याः ॥ ५० ॥
किमिदं विफलीकुरुषे सखे सखेदेन जीवितव्येन । निजरूपयौवनश्रियमपास्य कान्तं मनःकान्तम् ॥ ५१ ॥
धन्याऽसि त्वं तरुणीवर्गे स्वर्गेऽपि यादृशी नान्या । यद्रूपगुणावर्जितचेता नेता भुवः समभूत् ॥ ५२ ॥
रूपं यस्य न तादृग् न दोर्बलं वैभवं न चाप्यतुलम् । न हि भोगयोगसंपन्न महत्त्वं किमपि न च सत्त्वम् ॥ ५३ ॥
कृपणेन तेन किमहो वणिजा गुणजातमुक्तदुर्मतिना । दूरस्थितेन तेन हि कः प्रतिबन्धस्तवेदानीम् ॥ ५४ ॥
इत्यादिकिंवदन्तीमिह निगदन्ती ह्यतीव निर्ह्रीका । निर्ह्रीकाऽलङ्काराद्यं वस्तु समार्पयत्तस्यै ॥ ५५ ॥
न हि कश्चिदपि विपश्चित्कम्रं मुक्त्वाम्रफलमुदारमलम् । कटुनिम्बफलास्वादनलालसतामत्र खलु भजते ॥ ५६ ॥
त्वत्सौभाग्यमभङ्गुरमासीदाविर्बभूव तत्सुभगे । कुसुमशरः खलु तुष्टः पुष्टः प्राक्पुण्यसंभारः ॥ ५७ ॥

१ सह खैः ( विशिष्टेन्द्रियैः ) वर्तत इति सखा तत्संबुद्धौ हे सखे.

यस्त्वां मुक्ताळतिकामिव कर्तुं कण्ठकन्दळे नृपतिः । निर्मळतरोज्ज्वळगुणामभिवाञ्छति यच्छति सुखस्तु ॥ ५८ ॥
निजहस्ते कुरु तूर्णं प्रसद्य सद्य प्रशस्तवस्तूनि । यानीह न हि सुखम्जान्यसीमसुकृतैर्विना भुवने ॥ ५९ ॥
इति तत्समुदितवार्त्तं वार्मयमिनीव सद्गुरोः श्रुत्वा । तस्यावबोधचतुरा व्यचिन्तयच्चेतसि स्पष्टम् ॥ ६० ॥
मुग्धायन्ते विबुधा रङ्कायन्ते च तेऽपि राजानः । शिष्टा दुष्टायन्ते हहा महामोहदुर्ललितम् ॥ ६१ ॥
स्वाधीनः क्षितिभर्त्ता कर्त्ता न्यायानयाच्यनोरपि हि । पातकिनी पुनरेषा कुशीलवादप्रसादाशाम्या ॥ ६२ ॥
स्वयमन्यायासक्ता मामपि पातयति पातकाम्भोधौ । धिग्धिग्जीवितमस्याः प्रभूतपापप्रमादिन्याः ॥ ६३ ॥
क्षितिपतिरयं तु सायत्तहृशयर्विष्णुरखिलपूर्णोक्तः । प्रजविष्णुर्न हि तं प्रति कश्चिन्न हि चलति चलमत्र ॥ ६४ ॥
दर्पोद्धुरः करी किल कर्णे ध्रियते न केनचित्कचिदपि (यद्वत्) । तद्वत्कोऽपि न शक्तः कुपथाद्भूपतिं निवर्त्तयितुम् ॥६५॥
जलधिर्यदि मर्यादालोपी कोपी प्रभुर्यदा नृपे । यदि हिमरश्मिस्तीव्रस्तत्कः शरणं शरण्यानाम् ॥ ६६ ॥
एष पुनः प्रभुरस्याः पुरः स्फुरच्चारुरूपवीर्यौर्यः । मत्पतिरतिदूरस्थः पुनरहमेकाकिनी सदने ॥ ६७ ॥
कस्याग्रे पूत्क्रियते यथा तथा शीलमुज्ज्वलं ध्रियते । प्राणान्तेऽपि न धीराः स्वशीलमालिन्यमुपयान्ति ॥ ६८ ॥
क्रियते कश्चिदुपायः स्वकीयसंशुद्धशीलरक्षार्थम् । वर्ज्जितमपि हि क्षेमं व्यर्थं रक्षापरित्यक्तम् ॥ ६९ ॥
रूपश्रिया किमनया ययापि गतयाऽक्षिगोचरीभावम् । प्रतिपद्यते शरीरी क्षणेन खलु शीलशैथिल्यम् ॥ ७० ॥
योषित्ख्यातिर्नोविमर्शंसनीया जनेऽपि महनीया । यदि सापि न शीलवती तदेकतः काञ्जिकं क्वथितम् ॥ ७१ ॥

इति निश्चित्य निजात्मनि तयान्यकान्तप्रसङ्गभीरुतया । ईषद्विहस्य मधुरैर्व्याहारैर्व्याहृता दूती ॥ ७२ ॥
यदि मामिच्छति भूपतिरथ यच्छति चारुचारुवस्तूनि । तत् किमिह कथनमास्ते वैद्यादिष्टं तथाऽभीष्टम् ॥ ७३ ॥
तदधीनरूपयौवनलावण्याहं सखेऽस्मि सर्वाहम्[1] । परमेकमस्ति गुप्तं तत्संशृणु सावधानतया ॥ ७४ ॥
लोके लज्जाकारिणि मर्यादासद्गुणापहारिणि च । कर्मणि विधीयमानेऽमुष्मिन् विश्वोपहासः स्यात् ॥ ७५ ॥
छिद्रान्वेषी द्वेषी प्रायः सर्वोऽपि सत्त्ववर्गोऽयम् । तस्माद्दोषासमये प्रसरति पूरे तमिस्रस्य ॥ ७६ ॥
स्तोकपरीवारभृता भूमिभृता मद्गृहे समेतव्यम् । येन फलेग्रहिरेतन्मनोरथः सपदि जायेत ॥ ७७ ॥
इत्यादिमधुरवाण्या प्राण्यानन्दप्रदानकोविदया । कृत्वा प्रीतां दूतीं जगृहे तद्भूपतिप्रहितम् ॥ ७८ ॥
गत्वा प्रसन्नवदना सदनात्तस्याः ससंभ्रमा सापि । चक्रे शक्रेण समं सानन्दं नन्दभूपालम् ॥ ७९ ॥
तद्वदनामृतचषका[2]द्रोहिण्युक्तानि तानि वचनानि । अमृतानीव निपीयोल्ललास हृदये महीमघवा ॥ ८० ॥
भुङ्क्ते न चापि शेते कुरुते न हि रसिकगोष्ठिमिष्टेन । तुष्टेन चेतसा तामेवैकां संस्मरन्नास्ते ॥ ८१ ॥
तद्रमणलालसात्मा वासरमपि वर्षसन्निभं मनुते । तनुते रवितापादप्यधिकं तापं हि विरहोऽस्याः ॥ ८२ ॥
दुरिततमःश्यामायां श्यामायामथ निकामकामायाम् । श्यामायामनुरागी भोगी दुर्वृत्तजातस्य ॥ ८३ ॥
शृङ्गाररसनिमग्नः शृङ्गारमुदारमात्मनः कृत्वा । विरलीकृतनिजपरिधिर्वसुधाधीशः कृपाणकरः ॥ ८४ ॥

१ सर्वदिनम्. २ चषकं पात्रम्.

चेत्यादिष्टाभीष्टाध्वना मनाक् परभयादभीरुमनाः । सह सचिवेन जगाम प्रमना भवनं स रोहिण्याः ॥ ८५ ॥
यद्योगिहृदयमिव विलसद्बोधप्रदीपपरिकलितम् । श्रीकलितं सागरवद्दृष्ट्वा दृष्ट्या मुदं दध्रे ॥ ८६ ॥
रुचिरोरुचित्रशालं वसत्प्रयाणं प्रशस्यजनमालम् । विलसत्सारसहंसं यद्गिरिकुलवद्विभाति सुविशालम् ॥ ८७ ॥
तत्कालोत्थितदासीवर्गैरभ्युद्यतो विभोः प्रददे । विष्टरमुपविष्टोऽसौ रविरिव पूर्वाचल सहसा ॥ ८८ ॥
तत्रस्थः शतमन्युर्यथा तथा रूपयौवन स्वीयम् । धन्यं मन्यानोऽसौ श्रिया दिदीपेऽधिकत्वेन ॥ ८९ ॥
रूपेण जिताप्सरसं लोचनयुगलेन रोहिणीरमणीम् । पश्यन् भूयो भूयोऽप्यमृतास्वादाधिकं मेने ॥ ९० ॥
विविधैर्मधुरालापैश्चेत प्रीतिप्रदैर्नरेन्द्रस्य । सा रञ्जयितुं लग्ना मनो मनोज्ञाकृतिं दधती ॥ ९१ ॥
सज्जनहृदयविशालं स्थालमिलायामथाग्रतः प्रददौ । मधुरैः फलै रसालैः प्रपूरितं स्फुरदुरुज्योति ॥ ९२ ॥
अथ सहास्यः प्राज्ञाः स्वामिन्यादेशसाधनालसाः । आनिन्यिरे प्रशस्तानतिसरसान् रसवतीभेदान् ॥ ९३ ॥
क्षुद्वेदनापनोदकहृन्मोदकमोदकादिपक्वान्नैः । वरशालिदालिनानाव्यञ्जनभेदैरतिप्रचुरैः ॥ ९४ ॥
भोजितवती सती सा स्वकीयहस्तेन भक्तियुक्तिभरैः । आज्यैः प्राज्यैरशनैः स्वाद्यैः स्वाद्यैरतिस्वाद्यैः ॥ ९५ ॥
अथ सा सुशिक्षिताभिः सखीभिरत्यन्तदिव्यवस्त्रदलैः । श्वेतैः पीतैररुणैः कृष्णैर्नीलैर्महारम्यैः ॥ ९६ ॥
पिहिताननानि निर्मलशुचिशीतलपानकास्पदानि मुदा । आनाय्य पुरो नृपतेरढौकयत्तृप्तिमोदकृते ॥ ९७ ॥

प्रेक्ष्य पयःपात्राणि श्रद्धामधिकाधिकामसौ दध्रे । पानकविषये विषयेच्छया विहरतः क्षितेः प्रणयी ॥ ९८ ॥
नवनववसनाच्छादनरम्याम्नःपानमाचरन्नृपतिः । सर्वत्राप्येकरसं पयसः समवाप पापमनाः ॥ ९९ ॥
तस्माद्विस्मितचेता नेता पृथ्व्याः पृथूल्लसत्तृष्णः । तामित्याह सुधारससदृग्गिरा (ग्गी) रञ्जयन् हृदयम् ॥ १०० ॥
नानाविधैः पिधानैः स्थानैः किमु भिद्यते रसः सुभगे । सर्वत्राप्येकरसं पयः प्रतीतं मया नान्यत् ॥ १०१ ॥
भवदुक्तमिदं सत्यं जानन्नपि देव नैव जानीषे । आलोचय तत्त्वधिया सुधियामग्रेसर क्ष्माप ॥ १०२ ॥
यदि न भवति रसभेदः स्थानैर्विविधैः पिधानकैश्चापि । तत्किमहो तव नवनवरमणीरूपे मनो रमते ॥ १०३ ॥
राजन् स्वयमेव भवान् विद्वान् किमपीह तदपि ते वच्मि । वेषविशेषैर्वपुषः प्रविभासन्ते स्त्रियः प्रशस्यतराः ॥ १०४ ॥
वैषयिकरसस्यापि स्फुरति कथञ्चिद्विभिन्नता किमहो । प्रायः शरीरभाजां परमेतन्मोहविस्फुरितम् ॥ १०५ ॥
सर्वा अप्येकरसा वशाः सुरूपास्तथाप्यतिविरूपाः । नृप निर्विचारता ते न चारुतामञ्चति नितान्तम् ॥ १०६ ॥
सर्वेऽपि मोहवशगाः सत्त्वास्तत्त्वावबोधमुग्धधियः । विषयव्याकुलिततया शुभाशुभं नो विदन्त्येते ॥ १०७ ॥
नवनवरूपाः सुन्दरवेषास्तोषावहा जने योषाः । बहिराडम्बर एष सर्वोऽपि मतिभ्रमं कुरुते ॥ १०८ ॥
जलधिर्जलस्य पूरैर्न वेन्धनैरपि घनैर्यथा वह्निः । न हि तद्वत्कामसुखैरसुभाजस्तृप्तिमुपयान्ति ॥ १०९ ॥
को न हि मुह्यति जन्तुस्तारुण्ये रूपसंपदाकीर्णे । ऐश्वर्येऽप्यतिवर्ये विषयेष्व(ति)सरसरूपेषु ॥ ११० ॥

१ व्याकुलः.

दुर्बलबलिनामवनात्त्वमेव जनकोपमोऽसि जगतीश । स्वयमेवान्यायपथे प्रवर्तसे यदि स्वज्ञानात् ॥ १११ ॥
अज्ञानात्सुदिनकराद्यदा कदाचित्तमोजराश्च रवेः । अमृताद्यदि विषलहरी तत्कः शरणं शरण्यानाम् ॥ ११२ ॥
सुखमसुखरूपमेव हि विषयजमिह तत्त्वतो विमृष्टमहो । कामः किमु दग्धधियां पेयूषमतिं सतां तनुते ॥ ११३ ॥
ये परवनिताविरता निरताः सन्न्यायवर्त्मनि प्राज्ञाः । ते धन्याः कृतपुण्या नैपुण्या जगति विख्याताः ॥ ११४ ॥
इत्यादियुक्तियुक्तामुक्तामनया निशम्य मुग्धगिरम् । मोहमहाविषलहरीसंहृतिपीयूषरसकुम्भाम् ॥ ११५ ॥
नृपतिः पदकमले पतः किल वृद्धत्वसरलमनाः । उद्घटितविवेकोज्ज्वलचक्षुस्तामेवमाचष्ट ॥ ११६ ॥
त्वं मम जननी जनकः स्वसा त्वमेवासि देवताऽपि गुरुः । पुण्योपकारकारिणि पापनिवारिणि नमस्तुभ्यम् ॥ ११७ ॥
प्रायश्चपलाश्चपलाः स्त्रियो वयोरूपसंपदोपेताः । दृश्यन्तेऽत्र जगत्यां तासु सुशीलाः पुनर्विरलाः ॥ ११८ ॥
अथवा धवलाजातिः सा जज्ञे धवलयन्ती सतीव्रतं । गुणवत्याऽत्र भवत्या अभ्रजयत्या भुवः पीठे ॥ ११९ ॥
मकरध्वजतस्करतः शीलोज्ज्वलरत्नरक्षिका भवती । सुन्दरि शूरमतवति नाम्नाऽस्यबला पर न कृत्येन ॥ १२० ॥
त्वन्मतिविश्वसितमना यदहं नरकान्धकूपमध्येऽस्मिन् । प्रपतन्नपि सदयतया समुद्धृतः साम्प्रतं सुतनु ॥ १२१ ॥
दृष्टाः कस्य न भोगाः कस्यानिष्टास्तथा वियोगाः स्युः । एकाऽसि त्वं साध्वी परमेका न त्वदन्या स्त्री ॥ १२२ ॥
इत्यादितद्गुणस्तुतिकृत्या सत्यापयन्निजां रसनाम् । धामाजगाम राजा मानसमिव राजहंसः स्वम् ॥ १२३ ॥
अमितैर्वाणिज्यशतैः प्रचुरतरं द्रविणमर्जयित्वाऽसौ । कतिपयदिवसैः श्रेष्ठी धनावहः प्राप निजसदनम् ॥ १२४ ॥

प्रेक्ष्य प्रसन्नवदनामनुरागवतीमतीव निजकान्ते । चन्द्रकलामिव जलधिर्हर्षोत्कर्षं चचार भृशम् ॥ १२५ ॥
श्रुत्वा कदाचिदास्याद्दास्याः स्वागारमागतं नृपतिम् । रोहिण्युज्ज्वलशीले मालिन्याशङ्कया व्यथितः ॥ १२६ ॥
स्त्रीजातिः खलु चटुला पवनादपि सा यदा सुरूपवती । अकृतशीला सा कथमुत्करति क्षितिपतेः पुरतः ॥ १२७ ॥
गृहमागते नरेन्द्रे कथमुज्ज्वलशीलता गृहिण्याः स्यात् । मार्जारे तीरस्थे न हि दुग्धस्थालिकाऽक्षुण्णा ॥ १२८ ॥
क्षुत्पीडितस्य पुरतः सरसा रसवत्यहो कथं तिष्ठेत् । न हि कुसुमिता लताऽपि हि विमुच्यते षट्पदेनापि ॥ १२९ ॥
न हि कामी कामिन्या एकाकिन्याः शशीव यामिन्याः । सङ्गतिमेत्य दुरात्मा स शीललोपं विना स्थाता ॥ १३० ॥
इत्याद्यनल्पमानसकुविकल्पोल्लोलमालयाऽऽकुलितम् । आत्मानमुदधिकल्पं चकार रजनीक्षणे श्रेष्ठी ॥ १३१ ॥
तस्याः शीलकलङ्काशङ्कापङ्कापहारमिव कर्तुम् । कुर्वन् शीतलभावं तदङ्गसंतापविनिवृत्त्यै ॥ १३२ ॥
तं तर्जयन्निवोच्चैर्गर्जितरावैरतीवघोरतरैः । अथ भापयन्निवामुं तडिद्चमत्कारकृत्यङ्गात् ॥ १३३ ॥
तावदतर्कित एवाकस्माद्विस्मापयन् जगल्लोकम् । आगात्पयोदसमयः शमयन् वनवह्निदावभरम् ॥ १३४ ॥
शीलोज्ज्वलतरतेजःपुञ्जे सर्वत्र विस्तृते सत्याः । चन्द्रार्कयोः प्रभायाः प्राधान्यं किमिह तज्जाहे ॥ १३५ ॥
यावत्सप्तदिनीं घनवृष्टिः स्पष्टाऽत्र समजनिष्ट भुवि । सर्वं कृतमेकार्णवमुर्वीवलयं पयःपूरैः ॥ १३६ ॥
तस्मान्मन्दाकिन्याः प्रससार पयोभरः क्षणेनैव । स्थूलानतिदृढमूलान् वृक्षानुन्मूलयामास ॥ १३७ ॥

१ अस्पृष्टा.

शाम्यन्ते स्म ग्रामा आरामाश्चापि सफलपुष्पभराः । प्रसृते पयःप्रवाहे मनुजैरतिभूरयगाहतरे ॥ १३८ ॥
नगरं पूर्णं तूर्णं बहिरायातैः शतैर्नृनारीणाम् । नगरद्वाराणि नृपस्तदा रुरोधोद्भुरकपाटैः ॥ १३९ ॥
प्रबलानिलोच्छलज्जलपूरैरतिभूरोरुकल्लोलैः । प्रसरणशीलैरासीत् पुरमखिलं कलकलाकीर्णम् ॥ १४० ॥
हा दैव दैव जीवनपरं हि यज्जीवसहतेरभवत् । तज्जीवनमपि जीवान्तकृत्कथं निर्ममे विधिना ॥ १४१ ॥
किमु कुर्मः क नु यामस्त्रस्ताः कस्याश्रयाम इह शरणम् । मरणं तीरायातं ननाश खलु जीविताशा ॥ १४२ ॥
इति जनशतवदनोद्गतदीनरवाकर्णनात्सकरुणात्मा । दुर्गोपरि झटिति महीशिवा स तावदित्याख्यत् ॥ १४३ ॥
अहह कथं पुरमेतत्सकलं सलिलैरलं विसर्पद्भिः । मम पश्यत एव जयात्संह्रियते हा कथं क्रियते ॥ १४४ ॥
स हि कश्चिदस्ति जगति ज्ञाता ख्यातात्मिधः सुधीरमनाः । यो जगदेतद्रक्षति निःशरणं दीनदीनमुखम् ॥ १४५ ॥
तावद्गगनोपरि गीर्दैवी प्रादुर्बभूवत्स्वनिनादे । आविर्बभूव लोकानां शोकान् कुर्वती महती ॥ १४६ ॥
रोहिण्यस्ति सतीव्रतमादधती गुणवतीतरा सुदती । तामाहूय बहुमानादसमाना भूपते त्वरितम् ॥ १४७ ॥
सा स्वयमेव करिष्यति सुख हरिष्यत्युपप्लवं सकलम् । किं बहुभिर्जल्पितैः स्यान्मन्त्रैर्यन्त्रैस्तथा तन्त्रैः ॥ १४८ ॥
इत्याकर्ण्य तदीयामुदारवाचं शुभं परित्यज्य । रोहिण्युत्तमसाध्वीमाहूय महादरेणैताम् ॥ १४९ ॥
आचख्यौ क्षितिजानिः स्मर्त्ता तन्नीलसपदः सपदि । सत्यसतीव्रतधारिणि कारिणि पुण्यस्य कुरु शान्तिम् ॥ १५० ॥

---

१ जलम्

रक्ष महासति लोकं शोकं समुपागतं मरणभीत्या । सत्याः किमसाध्यं किल जनतायास्त्वमसि जननीव ॥ १५१ ॥
क्वापि प्रयाति तरसा किमु दिनपतिदीप्तिमन्तरेण तमः । चित्रकवल्लीं हि विना न चक्षुरुद्घटति चाषस्य ॥ १५२ ॥
त्वामन्तरेण रोहिणि सुकृतारोहिणि हरिण्यघश्रेण्याः । कः स्याज्जगतस्त्राणं पतितस्योपद्रवाम्भोधौ ॥ १५३ ॥
इत्युक्ते सा दिव्यं नव्यं शुचि सिचयमाशु परिधाय । प्रध्याय नमस्कारं सारं श्रुतरत्नकोशस्य ॥ १५४ ॥
तदनु शुचिशीललीलावती प्रतीतार्हतार्हतरधर्मा । दुर्गारूढा प्रौढामिति वाणीमाह साहसिनी ॥ १५५ ॥
यद्यास्ते मम शीलं निश्चलमकलङ्कमद्य यावदहो । चेतःकायवचस्त्रिकशुद्ध्या सम्यक्तयाऽऽराद्धम् ॥ १५६ ॥
गगनोत्तुङ्गतरङ्गे गङ्गे सङ्गेन दलितकालुष्ये । स्वाम्भःपूरप्रसरं संहर दरमपहर नगर्याः ॥ १५७ ॥
इत्याख्याय सती सा करकमलेनास्पृशज्जलं यावत् । तावत्सकलं सलिलं ननाश पवनादिवाभ्रभरः ॥ १५८ ॥
विषमिव जाङ्गुलविद्याऽतिशयात्सूर्योदयादिवोरुतमः । तत्करसंस्पर्शवशाज्जग्मुः सर्वाणि वारीणि ॥ १५९ ॥
शीलद्रुमरोहिण्याः पुरीजनानन्दचन्द्ररोहिण्याः । गुणवर्णनमुखरत्वं बभाज सर्वोऽपि पूर्लोकः ॥ १६० ॥
कृतपुण्या नैपुण्यातिशयात्किमु भारतीयमवतीर्णा । मूर्तिमती कल्पलता स्त्रीजातौ किमुदयं प्राप्ता ॥ १६१ ॥
नास्याश्चरणनमस्या कस्याघमगाधमाशु नाशयति । सद्गुणभणितिरमुष्याः सौख्याय न कस्य जायेत ॥ १६२ ॥
जय जय महासतीव्रतधारिणि दुःखौघवारिणि जनानाम् । परमप्रमोदकारिणि निस्तारिणि नगरलोकस्य ॥ १६३ ॥
तव शीलरत्नममलं समलङ्करणं समस्तवनितानाम् । यन्निर्दूषणभूषणवशातः सन्मान्यताऽत्र भवेत् ॥ १६४ ॥

किं कीर्त्यते जयत्याः सत्याः सत्यार्जवप्रगुणमत्याः । प्रससार विश्वविश्वे सौरभ्यं यद्यशोराशेः ॥ १६५ ॥
शीलाविरलतुल्या कुल्या करुणासुधारसश्रेण्याः । साध्वाचारवतीयं जयति जगत्युत्तमा साध्वी ॥ १६६ ॥
इति जनशंसकृतगुणगणवर्च(र्ण)नमात्मनीयमात्मकर्णाभ्याम् । शृण्वानाऽपि न गर्वं स्वमनसि धत्ते मनागपि सा ॥१६७॥
सन्मानिता नृपतिना नानाविधरत्नकाञ्चनार्पणतः । त्वमसि स्वसाऽस्मदीयाऽतः परमित्युक्तिमुक्तया सा ॥ १६८ ॥
शीलकलङ्काशङ्कापङ्कालेपेन यो हि मलिनमनाः । आसीदविदितसत्त्वः सोऽपि श्रेष्ठी भृशं मुमुदे ॥ १६९ ॥
धन्योऽहमस्मि यस्येदृशी कुशीलत्वशीलकालुष्या । निर्मायाऽजनि जाया सद्मायातुलितवनयीली ॥ १७० ॥
सर्वासामबलानाममलद्युति वदनपङ्कजं विदधे । इति पुरपरिजनयोषित्स्त्रियदैरुत्कीर्त्यमानगुणा ॥ १७१ ॥
सभाजगाम सुदती मनस्यमन्दं प्रमोदमादधती । ददती दानममानं सन्मान धार्मिकेष्वददात् ॥ १७२ ॥
कृत्वाऽमतः सतीं तामवनीपतिरुत्सवैर्नवैर्बहुभिः । चैत्यनमस्यामकरोज्जिनधर्मोद्भाविनीं विधिना ॥ १७३ ॥
सम्यक्त्वशीलनिश्चलचेता नेता नृणामभूत्तितराम् । तच्छीलमहामहिमाप्राग्भारमपारमालोक्य ॥ १७४ ॥
तामभिवन्द्याघव्यापनोदिनीं मोदिनीं परिजनस्य । भूमिपतिर्निजसदनं संप्राप विपापहृष्टमनाः ॥ १७५ ॥
श्रेष्ठिपनायकमुख्या वृद्धाः पौराः सुशीलमाहात्म्यम् । परिज्ञाप्य भेजिरे खलु परवनितारमणमतिविरतिम् ॥ १७६ ॥
रोहिण्युज्ज्वलशीलप्रतिपालनलालसाऽलसा दुरिते । देवगुरुधर्मरक्ता तथा विरक्ता भवात्सुखं तस्थौ ॥ १७७ ॥
सा प्रतिपाल्य निजायुः प्रतिपूर्णं शुद्धधर्ममाराध्य । आराधना विधाय च सम्यग्बुद्ध्या मनःशुद्धा ॥ १७८ ॥

प्रान्ते विहितानशना व्यसनासावप्यनाप्तमिथ्यात्वा । त्रिदिवपदवीमवापद्यापद्यात्या विनिर्मुक्ता ॥ १७९ ॥
भुक्त्वा भोगान् विविधान् वैबुधभवसंभवान्नृजातीयान् । नैःश्रेयसीं गतिमपि प्राप्स्यति शीलानुभावेन ॥ १८० ॥

शीलप्रभावेन यशः समुज्ज्वलं, शीलप्रभावाज्ज्वलनं जलं भवेत् ।
स्थलीभवेद्भूरिपयाः पयोनिधिस्तत्किं न यच्छीलगुणेन जायते ॥ १८१ ॥

यत्सौभाग्यमभङ्गुरं गुरुतरं यच्चोज्ज्वलं सद्यशः, शौर्यं यद्भुजयोरजेयमतुलं वीर्यं यदार्योचितम् ।
उग्रव्याघ्रमहोरगामयभियो यद्यान्ति दूरं जवाज्जीवानामवशं समेत्यपि वशं तच्छीललीलायितम् ॥ १८२ ॥

इत्याकर्ण्य सकर्णवर्ण्यमतुलं शीलस्य सेवाफलं, रोहिण्या रमणीशिरस्सु विलसच्चूडामणेर्धर्मिणः ।
कुर्वीध्वं शुचिशीलनिर्मलगुणालङ्काररक्षाविधौ, यूयं यत्नमतीव देवमनुजश्रेयःश्रियः स्युर्यतः ॥ १८३ ॥

॥ इति शीलपालनोपरि रोहिणीदृष्टान्तः ॥

अथ द्वितीयगाथायास्तृतीयपदं व्याख्यायते—"न दिज्जए कस्स वि कूड आलं" इति, पूर्वमुक्तं सर्वकालं शीलं पाल्यते, शीलवान् भूत्वा यदि कस्यापि कूटं कलङ्कं न दत्ते तर्हि युक्तमेवैतत् । शीलवतः शोभाधिक्यं स्यादिति तदभिप्रायेणेति हेतोर्न दीयते कस्याप्यसद्भूतः कलङ्कः ।

अत्रार्थे वृन्दायाः कथा कथ्यते—

शालन्ते शालयो यत्र ज्येष्ठमासेऽपि शाद्वलाः । शालिग्रामोऽभिरामोऽस्ति श्रेष्ठी तत्रास्ति सुन्दरः ॥ १ ॥

दीनानाथजनानेष पालयन्नतिवत्सलः । कृपापात्रमभूद्बाढमतिथिप्रियकारकः ॥ २ ॥
नर्तकीव ननर्त्तास्य कीर्त्तिर्विश्वान्तराङ्गणे । परोपकारिणां नृणां कः श्लाघां कुरुते न हि ॥ ३ ॥
तत्कीर्त्तिद्वेषिणी मुग्धा वृद्धैका ग्रामवासिनी । तं निन्दति सदाकालमालवानपरायणा ॥ ४ ॥
विदेशयानेष पापात्मा विश्वासापन्नमानसान् । निपात्य धनलाभार्थं गर्त्तान्तः क्षिपति ध्रुवम् ॥ ५ ॥
मायावी मधुरालापी पापी वञ्चकमुख्यकः । प्रातः को नाम गृह्णीतेऽमुष्य वृद्धेत्यजापत ॥ ६ ॥
अयस्कुशीं चोरयित्वा सूचीमेष प्रयच्छति । धर्मिताऽस्याश्च विज्ञाता किमतः परमुच्यते ॥ ७ ॥
अन्यदा कोऽपि निश्यागात् पथिकः क्षुधयातुरः । तद्ग्रामे वृद्धलोकेभ्यस्तृष्णाक्षुद्भोजनाशया ॥ ८ ॥
तदा च तद्गृहे किञ्चिद्भोज्यं नोद्धरितं खलु । स दानव्यसनी बाढमतप्यत निजे हृदि ॥ ९ ॥
ततः कस्याश्चिदाभीर्याः सदनात्तक्रमानयत् । सघृष्टिकं[1] याचनकं भोजयामास सादरम् ॥ १० ॥
स ममार द्राक्षादेव दैवसूत्रमनीदृशम् । प्रतिकूले विधौ पुंसां हितमप्यहितायते ॥ ११ ॥
आभीरिकाशीर्षगायां तक्रोपायां यतोऽपतत् । व्योमाध्वयात्शकुनिकामुखाद्विमुखाद्विषम् ॥ १२ ॥
प्रातर्जेषुर्ण जरती दृष्ट्वा कार्पटिकं मृतम् । दृष्टं दातुश्चरित्रं भो दुराचारोऽयमीदृशः ॥ १३ ॥
खोजाजिजगत्विषेण हताऽनेन निपातितः । खास्या ग्रन्थिधनं कूटाद्राकः कोऽपि याचकः ॥ १४ ॥

१ घृष्टिः कन्दविशेषः

इत्थं पूत्कुर्वती वृद्धा मौखर्येण पुरान्तरे । कूटमारोपयामास कलङ्कं दानदातरि ॥ १५ ॥
अदृष्टमश्रुतं कर्म नर्मणाऽपि हि कस्यचित् । न हि प्रकाशयेद्विद्वानसद्भूतं तु नोचितम् ॥ १६ ॥
असद्भूतं वदेद्यस्तु दोषं दोषैकदृङ्नरः । स हि तद्दोषभागी स्यात् परत्रात्राप्यसंशयम् ॥ १७ ॥
अथ कार्पटिकी हत्या भ्रमन्ती चिन्तयत्यसौ । कस्याहं संस्पृशाम्यङ्गं सङ्गं कस्य भजेऽधुना ॥ १८ ॥
दाता तावद्विशुद्धात्मा सर्पोऽङ्गः पारवश्यभाक् । सर्पाशिनी शकुनिकाऽऽभीरी मूर्खात्मिका तथा ॥ १९ ॥
तस्मात्कोऽद्य मया ग्राह्य एवं संचिन्त्य चेतसि । वृद्धामेवाश्रयत्त्वत्या परावर्णपराननाम् ॥ २० ॥
तत्क्षणादेव सा जज्ञे मषीपुञ्जमलीमसा । हत्यापातकपङ्केन लिप्ताङ्गीव व्यलक्ष्यत ॥ २१ ॥
कुष्ठदुष्टामयार्ताङ्गी बीभत्सा कुब्जिकाऽजनि । दैवानुभावात्तत्कालं धिङ्मृषादोषरोपणम् ॥ २२ ॥
ईदृग्विधामिमां वीक्ष्य विलक्षवदनश्रियम् । लोकः पातकिनीं प्रोचे निनिन्द च मुहुर्मुहुः ॥ २३ ॥
कलङ्कदानमीदृक्फलमालोक्य पूर्जनः । प्रायोऽभवत् परावर्णवादोद्भापपराङ्मुखः ॥ २४ ॥
इत्थं पौराणिकीं श्रुत्वा कथामवितथामिमाम् । कलङ्कदानेऽनौत्सुक्यं कुर्यादार्यजनोचितम् ॥ २५ ॥

॥ इति कलङ्कदाने भोलत्करिकाकथा ॥

एवं कूटकलङ्कमददानः प्राणी पश्चिमभवदुःखजातं छिन्द्यादिति समग्रकाव्यस्यार्थः समर्थितः सोदाहरणः ॥

पयासियव्वं न परस्स छिद्दं, कम्मं करिज्जा न कया वि रुद्दं ।
मित्तेण तुल्लं च गणिज्ज खुद्दं, जेण ज्जविज्जा तुह जीव भद्दं ॥ ३ ॥

व्याख्या—पूर्वकाव्यतार्तीयिकपदे कलङ्कदानं सर्वथा निषिद्धं, तदनु परच्छिद्रान्वेषणमप्यसङ्गतमेव, यः कश्चित् परस्मिन् कलङ्कं नारोपयिष्यति स परच्छिद्रान्वेष्यपि न स्यात् । अत्रार्थेऽमेतनकाव्यव्याख्यामाह—"पयासियव्वं" इति प्रकाशयितव्यं परस्यात्मव्यतिरिक्तस्य छिद्रं दोषोद्घट्टनं, विशेषतस्तु गुरोर्धर्मदातुर्दूरीकृतजन्मानि छिद्राणि न निजाखनीयानि, यतः श्रीदशवैकालिके प्रोक्तं—"एवं तु अगुणप्पेही गुणाणं च विवज्जओ । तारिसो मरणंते वि नाराहेइ संवरं ॥ १ ॥ मणुं सुणेइ कसेहिं मणुं अप्पीहिं पिढइ । न य दिट्ठं सुयं सव्वं भिक्खु अक्खाउमरिहइ ॥ २ ॥" तथा च—"संतेहिं असंतेहिं० । एवं मत्वा गुरोर्गुणा एव ग्राह्या न तु दोषाः । अथ यः कश्चिन्मायमुखो दुर्मुखो जापते दोषान् स तु दुःखभागी स्यात् अनार्यः सङ्गमस्थविरशिष्यदत्तवदिति । तथा कर्म रौद्रं न कुर्यात् । तथा क्षुद्रं दुष्टमपि मित्रेण तुल्यं गणयेत् । एवं कुर्वतस्तव रे जीव भद्रं भवेत् इति तात्पर्यार्थः ।

अथ छिद्रान्वेषणे दत्तकथा कथ्यते—

कोल्लयरम्मि य नयरे नयरेसारंजियासिस्सजणम्मि । आसी संगमथेरायरिया मसुसाहुपरियरिया ॥ १ ॥
सुवदुस्सुया य खम्मयविहारिणो धारिणो गणिगुणाणं । पायबलविम्महीणा एगठाणे निवासिस्सा ॥ २ ॥
संपत्ते दुब्भिक्खे दुक्कालकरियम्मि लोयम्मि । अण्णदेसेसु तेहिं विसज्जिया साहुणो नियया ॥ ३ ॥

नवत्नागे काळणं तं खेत्तं अप्पणाय विहरंति । अंरिक्षपराविंत्तिं अपमत्ता ते पकुव्वंति ॥ ४ ॥
पुरदेवया य तेसिं गुणेहिं आवज्जिया कुणइ वत्तिं । तेसिं सीसो दत्तो विहरित्ता सुचिरमायाउ ॥ ५ ॥
पस्सामि कहं वट्टंति सूरिणो सुहिय असुहिया वावि । पुव्विल्ले चेव उवस्सयम्मि दिठ्ठा सुठ्ठेण ॥ ६ ॥
निच्चनिवासी एए उवस्सए तेसि नो पविठ्ठो सो । आसन्नतणकुडीरे ठिउं गुरुं नमिय मायाए ॥ ७ ॥
जाणितु भिक्खवेलं पत्तं गहिउं गुरूण पुठ्ठीए । लग्गो य अवन्नाए पन्नापविहीणचित्तो सो ॥ ८ ॥
विहरंति ते निसंगा नीउच्चकुलाइं कालदोसेण । पाविंति अंतपंताइं स संकिलस्सइनियमणम्मि ॥ ९ ॥
न हु सुठ्ठु सठ्ठगेहाइं दंसेई एस सढसहावित्तो । खरड्डत्तणउं सो विन्नाउं संगमगुरूहिं ॥ १० ॥
तच्चित्तरक्खणत्थं गुरू पविठ्ठो धणड्ढगेहम्मि । रेवइदोसग्गहिउं तदंगउं रोयइ सया वि ॥ ११ ॥
संजाया छम्मासा ईसिं न सहइ सिसू समाहिं सो । मा रुयसित्ति भणित्ता चप्पुडिया वाइया गुरुणा ॥ १२ ॥
तव्वयणायन्नणउं तक्कालं रेवई सुरी नठ्ठा । सो रहिउं रोयंतो तुठ्ठो जणउं य सुठ्ठुयरं ॥ १३ ॥
पडिलाभिया य गुरुणो मोयगमाईहिं गुरुयभत्तीए । सरसाहारं दाउं विसज्जिउं सो विचिंतेइ ॥ १४ ॥
दावियमेगं तु कुलं विरस्स एएण मे सयं भमइ । सिरिमंघरेसु सव्वं संपज्जइ तत्थ एयस्स ॥ १५ ॥
एयं विमंसमाणो उवस्सयं सूरिसंतियं न गउं । आयरिया सुइरं हिंडिऊण समुवागया वसहिं ॥ १६ ॥
अंतं पंतमसित्ता सुत्थावत्था कुणंति सज्झायं । गोयरचरियपडिक्कमवेलाए गुरूहिं सो भणिउं ॥ १७ ॥

आखोइसु अक्कतणे असणं सुमेहिं चेव सममहयं । आहिंमिडं किमाखोएमि गुरूहिं समुल्लवियं ॥ १८ ॥
सुमए घाईपिंमो सुत्तो सो सो कहेइ कुस्सीसो । सुलुमाई परठिहाई पिक्खसि नो अप्पणिक्काई ॥ १९ ॥
इक्कं पि नत्थि खोयस्स खोयणं जेण नियइ नियदोसे । परदोसपिक्खणे पुण खोयणखक्काई जायंति ॥ २० ॥
एवं थीमसतो गओ कुमीरसियं कुसीसो सो । इत्थंतरे सुरीए गुरुपयपक्खमेक्कमरीए ॥ २१ ॥
तप्पसायं मुणिउं रुठाए तस्स सिक्खवणहेउं । संजाय अन्धत्ते घेठघियमंधयारम्मि ॥ २२ ॥
मेघुन्नई पसरिया तफासं मारुउं खरो जाउं । कक्करेणुभायणपरायणो तस्स सीसुघरिं ॥ २३ ॥
नीउं पाइरइ गुरुं पत्थरखंडेहिं आहणिज्जंतो । एहि इहं आयरिया नयंति जो वच्च करुणाए ॥ २४ ॥
घणरइ नाहमीसिं पेछामि पहं महंधयारम्मि । तो सेहिं करंगुलिया आमुसिऊणं समुल्लविया ॥ २५ ॥
दीवक्किदियम सो सा सहसा पज्जखियमिह समावघा । छक्कोउं संजाउं तो कुस्सेहो विमसेइ ॥ २६ ॥
एस छयस्सयमन्ने सुगुत्तयं दीवयं पि रक्खेइ । तत्तो अमरी रुठा तं कुच तजिउं खग्गा ॥ २७ ॥
निस्सज्झाय अछन्निर अविणीय निकिठ चिठ पाविठ । गुरुठिहाणि पखोइसि न हु खज्जसि नियगुरूहिं तो ॥ २८ ॥
अक्ष ममाहिं तो तं अविणीयत्तणफलं सु पावेहिसि । इय सुणं निठुरदंरूएण सो ताम्मिउं सीसे ॥ २९ ॥
तो सो जयन्नीयमणो निवडिय चलणेसु सूरिपायाणं । खमो खमो खामेइ नवरि नामेइ नियसीसं ॥ ३० ॥
मिच्छामि दुक्कडं देइ खेइ तस्सेव सरणमच्चंत । न पुणो एवं काहं पडिवज्जइ सुगुरुपयजत्तिं ॥ ३१ ॥

सूरीहिं धीरविउ मा जायसु सीस निप्पउ होसु । उवसंता वि सुरी सा सासणरक्खं कुणेमाणी ॥ ३२ ॥
नवजागेहिं खेत्तं काउं विहरंति आयरियपाया । निम्मम निरहंकारा संसारासारयाचउरा ॥ ३३ ॥
जाउ सग्गइजायणमेसिं सीसो वि सग्गुणग्गाही । अमरीगिराइ वुद्धो आलोइत्ता सुहं पत्तो ॥ ३४ ॥

॥ इति छिद्रान्वेषणे दत्तकथा ॥

अथ तृतीयगाथाया द्वितीयपदं व्याक्रियते—"कम्मं करिज्जा न कया वि रुद्दं" पूर्वस्मिन् पदे परछिद्रप्रकाशनं निषिद्धं, तदपि सङ्गतं तदैव यदि रौद्रं घोरं कर्म न क्रियते, अतः प्रोच्यते—कर्म कुर्वीत न कदापि रौद्रं, धर्मी जनः कदाचिद्रौद्रं दीपणं कार्यं न कुर्यादित्यर्थः । यस्मिन् दत्ताशर्मणि कर्मणि निर्मिते दुरन्तदुरितशतोप ( निपातः स्यात् एतादृशं कर्म कल्याणेप्सुना प्राणिना न कार्यम् । अत्रार्थे उज्झितकुमारकथा, सा चेयं—पञ्चमगणभृज्जम्बूस्वामिनं प्रति वक्ति—

वाणिज्यग्रामनाम नगरं, तस्योत्तरपौरस्त्यदिग्भागे दूतिपलाशनामोद्यानं । तत्र च सुधर्माभिधयक्षचैत्यमासीत् । तत्र नगरे मित्राभिधानो राजा । तस्य महिषी श्रीरित्यभिधयाऽभवत् । तत्रैव नगरे कामध्वजा नाम वेश्या गणिकासहस्रस्वामिन्यासीत् । तत्रैव च नगरे विजयमित्रनामा सार्थपतिः परिवसति । तस्य सुभद्रा भार्याऽभूत् । तयोरुज्झितनामा पुत्रोऽभवत् । तदा तत्र श्रीमन्महावीरस्वामी चरमतीर्थाधिपतिः समवसृतः । प्रजा धर्मश्रवणार्थं प्राप्ता । राजाऽपि कोणि-

१ इत आरभ्य १८ पत्रस्य २५ पंक्तिस्थभवतीत्येतदवसानः सर्वः पाठः मूलप्रतौ पत्रद्वयाभावात् कृतेऽपि गवेषणे प्रत्यन्तरलाभाभावाच्च स्थानाशून्यार्थं विपाकसूत्रतः साररूपेण विद्वन्मुनिना लेखयित्वा मुद्रापितः.

कराभवत् सर्वेजयस्तत्र समागात्। भगवता सराजपर्षदि जीवाजीवादिहेयोपादेयज्ञेयविवेचनरूपो धर्मोपदेशः प्रददे। ततः पर्षदः स्वस्थाने गमनं। इतश्च महावीरभगवतः प्रथमगणधर इन्द्रभूतिनामा भगवदाज्ञापूर्वं गोचरचर्यार्थमुच्चनीचकुला-न्यटन् राजमार्गे समागतः। स च तत्रैकं पुरुषं सच्छिन्नकर्णनासिकादिमध्यगतमपश्यत्। तं च पुरुषं बीभत्सनेपथ्यं स्वशरी-रादेव त्रोटितानि सूक्ष्ममांसखण्डकानि राजपुरुषैः खाद्यमानं ताड्यमानं "नो खल्वस्य कोऽपि राजा राजपुत्रादिर्वाऽपरा-ध्यति, किं तु तस्य कर्माण्येवापराध्यन्ति" इत्युद्घोष्यमाणं च दृष्ट्वैवमचिन्तयत्—"अहो अयं पुरुषोऽत्रैव नारकतुल्यां वेदनां वेदयते"। ततो द्विचत्वारिंशद्दोषमुक्तैषणीयाहारं गृहीत्वा नगरान्निर्गत्य भगवतः सकाशमागत्य दर्शयित्वा च तमाहारं वन्दननमस्कारपूर्वं नगरचर्यादृष्टपुरुषचरितं पप्रच्छ—"भगवन् स पुरुषः पूर्वभवे किंरूप आसीत्? किं वैतादृशं कर्मानेन कुत्रोपचितं? येनैतादृशीमप्रतिमा वेदनामत्रानुभवन्नस्ति?"। भगवानाह—हे गौतम अत्रैव जम्बूद्वीपे भरतस्थं हस्तिनागपुरं नाम्ना नगरमभवत्। तत्र सुनन्दनामा नृपोऽभूत्। तस्यैव पुरस्य मध्यभागे गोमण्डप आसीत्। तत्र च सनाथानाथा बहवो गोबलीवर्दमहिषीवृषभादयः पशवः प्रचुरतृणजलसंतुष्टा निर्भयाश्च सन्तस्तिष्ठन्ति। इतश्च तत्र पुरे भीमनामाऽनेकजीवोपघातको मनुष्योऽभवत्, तस्य चोत्पलानाम्नी भार्या, सा च कदाचिदापन्नसत्त्वाऽऽसीत्। त्रिषु मासेषु व्यतीतेषु तस्या अयमेतादृशो दोहदः प्रादुर्भूतो गर्भप्रभावात्—"ता मातरो धन्या याः सनाथानाथगवादिस्तनाद्यवय-वान् पक्वान् तलितान् भृष्टान् शुष्कान् लवणसंस्कृतांश्च भक्षयन्त्यः सुरादिकं च पिबन्त्यः स्वदोहदं व्यपनयन्ति, अह-मपि समपनयामि" इत्यचिन्तयत्। परमनपनीयमानेऽस्मिन् सा शुष्कबलनिस्तेजस्त्वादिविशिष्टाऽभवत्। ता च तथाविधां

दृष्ट्वोदासीनामेकान्ते तत्पतिस्तामपृच्छत्—"किं त्वमुपहतसङ्कल्पेव चिन्तयसि ?"। एवं पृष्टे च तया पूर्वसूचितो दोहदोदन्तः स्वपतये प्रोक्तः। तं च श्रुत्वा स तां समाश्वासितवान्। अथ मध्यरात्रसमये सन्नद्धः सप्रहरणश्च स स्वगृहान्निर्गत्य नगरमध्येन भूत्वा पूर्वोक्ते गोमण्डप आयातः। तत्रत्यगवादिस्तनाद्यवयवाँश्छित्वा गृहीत्वा च स्वगृहमागत्य ताँस्तस्यै दत्तवान्। सा च दोहदं तैर्व्यपनीतवती। नवसु मासेषु समधिकेषु व्यतीतेषु सा दारकं प्रसूतवती। तस्य च विस्वरादिस्वरूपं रुदितं श्रुत्वा बहवो गवादयो भीता उद्विग्नाश्च पलायिताः। एतदनुसारेण तस्य दारकस्य गोत्रास इति मातापितृभ्यां नाम स्थापितं। सुनन्देन तत्पित्रा स कुलनायकत्वे निवेशितः। स चाधार्मिकः पापरतिश्च समजनि। स च सदाऽर्धरात्रे स्वसद्मनो निर्गत्य पूर्वोक्तमण्डपे गत्वा गवाद्यवयवान्निकृत्य गृहमागत्य तानास्वादयन् विचरति। पञ्चवर्षशतानि घोरपापव्यापाराऽतिघनं कर्मोपचित्य शर्करेति द्वितीयनरकपृथिव्यां त्रिसागरोपमायुर्नारकोऽजनि। इतश्च पूर्वोक्तविजयमित्रसार्थपतिभार्या सुभद्रा मृतापत्यकाऽऽसीत्, तत्कुक्षौ च स गोत्रासजीवोऽवातरत्, जाते च तस्योज्झित इति नाम दत्तं मातापितृभ्यां, प्रथमं जातमात्रेऽवकरके त्यक्त्वा पुनरात्तत्वात्। स च पञ्चधात्रीपरिपालितो वर्धते। अन्यदा तत्पिता विजयमित्रसार्थवाहो गणिमादि चतुर्विधं भाण्डं गृहीत्वा पोतेन लवणसमुद्रेऽगच्छत्। पोते भग्ने विजयमित्रोऽशरणो मृतः। भृत्याश्च सर्वे स्वाधीनं द्रव्यं गृहीत्वा गताः। तां च प्रवृत्तिं श्रुत्वा सुभद्राऽमूर्छीत्। ततः स्वस्थीभूय स्वपतिमृतकार्यमकार्षीत्। सुभद्राऽपि यदा शोचन्ती मृता तदा राजपुरुषा आगत्य तं दारकं बहिः क्षिप्त्वा तद्गृहमन्यस्मै दत्तवन्तः। स च दारको दुःस्थतया सर्वत्र परिभ्रमन् वर्धते, परिपाट्या द्यूतादिव्यसनी जातः। अन्यदा स कामध्वजगणिकया संमलग्नः।

श्रीदेव्या सह योनिशूलत्वेन यदाऽन्यदा राजा मित्रो भोगान् भोक्तुमसमर्थस्तदा गणिकागृहादुज्झितं निष्कासितवान्, स्वयं च तां भुङ्क्ते । उज्झितकस्तु तस्यामत्यासक्तस्तदेकाग्रमध्यवसायस्तस्याः प्राप्तयेऽवकाशमाकाङ्क्षति। कदाचिदवसरं लब्ध्वा गणिकागृहं प्रविष्टः । यावद्गणिकयोदारान् भोगान् भुङ्क्ते तावत्तत्र मित्रराजः सर्वालङ्कारविभूषित: समागतः । तत्र सोज्झितदारकं तया रममाणं दृष्ट्वाऽतिकुपितः । ततश्च तेन स नियन्त्र्य ताडयित्वा च व्यरुध्यत वध्यश्चाज्ञप्तः । गौतम आह—"हे भगवन् स उज्झितः पञ्चविंशतिवर्षायुः पूर्णं प्रपाल्याद्यैव त्रिभागावशेषे दिवसे शूलारोपितः सन्मृत्वा कुत्र गमिष्यति ?" भगवानाह—"हे गौतम स उज्झितक इतश्च्युतो रत्नप्रभेति प्रथमनरकपृथिव्यां नारकत्वेनोत्पत्स्यते । ततश्चानन्तरमुद्वृत्तोऽत्रैव जम्बूद्वीपे भारते वर्षे वैताढ्यपादमूले कपिकुले वानरत्वेनोत्पत्स्यते । तत्राप्यतिमूर्च्छितश्चरश्च भोगेषु जातान् बालकपीन् मारयन् तत्समयं प्रभूतकर्मोपार्ज्य कालं कृत्वा एतज्जम्बूद्वीपस्थभारतवर्षे इन्द्रपुरे नगरे वेश्याकुले पुत्रत्वेनोत्पत्स्यते । तं जातमात्रं मातापितरौ वर्द्धितकं कृत्वा नपुंसककर्मणि शिक्षयिष्येते, नाम च तस्य प्रियसेन इति करिष्यतः । ततश्च स यौवनं प्राप्तोऽनेकचूर्णवशीकरणादिभिर्वशीकृत्य राजेश्वरादिभिर्भोगान् भोक्ष्यते । एकविंशत्यधिकशतवर्षायुः परिपाल्य सुबहुपापकर्म च संचित्य रत्नप्रभाया नारकत्वेनोत्पत्स्यते । अपरिमितकालं यावत्तदनन्तरं संसारे परिभ्रम्य एतज्जम्बूद्वीपे भारतवर्षस्थचम्पापुर्यां महिषत्वेन भविष्यति । तत्र विनाशितः सन् तस्यामेव नगर्यां श्रेष्ठिकुले पुत्रत्वेनोत्पत्स्यते । यौवने तथारूपस्थविराणामन्तिके बोधिं लब्ध्वा सौधर्मे संजातः सन् ततश्च्युत्वा यावद्भवान्तं करिष्यति ।

॥ इति घोरकर्मणि उज्झितदारकदृष्टान्तः ॥

श्रुत्वं निशम्योज्झितदारकस्य, घोरे कृते कर्मणि दुःखजातम् ।
जिह्वेन्द्रियादेर्भवभोगतोऽमी, सन्तो विरज्यन्त्वतिदुःखदायिनः ॥ १ ॥

एतत्प्रयासतो यत्, सुकर्म संचितमिहाभ्युदयकारि । तेनैष भव्यलोको, लभतां बोधिं शिवाभ्युदयाम् ॥ २ ॥

एतत्परिज्ञाय भो आत्मन् रसनेन्द्रियविषयलाम्पट्यतो विरम । सर्वेषामिन्द्रियाणां जिह्वेन्द्रियमेव प्रबलं, यदुक्तं—"अरकाण रसणी कम्माण मोहणी तह वयाण बम्भवयं । गुत्तीण य मणगुत्ती चउरो दुक्खेण जिप्पंति ॥ १ ॥" मत्स्या अपि तन्निमित्तकमेव सप्तमीं नरकपृथ्वीं गत्वाऽपरिमितकालं यावदनेकशतसहस्रशारीरमानसदुःखभाजो भवन्ति । यदाह परमर्षिः—"आहारनिमित्तेणं मच्छा गच्छंति सत्तमिं पुढविं । सच्चित्तो आहारो न खमो मणसाऽवि पत्थेउं ॥ १ ॥" रसनातृप्तौ संजातायां शेषाण्यपीन्द्रियाणि विकारव्याप्तानि भवन्ति । विकारवेगे च सति ध्रुवमेवाध्यवसायविपरिणामो जायते । तस्मिँश्च सति निचितघनकर्मसंतत्युपार्जनद्वाराऽवश्यमेवानन्तकालं यावच्छ्रुतकेवलिनोऽपि संसारे स्थितिः । यदुक्तं—"जइ चउदसपुव्वधरो वसइ निगोएसुऽणंतयं कालं । निद्दापमायवसओ ता होहिसि कहं तुमं जीव ? १ ॥" रसवर्जनमपि क्षुद्रसत्त्वैर्वैरासंपादनेन तद्धितचिन्ताकरणद्वारा तदुपरि मैत्रीभावसंरक्षणेनैव भवति (णयितां) इत्यतो हेतोर्युक्तमेवोक्तं—"मित्तेण तुझं च गणिज्जा खुद्दं जेणं भविज्जा तुह जीव भद्दं" इति तृतीयगाथायाः प्रान्तपदद्वयं विचार्यते ।

१ अस्याक्षरत्रयस्य सम्बन्धो न कल्पनापथमवतरित इति तदवस्थमेव स्थापितम्.

च पुनः मित्रेण सुहृदा तुल्यं समानं गणयेत् मन्येत क्रूरं दुष्टमपि अत्यन्तापकारिणमपि परमोपकारिणमिव गणयेथाः । न हि दुष्टेप्यनिष्टं कुर्याः । येन साम्यावस्थाभ्यसनेन हे जीव तव नर्द मोक्षावाप्तिलक्षणं स्यादिति तात्पर्यार्थः ॥

अत्रार्थे कीर्तिचन्द्रसमरविजयभ्रात्रोः सन्धिबन्धेन कथा प्रतन्यते—

इह भरहखित्ति अत्थइ पसिद्ध,चंपा इय नयरी धणसमिद्ध। जिहिं धम्मकम्मि जणु अहियलुद्ध,परदव्वहरणि पंगुव सुद्ध॥१॥
सुपयंमदंड जिणहरसिरेसु,न हु दीसइ पुण नायरनरेसु। जिहिं तियलोय सुहरुह करेसु, अइमलिणपंक गिम्हह सरेसु॥२॥
तत्यत्थि नराहिव कित्तिचंद, जसु असिहिं विणिज्जिय नमइ चंद। न हु पावइ कत्थ वि जाव ठाण, ता अरुरुइ सेवइ सुमठाण॥३॥
जुवराय समरविजयाभिहाण, लहु तास सहोयर दोसठाण। परिपालइ दोन्नि वि निययरज्ज, मग्गयंतिय साहइ सयलकज्ज॥४॥
जिणि जगहरगसूरप्पयाव, विणिवारियसयरिउप्पताव। कयकतकंतिविद्धुविकराल, करवाल करंतह करि विसाल॥५॥
गज्जियरवि तज्जइ किरि दुरंत दुम्मालमहारिउयलमहंत। गयणगगयवि निम्मियनिवास, पूरंतउ तिहुयणलोयआस॥६॥
कसिणउजपमुहउन्नगयंद, अह पाउसकालमहानरिंद। साहूरमोरगणयंदिविंद, जयजयरवपसयमवच्चंद॥७॥
इत्यंतरि कोठहवरसाल, आरूढ गयकिर्हि नमिपाल। वणसिरचवलफणोलमाल, पिरकइ नइपूर महाविसाल॥८॥
उत्तरिय नमियगह दुरंत, तिर्हि आगय नियपरिवारजुत्त। आरुहिय नावि पविसइ सणेण, नइघरमज्झि कोउगरसेण॥९॥
जवकेवि करइ जा परियणेण, सह नूयइ ता उवरिं घणेण। मुणेण पवट्टिउ नइपवाह, अइतियवेगि पसरइ अगाह॥१०॥
कम्मगि जंति अह येरियाउ, जह उक्कारु नरवइपेरियाउ। न हु कण्णधार वावार कोइ, विप्फुरइ सोइ हवयोस होइ॥११॥

जलपूरिहिं खिज्जाइ हा नरिंद, पुक्करइ तत्थ इय लोयविंद। धावह धावह जो सुहड इत्थ, कड्ढइ नरवइ जगि सो समत्थ॥१२॥
जिहिं दीसइ दीहतमालसाल, निंबंबजंबुतरुवर विसाल। अह दीहतमालारूवीयरुक्खि, तरणी विलग्ग कह कह वि रुक्खि॥१३॥
उत्तरिय भूमिवासव जवेण, संजुत्तउ कइवइपरियरेण। वीसमइ इक्कखण तिहिं नरेस, नियनयणिहिं पिक्खइ वणपएस ॥१४॥
आसत्थअरत्थ अगत्थवग्घ, हरिहरिणजूह उच्छलइं सिग्घ। भमरुव्व भमिर तिहिं भूमिनाह, आणइ उवेय महा अगाह॥१५॥
मणिरुप्पकणयटंकय अपार, तारय जिम झिगमिग करइं तार। कूलंकससलिलुरकणिय ताव, निहि पिक्खइ रयणुज्जलसहाव॥१६॥
तं पिक्खिय नियमंदिरिहिं पत्त, निवकित्तिचंद परिवारजुत्त। अह चिंतइ सरलसहाव राय, वंचिज्जाइ अवसरि नेव जाय॥१७॥

॥ घात ॥ दंसइ तं नरवर नियय सहोयर समरविजय आणे वि लहु।
अइकुडिलसहाविण चिंतइ तक्खण सो पाविठ्ठ सुदुट्ठ बहु ॥ १८ ॥

॥ भास ॥ रयणलोहेण निहणेमि नणु भायरं, जीववहअलियधणपावभरकायरं।
रज्जमवि लेमि गयतुरयसयसज्जियं, गुरुअतुयदंडसारेण जं अज्जियं ॥ १९ ॥
कस्स माया पिया भाय भत्तिज्जाया, कस्स मित्ता य भयणी य वरपुत्तया।
जस्स धण तस्स धण सयणसंबंधिणो, पिम्ममावहइ सव्वो वि नणु परियणो ॥ २० ॥
मुक्क निस्संकचित्तेण लहुभाइणा, घाय नियभायहणणत्थमुरुमाइणा।

१ अतिमायाविना.

अहह किं जायमेयं महाघस्मयं, एम पुक्करइ तिहिं सयखजणसख्खयं ॥ २१ ॥
कहमिमेसजणखोणा मारिज्जए, मिखइ सधे घि खहु जेण मारिज्जए ।
कहमिमस्सेरिसी कुमइ संपत्तया, हह पत्तोयंतु नयणेहिं जणसपया ॥ २२ ॥
एम जंपंतलोएण सग्गप्पहाराउ ठपारिहं पुवई समहा ।
पज्जरइ रोसरित्तो महीवासवो, धरिय माहइ तं रइयनयरूसवो ॥ २३ ॥
किं तए नाय किज्जइ अणायारया, दिस्सए किं न संसारनिस्सारया ।
तुज्झ जइ कम्ममेएण रज्जाइया, ता तुमं गिएह अखमित्थ सरकम्मुणा ॥ २४ ॥
जेण खत्तिज्जए इत्थ जणमज्झए, तं कुखीवेहिं कइया घि न करिज्जए ।
जपिए एवमवि तस्स नो उवसमो, पत्तगुणसमावत्त पायछुमो ॥ २५ ॥
हत्थजुयलम्मि विद्धोज्झिअयं गठं, जह य ठक्कणिय आणाखखंजं गठं ।
धुज्झई कह य धम्मोवएसाइयं, अस्स मणमज्झि पायंधयारुच्चयं ॥ २६ ॥
॥ नास ॥ दुज्जरिय वियाणिय पित्तिहिं आणिय पावखाणि नाउयतणउं ।
संवेगिहिं रंजिय कम्मि अगंजिय, अपिर मुणइ मण अप्पणउं ॥ २७ ॥
सुयणो वि हु दुज्जणं हवइ लोइ, धणकारणि मित्त अमित्त होइ। निहिणा पत्तात्तमिमेण मज्झ, वीमंसिय इय गय नयरमज्झ॥२८॥

अह समरविजय नइतम्मि जमंत, न हु पिक्खइ रयणुच्चय महंत । पुरओ वि हु संठिय कूरकम्म, कह पावइ कन्न वि सुक्ख रम्म ॥१९॥
गिण्हित्तु गओ नणु जूमिनाह, इय नियमणि धरिय सुदुक्खदाह । पुरनयरगाम चोरी करंत, सो वट्टइ परधणकण हरंत ॥ २०॥
नियजायदेस लुट्टइ निसंक, जण बंधइ रुंधइ सव्व वंक । अह अन्नदिवसि निग्गहिय सोय, सामंतिहिं तक्कर जिम ससो य॥२१॥
निवअग्गइ आणिय तेहिं एस, सामिय इणि लुंटिय सयल देस । जं रुच्चइ तं कीरउ इमस्स, इय जंपिय तेहिं नरवरस्स ॥२२॥
नरवइ मिट्ठावइ जीवमाण, अप्पावइ बहुधणरयणदाण । सो चिंतइ अइसइदुट्ठचित्त, नरवइ पुणि हियइ दयापवित्त ॥२३॥
तसु वुत्त तेसु मह रयणरज्ज, अंतेउरपुरहिं न मज्झ कज्ज । सो जाणइं नरवइ दिन्न केम, लिज्जइ हीलिज्जइ अप्प एम ॥२४॥
उद्दालिय जुयवलि जो गहेमि, कयकिच्च सच्च अप्पउं गणेमि । सो बहु परिचुकओ रायदेहि, मुक्कउ तहा वि बंधवह नेहि ३५
जण तत्थ जणइं एरिस उवन्न, सिरिकित्तिचंदनरराय धन्न । जिणि पालिय सज्जणगुण अपार, लहु जायह किय जीवोवयार ३६
किहिं गिव्वर किहिं सायर गम्भीर, किहिं कायर किहिं पुण धीर वीर ।
किहिं गयवर किहिं गद्दहउ सोय, इय अंतर तिहिं वागरइ लोय ॥ ३७ ॥
सुयभजरजमुद्दा अतुल्ल, वज्जंतउ सुरसरिसलिलसल्ल । संवेगरंग अंगीकरेइ, उव्विग्गचित्त निव घरि वसेइ ॥ ३८ ॥
अह सुगुरु तत्थ चउनाणजुत्त, पणसमिइ तीनिगुत्तीहिं गुत्त। आयरिय पवोहसुनामधिज्ज, पुरि समवसरिय चारित्तसज्ज॥३९॥
हरसियमण तसु आगमणि राय, जाएविणु जत्तिहिं नमइ पाय । सुगुरूवएस कन्निहिं धरेइ, वय बारसेव अंगीकरेइ ॥ ४० ॥
अह पुच्छइ नियबंधवचरित्त, कहमेस सामि बहुदोसजुत्त। उल्लवइ गुरू वि हु महुरवाणि, पुहवीसर निसुणइ इक्कणि ॥४१॥

मंगलयइ विजइ महाविदेहि, सोगंध नयरि गुणरासि गेहि । तिहि मयणछिवियणुजम्म जाय, सागरकुरंग इय दोन्नि भाय ४२
कीलंति दोवि ते विविहभंगि, कीलाहि पुरंतरि मनह रंगि। कइया वि हु पिक्खइ कुवि घाव, इग माविय रूविहि अइरसाल ४३
के तुम्हे इय ते पुच्छिया य, ता एग जणइ तार्ण तया य । इह अच्छइ मोहमहानरिंद, अस्सु आण वहइ सिरिइदचंद ॥ ४४ ॥
अरिकरिकुलकेसरिसुह तास, नेदण भुयणंतरि सप्पयास । पिउनाम रागकेसरी य नाम, तस्सुय हउं सागर मणभिराम॥४५॥
मह पुत्त एस पुण विघायवंत, परिगहजिलास जगि विजयवंत। वेसानरभूया कूरय चित्ति, नामिहिं जगि एसा पयडसत्ति॥४६॥
इय निसुणिय तचरियप्पयंच, हरिसुब्भसंतरोमंचपंच । अणुन्नमित्तजायं पयत्त, जीविय पुण इक्क सरीर जित्त ॥ ४७ ॥
सायर सायरकुमरेहिं सत्थि, न हु कूरयाइ मित्तीय अत्थि । तसु जाय कुरंग सरंगचित्त, सह कूरयाइ सविसेसरत्त ॥ ४८ ॥
अह ते वि तारतारुन्नपत्त, अइविक्कम सोहगजुत्त । परिय नियसुहजणपरियरेण, विहवज्जणसज्जीकयमणेण ॥ ४९ ॥
परदेसगमण पुच्छंति माइ, पिउ धारइ ते वि हु अइविसाइ । तह वि हु पत्थिय देसंतरम्मि, ते दो य जाय इक्कंतरम्मि ॥५०॥
ते जिट्ठिवहिं लुंटिय अरूविमज्झि, घणतरुगणगिरिसायरअसज्झि। संगोवियथेयधणा पयत्त,ते घवलपुरिहि पहुणि अपुत्त॥५१॥
तिहि हट्ट एग मंडिय अवसेरू, ववसाय कुणंति महापयंरू। विढवंति तत्थ दीणार इक्कि, सहसाइ गरुयकविहिं पयत्त ॥ ५२ ॥
अह वहइ सपत्त ताण चित्ति, अइआवस हूआ बहुयविहि। कप्पासतिलाह किय जरूसाल, तिहिं बहुविह अंकिय पायजाल ५३
कम्मुण सिप्पकरसण करंति, तसजीवसहिय तिल पीलयंति । महुगुडियधाइसकम्माइ, पाविण्णि पयहुई ते पमाइ ॥ ५४ ॥

१ तस्सुतोऽहं सागरनामा

तह करहसगरूपुठियह सड्ढ, घणमोहलोहमच्छरिहि घड्ढ । देसंतरि पेसइ वहुय सड्ढ, न गणइ ते पावह नर अणत्थ ॥ ५५ ॥
धणकज्जि रज्जअहिगार लिंति, करवुक्कि अहिय दाणिहिं करंति । वंधंति देरूहयतणीय गेहि, अहनिसि ते मुच्चिय अप्पदेहि ५६
इच्चाइपावकोडीहि तेहिं, धणकोडि समज्जिय कइदिणेहिं । अह पच्छिय जलनिहिमज्झि तेहि पूरिय पवहण वहुवरकरेहिं॥५७॥
लग्गेवि कन्नि जंपिय कुरंगि, तो कूरयाइ मनि धरिय रंगि । नणु हणसु मित्तमिममप्पणिज्जा, धणनागहरं जइ सोक्कि कज्ज ॥५८॥
जसु धण तसु सयण अणेग हुंति, अणहुंतवि धणवंधव मिलंति । धणवंतह आवास वि ठलंति, लीलाइ मणोरहसय फलंति॥५९॥
नियहच्छिहिं कुण नणु दविणजाय, तद्दयण हूय तणुमण सहाय । निच्चं पि कहिय पावोवएस, कस चित्तिहिं न वसइ जण अवस्स
तो पाडिय सायर सायरम्मि, तो तेण जलुम्मीपूरियम्मि । सो खद्धदेह जलयरसएहिं, संपत्त नरय असुहोदएहिं ॥ ६१ ॥
मयकिच्च तेण निम्मिय असेस, मणि हरसिय तवसणम्मि एस । जा जाइ किंपि जलमग्गि जाव, फुट्टइ वाहण तरकणि सपाव ६२
नीरंतरि वुड्डउ सयललोय, हुय खंड खंड खणमज्झि पोय । गय सयलवत्थवरकर जलम्मि, जीवियसंसय सो पडिय तम्मि ॥६३॥
अह तुरियदिवसि पट्टिय लहेवि, उत्तिन्न सो य कट्ठिहिं करेवि । संपत्तउ कम्मिवि पट्टणम्मि, वाणिज्जा करइ सो पुणवि तम्मि ६४
धण अज्जिय भुंजिसु विउलभोय, चिंतित्तु एणिपरि सप्पमोय । वणगहणि भमिर अह भमर जेम, सो भक्खिय सीहिण एम तेम६५
मरिऊण पत्त धूमप्पभाइ, जिहिं डुक्खलक्ख असंखयाइ । भव भमिय तउ अंजणगिरम्मि, केसरिकिसोर हुय कंदरम्मि॥६६॥
इक्कगणकज्जि दो वि हु भिडंति, नरयम्मि चउत्थइ मरिय जंति । उयट्टिय उग्गभुयंग हूय, निहिकज्जइं कुप्पइं सुप्पभूय ॥ ६७ ॥
॥ घात ॥ पाविय पंचत्तण रोरुवसग्गिण रूज्झंता पत्ता नरय । धूमप्पहनामिहिं डुक्कह गमिहिं तत्तो भव भमडइं वहुय ॥६८॥

छयवस अहो षचियस्स जक्क, ते मित्त डुत्ति कम्मिहिं अणाक्क। निद्दणम्मि गए नाहम्मि ते य, क्खदं कुर्णति घरघक्कप य ॥६९॥
कुमिमु डव्पुचवी य पत्त, आजीविय मडु पावप्पसत्त। अह जमिय जयंतर चरिमेय, नियहस्स जाय नंदण डुवे य ॥ ७० ॥
पियमरणिहिं रत्ति अईव डुक्ख, अक्षुम करिय समरं विमुक्ख। छप्पन्न तर्ठ पुण समतमाइ, पंचम छहिय डुहसंगमाइ ॥ ७१ ॥
घणडुक्ख मुक्कमोहियमणेहिं, मडुवेयण पाविय तछ तेहिं। न डु कस्सइ दिक्ख न सक्क दिक्ख, पय छक्किय अप्पा डुहिय किक्ख॥७२॥
अन्नाणकत्त काळण सुक्क, सो सागरजीव तुह्यठं गरिठ। तुममवणिनाह इयरो य तुक्क, छयवस जाय खडु सयक्षयक्क॥७३॥
इत्तो य अवर जं तस्सकय, विन्नायपुव सो तुक्क सत्त। छवसग्ग करिस्सइ तुह अखक्क, परत्तम्मि ठियस्स महाअघक्क॥७४॥
सो कूरयाइ सह करिय मिचि, तस थावर जीव वहे वि सत्ति। वुस्सहडुहरासि घिसम चाख, जमिही जय चरि अणंतकाख॥७५॥
इय सुणिय वयण सुगुरुहिं वुत्त, वेरग्गरंग नियमा पवत्त। निय जायणिक्क हरिकुमरि रक्क, संकामिय निय गिण्हइ पवक्क॥७६॥
डुस्सहतवसोसियनियसरीर, मेरु व सुधिर अइधीरवीर। सुमुणियसिद्धंतरहस्सतत्त, छक्षुयविहार रिसिराय पत्त ॥ ७७ ॥
कस्स वि पुरस्स बाहिरपएसि, ठिय काउसग्गि अह गुरुनिदेसि। अछइ आ छठ्ठ पक्षंयघाइ, समरेण दिठ ता गुणसणाह॥७८॥
समरिय नियमणि वेराणुबंध, खग्गेण वि खंडिय तेण मंघ। सुहझाणगयस्स जइस्स तस्स, करुणा कह विसिहिं तारिसस्स ॥७९॥
अइडुस्सहवेयण सहिय तेण, जूसंरुचि तक्कणि निवकिएण। चिंतइ रे जीव परव(ध)सेण, तइ दिठ डुक्कडुह कंपिरेण ॥८०॥
नरतिरियमरयजवि चमिर जीव, किं किं न सहइ डुस्सह डुह अईय। घवाधवसंगय अविरठं य, कम्मडकुणरिवमारिठं य॥८१॥
मा धीर विसाय करेसु चित्ति, आयरसु समागुण अतणु कत्ति। छचरिय जलहि नणु गोपयम्मि, को वुड्डइ पंकिय सुहतरम्मि ८२

वज्जेसु जीव हिंसप्पउंस, सत्तूण उवरि करि तोस पोस । परिहरसु सयल तं दोसमोस, अइदुद्धर मम करि मणिहिं सोस ॥७३॥
अकूरभाव चित्तिहि धरेसु, मायानियाणसल्लुद्धरेसु । समभाव सव्वसत्तेसु धारि, समरस्स विसेसिहिं गुण वधारि ॥ ७४ ॥
इणिपरि अणुसासइ अप्पि अप्प, तिणि दूरिहिं उज्झिय भववियप्प । गवंतउ सुहझाणम्मि चित्त, तरकणि दसपाणिहिं सो विमुत्त
सहसारदेवलोयम्मि पत्त, तह च्चिय सुह भुंजइ समत्त । तत्तो चवित्तु लहिही विदेहि, सिवसुह उप्पज्जिय इब्भगेहि ॥ ७६ ॥
जइ तेण दुक्खदुबंधवो वि, बहुकूरकवरूपरिपूरिउ वि । मित्तोवम गणिय न दुब्भाव, तसु उप्परि आणिय सुहसहाव ॥७७॥
॥ घात ॥ अन्नेहि वि तह किर निम्मिय मण थिर धारिय जिणवर धम्म धुर ।
कायवा मित्ती सुकय पवित्ती सबोवरि जग सुक्खकर ॥ ७८ ॥
॥ इति क्षुद्रेऽपि मैत्रीभावप्रतिपत्तौ समरविजयकीर्त्तिचन्द्रसंधिः ॥

अथ धर्मार्थिनां साधूनां श्राद्धानामपि च दीर्घदर्शित्वमेव श्रेयस्करं । अनागते व्याधौ यथात्महितं साध्यते तदा साधीयः । पयःपूरप्रसरेऽतिदुर्द्धरे जाते पालिबन्धनं अबन्धनप्रायमेव तथा समागतेऽप्यमेयामये ज्ञाते सति यदि श्रेयः समाचर्यते तथापि साधु । तदुपर्युपदेशमाह । प्राक्तनकाव्यप्रान्तपदे भवस्य प्राप्तिर्जीवस्य प्रोक्ता, साप्येवं क्रियमाण साधीयसी, तद्यथा दीर्घदर्शित्वमेव व्यञ्जयति—

रोगेहि सोगेहि न जाव देहं, पीडिज्जए वाहिसहस्सगेहं ।
तावुज्जया धम्मपहे रमेह, बुहा मुहा मा दियहे गमेह ॥ ४ ॥

व्याख्या—रोगैः—वातपित्तकफश्लेष्मात्मकैः । शोकैः—पितृपुत्रभ्रातृविपत्तिजनितैः । यावत् देहं—शरीरं दिह्यते क्षिप्यते कर्मनिरात्माऽनेनेति तथा । पीड्यते बाध्यते । किंभूतं ? "वाहिसहस्सेति" वि विशेषेण आधिर्मानसिकी पीडा राजयक्ष्मादयोऽप्यामयास्तेषां सहस्राणि तेषां गेहं गृहं स्थानमित्यर्थः । तावदुपसा'—कृतोद्यमाः सन्तो धर्मपथे—धर्ममार्गे रमध्व । अतो बुधा इत्यामन्त्रणं, यतस्तेषामेवोपदेशावकाशः, न तु निर्मेधसा पुंसामिति हेतोः तदामन्त्रणं क्रियते प्रोच्यते च हितार्थः । यत प्रोक्तं वाचकमुख्यैः—"न जयति धर्मः श्रोतुः सर्वस्यैकान्ततो हितश्रवणात् । ब्रुवतोऽनुग्रहबुद्ध्या वक्तुस्त्वेकान्ततो जवति ॥ १ ॥" ततो हेतोर्बुधा इति प्रयोगः । मुधा वृथा मा इति निषेधार्थेऽव्ययं, दिवसान् गमयध्वमित्यक्षरार्थः ॥ ४ ॥

पुनरप्यमुमेवार्थं समर्थयन्नग्रेतनं पञ्चमकाव्यमाह—

जया उदिण्णो नणु कोवि वाही, तया पणठ्ठा मणसो समाही ।
तीए विणा धम्ममईवसिज्जा, चित्ते कहं दुक्कजर तरिज्जा ॥ ५ ॥

व्याख्या—यदा कदाचिदुदीर्ण—उदय प्राप्तो नन्विति निश्चये कश्चिदपि व्याधिस्तदा । किं स्यादित्याह—प्रकर्षेण नष्टः प्रणष्टो मनसश्चेतसः समाधानं समाधिः सौस्थ्यमित्यर्थः । व्याधौ समुत्पन्ने मनसः समाधानं कुत इत्यर्थः । पुल्लिङ्गेऽपि स्त्रीत्वनिर्देशः प्राकृतत्वात् । "तीए विणेत्यादि" तया ( तेन ) विना समाधिमन्तरेण धर्ममतिर्धर्मबुद्धिर्वसेन्निवासं कुर्यात् चित्ते मनसि कथंकारं । अथ च दुक्खजर कथं केन प्रकारेण तरेज्जीवः ? न कथमपीत्यर्थः । यदा रोगोत्पत्तिः शरीरे

काचित्संपन्ना तदा चेतःसौस्थ्यं गतमेव । चेतःसौस्थ्यमन्तरेण धर्मधीर्नैव वर्द्धते । अथ च धर्मं विना जीवस्य सुखाजाव एव केवल इत्यन्योऽन्याश्रयेण तात्पर्यार्थः । अथ यथा वपुर्व्याधिसंजवश्रवणेऽपि श्रीसनत्कुमारचक्रिणः संवेगरङ्गः सुचङ्गः प्रादुर्बभूव तथाऽन्यैरपि प्राज्ञैर्धन्यैः स्वहितमाचरणीयम् । अत्रार्थे श्रीतुर्यचक्रिणः सनत्कुमाराह्वयस्य समासत एव कथानक मुन्नाव्यते । तच्चेदं कृतिजनकृतोल्लाससानुप्रासकाव्यजङ्ग्यैव निरूप्यते—

श्रीवर्द्धमानांह्रियुगं प्रणम्य, सम्यक्तया तत्त्वधियाऽधिगम्य । सनत्कुमारस्य रसेन पुष्टं, चरित्रमेतत् कथयाम्यदुष्टम् ॥१॥
अस्तीह देशः कुरुजाङ्गलाख्यः, पुंसां धनोपार्जनवद्धसख्यः । विराजते तत्र च हस्तिनापुरं, महासमृद्ध्या जितदेवतापुरम् ॥२॥
संत्यक्तमोहा अपि मोहयुक्ता, विशालदोषा अपि मुक्तदोषाः । कुरूपयुक्ता अपि रूपवन्तः, पुरे च यस्मिन्निवसन्ति सन्तः ॥३॥
तत्रास्ति नृपः किल विश्वसेनः, स्फूर्जज्जयश्रीधरविश्वसेनः । स्वैरं क्षितौ यस्य यशोमरालश्चिक्रीड कुध्यापयसीव बालः ॥४॥
तस्यास्ति कान्ता सहदेव्युदारा, रूपेण रम्भाप्रतिमा सुतारा । चञ्चच्चतुःषष्टिकलासमेता, शरत्पयःश्रेणिरिवाछचेताः ॥ ५ ॥
चतुर्दशस्वप्ननिदर्शसूचितः, सुतस्तदीयोऽजनि लक्षणोचितः । सनत्कुमाराभिधयाऽतिविश्रुतः, कलाकलापेन शशीव संश्रितः ६
क्रमेण तारुण्यमवाप्तवानयं, सीमन्तिनीहृन्मृगवागुरामयम् । मुखं मृगाङ्कोज्ज्वलमण्डलोपमं, नेत्रद्वयं चास्य पयोरुहोत्तमम् ७
भुजावपि द्वौ परिघोपमानौ, पदौ पुनः कच्छपवत्प्रधानौ । वक्षःस्थलं व्यूढकपाटरूपं, रूपं पुनश्चित्तभुवा सरूपम् ॥ ८ ॥
सर्वाङ्गशोभागुणवर्णनायां, शक्तिर्न कस्यापि तदीयकायाम् । तेजस्तदीयं रविबिम्बतुल्यं, तीव्रं द्विषत्कौशिकचित्तशल्यम् ॥९॥
अमुष्य रूपस्य तुलां मुरारिर्नलः कुबेरोऽपि च नासुरारिः । न लेशमात्रेण च पञ्चबाणः, प्राप्तो जयश्रीसफलप्रयाणः ॥१०॥

छद्मावलीति स सदैव चैत्री, राकेव बाल्यादपि तस्य मैत्री । महेन्द्रसिंहेन समं शुभेन, श्रीशूरभूपाङ्गजनन्दनेन ॥ ११ ॥
स यौवनेऽभ्यस्तसमस्तविद्यस्तेनैव साकं सुहृदाऽनवद्यः । द्रष्टुं वनं चारु वसन्तमासे, बहिः समागात् सुषमानिवासे ॥ १२ ॥
वाहावलीवाहनयानुदारः क्रीडापरो यावदभूत्कुमारः । अश्वाधिरूढोऽपहृतः क्षणेन, केनापि तावन्मरुताऽद्भुतेन ॥ १३ ॥
मुक्तो महाकर्कशकर्करायां, जयप्रदायामटवीधरायाम् । चिन्तां दधौ चेतसि रक्षसा वा, नीतोऽहमत्रासि सुधाभुजा वा ॥१४॥
अश्वात्समुत्तीर्य सनत्कुमारः, सर्वत्र बभ्राम सुरानुकारः । शून्यां वनीं तां निशि यूथमुक्तः, स्याद्यादृशो बालमृगो वियुक्तः १५
यथा प्रदीपे पतितः पतङ्गः, सनत्कुमारेण विमुक्तसङ्गः । ममार तत्रोत्तरस्तुरङ्गः, श्रमेण संपन्नशरीरभङ्गः ॥ १६ ॥
अरण्यमध्यभ्रमणप्रतर्षः, शुष्कास्यकण्ठः परिभूतदर्पः । भ्रान्ताक्षियुग्मः पतितो जगत्यामचेतनोऽस्तीव मृतः प्रकृत्या ॥ १७ ॥
एकेन यक्षेण घनस्थितेन, प्रसिच्य सज्जः स कृतोऽमृतेन । मूर्च्छोज्झितोऽपृच्छदिदं क वारि, प्रवर्तते यच्च जनोपकारि ॥ १८ ॥
यक्षोऽप्यवोचत्सखिदं कुमार, स्यान्मानसेऽब्धः सुपदप्रचार । कुत्रास्ति तन्मानसमेवमुक्ते, प्रोत्पाटितस्तेन स देवशक्तेः ॥ १९ ॥
सरोवरस्य स्फुटमानसस्य, प्रान्ते विमुक्तः पयसाभृतस्य । कृत्वा प्रणामं ववले स यक्षं, परोपकृत्युन्नतिबद्धकक्षः ॥ २० ॥
समुल्लसल्लोलतरोर्मिमालं, समीपदेशस्थितपक्षिजालम् । सुगन्धपाथोजचलत्प्रवालं, परिस्फुरत्वाद्भुतमालशालम् ॥ २१ ॥
गोदुग्धवन्निर्मलमिष्टनीरं, हंसावलीनक्रनिषेव्यतीरम् । स मानसं नाम सरो ददर्श, प्रोद्भूतनानाविधहृद्विमर्शः ॥ २२ ॥
प्रातः सरोऽन्तः सवनं विधाय, प्राप्तप्रमोदः कनकाब्जकायः । जगाम विश्राममनोकहस्य, छायावतोऽधः सहसोपविश्य ॥२३॥

---

१ स्नानम्

तत्रागतस्तावदथासिताख्यः, प्रोद्दामयक्षः कृतलोहिताक्षः । सार्धं कुमारेण दृढप्रहारः, प्राग्जन्मवैरात् समरं चकार ॥ २४ ॥
यक्षेण मुक्तानपि नागपाशान्, विनिर्मिमीते स्म स सद्विनाशान् । शीर्षोपरिष्टादचलं च मुक्तं, चक्रे स्वमुष्ट्या कणसाद्विभक्तम् २५
यक्षः कुमारेण दृढं प्रहृत्य, भाग्जर्जराङ्गो विहितः स्वकृत्यः । आराटिमाधाय ततः प्रणष्टः, परं सुरत्वान्न मृतः स दुष्टः ॥२६॥
पुण्यप्रभावेण जितः स यक्षः, कृतश्च घस्रे शशिवद्विलक्षः । प्रसूनवृष्टिर्गगनाद्विमुक्ता, देवैस्तदा मूर्ध्नि किलास्य युक्ता ॥ २७ ॥
विद्याधरस्य क्षितिविश्रुतस्य, श्रीभानुवेगस्य नरेश्वरस्य । विमानमारोप्य सुरैः सभायां, मुक्तो नगर्यां प्रियसङ्गमायाम् ॥२८॥
शुभ्रं कुलं मूर्तिरहो न रुग्ना, भुजोर्जितं भूरि मतिश्च भग्ना । अखण्डिताऽस्तु प्रभुता जय त्वं, वैतालिकस्तत्र पपाठ तत्त्वम् ॥२९॥
श्रीभानुवेगेन नराधिपेन, प्रोक्षाय तेन स्वसभास्थितेन । सन्मानितोऽयं सुधिया कुमारः, संस्थापितः सद्मनि निर्विकारः ॥३०॥
प्रस्तावमालोक्य पुनर्जगाद, क्ष्मापः कुमारं प्रति निर्विषादः । गृहेऽष्टसङ्ख्या मम सन्ति कन्यस्तासां वरस्त्वं भवितासि धन्यः॥३१॥
विज्ञापितो यक्षजयस्य मेऽत्रार्चिमालिनाम्ना मुनिनाऽक्षजेत्रा । चक्री चतुर्थो गदितस्त्वमेव, प्रदृश्यसे चामरसृष्टसेवः ॥ ३२ ॥
तुभ्यं प्रदत्ताः सुखिताः स्वकन्याः, स्युः प्रीतिदात्र्योऽपि पितुर्जनन्याः ।
प्रसह्य पाणिग्रहणं कुरु त्वं, तासां ततो देहि च मे महत्त्वम् ॥ ३३ ॥
नृपाग्रहात्तत्र कृतो विवाहस्ततः कुमारेण सुखाम्बुवाहः । विद्याधरीणां कुलसंभवानां, सद्रूपलावण्यगुणैर्नवानाम् ॥ ३४ ॥
मुनेस्तु तस्यैव गिराऽववुद्धं, यक्षेण सार्द्धं तव यद्विरुद्धम् । मदुक्तमाकर्ण्य भानुवेगः, प्राहाथ तस्येति सुबुद्धिवेगः ॥ ३५ ॥

१ सुष्ठु अकृत्यं यस्य सः.

अत्रैव कम्मठपुरे नगरे समृद्धस्त्यं विक्रमादिमयशा नृपतिः प्रसिद्धः ।
अन्तःपुरीप्रवरपञ्चशतीवियोगा, संजातवान् विपुलराज्यभरस्य सोढा ॥ ३६ ॥
तत्रैव नाम्नाऽजनि नागदत्तः, सुसार्थवाहः प्रितभूरिवित्तः । विष्णुश्रियाऽत्यद्भुतरूपवत्या, स्त्रिया समेतः शुभहंसगत्या॥३७॥
भार्याऽन्यदा सार्थपतेर्नृपेण, दृष्टा दृशाऽसौ विगतत्रपेण । अन्तःपुरान्तः सहसा गृहीता, श्येनेन चक्रे चटकेव नीता॥३८॥
सार्थाधिपः स्त्रीविरहाग्निदग्धस्तदा बभूव ग्रथिलो विदग्धः। विष्णुश्रिया वागुरया कुरङ्गः, पापः स नीतः स्ववशो सरङ्गः ॥३९॥
नृपो विमुक्ताखिलराजकार्यस्तद्भोगलुब्धः समभन्यनार्यः। अदान्यसूयावशतोऽपराभिस्तस्यै विषं चाथ नृपाङ्गनाभिः ॥ ४० ॥
नृपोऽथ तस्या मरणाद्विपन्नः, सार्वेशयशून्यहृदाधिभिन्नः । ददाति कर्तुं न तदङ्गदाहं, यथा मरुत्पितुमम्बुवाहम् ॥ ४१ ॥
दिने द्वितीये सचिवैर्विमृश्य, निर्माय दृग्वञ्चनमीश्वरस्य । क्षिप्तं द्रुतात्तन्मृतकं अरण्ये, निधानवत्कूपपयस्यगण्ये ॥ ४२ ॥
नृपोऽप्यपश्यन्मृतकं वियर्वस्त्यक्तान्नपानश्च मपीसपर्वः । जज्ञे यदा मंत्रिवरैस्तदानीं, क्रियेव मेति प्रहितो वनानीम् ॥ ४३ ॥
जनैः समं तत्र जगाम यावत्, कलेवरं तस्य ददर्श तावत् । दुर्गन्धविस्फोटितलोकनक्रं, मेदोवसालोलुभगृध्रचक्रम्॥ ४४ ॥
निर्यद्घनासृक्पिशितास्थिविश्रं, चलत्कृमिश्रेण्युपलब्धनिश्रम्। विलपितं चञ्चुपुटैर्वयोभिर्निष्कासिताक्षं च सुदुर्मनोभिः॥४५॥
ईदृक् तथैव कथितं तदङ्गं, निरीक्ष्य दृष्ट्या निजया विरक्तम्। वैराग्यमाप्तः कृतपुण्यनाशाद्घोरसंसारधिकारपाशात् ॥ ४६ ॥
विचिन्तयामास इतीति यस्य, कृते मया दीर्गमिता दुःखस्य । शुद्धं यशो शुभमपि स्वकीयं, तस्यापि देहस्य दशेदृशीयम् ॥४७॥

---

१ नक्रं नासिका २ पक्षिभि

धिगस्तु मां मौढ्यमवाप्तमेवं, रागादिदोषैः कृतनित्यसेवम् । धत्तूरजन्ही गणयेद्धिरण्यं, किं वा न शैलादिकवस्त्वगण्यम् ॥४८॥
कुचास्यदृग्दन्तगणा नवीनैः, कुम्भेन्दुपाथोजसुमैरहीनैः । अवापिता मूढतयोपमानं, यस्यैतदङ्गं तमसां निदानम् ॥ ४९॥
कर्पूरपारीमृगनाभिगन्धो,यो दीयतेऽङ्गस्य मलैकवन्धोः। स्यात्सोऽपि दुर्गन्धमयः समस्तः,पटो यथा स्यान्मलिनो रजस्तः ॥५०॥
अन्तर्विमृश्येति तृणावलीवत्त्यक्त्वा स्वराज्यं स्वपताकिनीवत्। प्रव्रज्य पार्श्वे गुरुसुव्रतस्य, स्थैर्यं दधौ श्रेयसि सत्तपस्यः ॥५१॥
महर्द्धिकोऽभूदमरः कृतित्वात्सनत्कुमारे त्रिदिवे स मृत्वा। च्युत्वा ततो रत्नपुरे सुधामा, श्रेष्ठ्यङ्गजोऽभूज्जिनधर्मनामा॥५२॥
स श्राद्धधर्मं कुरुते स्म विशस्तीर्थेशबिम्बार्चनसद्विधिज्ञः। सोऽप्यार्त्तचेता अथ नागदत्तस्तिर्यक्षु कृत्वा भ्रमणं प्रमत्तः ॥५३॥
संजातवान् सिंहपुरेऽग्निशर्माऽभिधो द्विजन्मा भुवि भूरिकर्मा। स्वैनस्त्रिदण्डिव्रतवानहार्षीत्रिघ्न्येकमासक्षपणान्यकार्षीत् ॥५४॥
आकारितो रत्नपुराधिपेन, स्वकीयगेहे हरिवाहनेन । अथो चतुर्मासकपारणायां, समागतः सोऽप्यपहाय मायाम् ॥ ५५ ॥
केनापि कार्येण तदाक्षरेखस्तत्रागतोऽभूज्जिनधर्म एषः । वैरी पुनः पूर्वभवस्य तेन, त्रिदण्डिनाऽदर्शि स दुर्जनेन ॥ ५६ ॥
तं वीक्ष्य राज्ञे स जगाद दुष्टस्तदाऽस्मि भोक्ताऽत्र गृहे निविष्टः। स्थालं यदा दास्यसि पृष्टिदेशे, त्वमस्य राजन्मृदुलोमलेशे ॥५७॥
विज्ञाय तस्याग्रहमित्यनेन, तथैव चक्रे धरणीधवेन । तप्तं त्रिदण्डी परमान्नमत्ति, प्रीत्याऽस्य पृष्टिं शिखिना भिनत्ति ॥५८॥
श्रेष्ठी स्मरन् प्राक्तनकर्मयोगं, यतीव सम्यक् सहते स रोगम्। कृतेऽशने स्थालमिदं गृहीतं, दूरे वसामांसरसैः परीतम् ॥५९॥
गत्वा स्वगेहे स्वजनानशेषान् , जिनाँश्च संमान्य गुरून् सुवेषान्। सङ्घं चतुर्धा परिपूजयित्वा, तेपे तपः शैलगुहासु गत्वा ॥६०॥

१ पारी जावंत्रीति भाषायाम् .

उत्सर्गमाधाय किलैकपक्षं, तस्थौ स पूर्वाभिमुखः समक्षम् । तथा तिरश्च्यप्यपरासु दिक्षु, ध्येयी प्रमोदेन दिनं विदक्षः ॥६१॥
पयःश्रृगालैरपि भक्ष्यमाणः, मोहामपीर्मां स तितिक्षमाणः । मासद्वयान्ते मृतिमाप्य जातः, सौधर्मवासी हरिराससातः ॥६२॥
त्रिदशत्रयैरावणनामकुम्भी, जज्ञेऽभियोगी मरुदेव दम्भी । निरीक्षते पूर्वभवे अनीने, स्वयं पराभूतमिमं शचीनम् ॥६३॥
स हस्तिरूपं न करोति यावत्प्रेष्यं वज्री स जघान तावत् । श्रुत्वा हरिस्त्वं ननु चक्रवर्ती, आतश्चतुर्थः शुभभावधर्ती ॥६४॥
सुरः स ऐरावणनामधेयस्तिर्यक्षु कृत्वा भ्रमणान्यनेकः । जातोऽसितान्तोऽस्त्यथ जन् प्रबोधं, सार्द्धं त्वयाथाप्यसुखं विरोधम् ॥६५॥
यद्यद्धिमज्ञानतपःप्रभावात्स्वसाधनादधमस्वभावात् । सर्वेषु कार्येष्वपि शङ्कनीयं, त्वया प्रमत्तेन न वर्तनीयम् ॥ ६६ ॥
कृत्यैकमप्यत्र निजं सपक्षं, संतिष्ठते यो न नरः सयत्नम् । स कृष्णसर्पं रचयन्नपुक्षं, दधाति सौख्यं शयनादतुच्छम् ॥ ६७ ॥
कीदृग्विधोऽयं समयः सहायाः, के मामकीनाः क इहास्त्युपायाः । के वैरिणः कायकलाऽप्यलं का, मुहुर्विधेया स्वहृदीति शङ्का ॥६८॥
उपस्येति विद्याऽरिजयस्य कर्त्री, श्रीभानुवेगेन विपादहर्त्री । दत्ताऽस्य सोऽष्टाभिरथाङ्गनाभिः, सुष्वाप रात्रौ सह चास्ति ताभिः ॥
ततः समुत्थाप्य कृतममीक्षः, सदेशजातः शिखरीव नीक्षः । यद्वेष मुक्तः सुकृती सखीक्षः, कुत्राप्यरण्ये सुविमुक्तशीक्षः ॥७०॥
यावत्प्रभातेऽजनि जागरूकः, स्वं पश्यति स्मैष तदैव धूकः (तदाऽपधूकः) । सनत्कुमारः पतितं विशाले, कूर्वारणन्नुकाननान्तराले ॥
विचिन्तयत्येष किमिन्द्रजालं, कन्याष्टकं तत्क गुणै रसालम् । फेत्कारवत्यः परितो भ्रमन्त्यः, शिवाः किमीक्ष्यन्त इमा इयत्यः ७२॥
मम प्रहारे रचितव्यथस्य, संभाव्यते चा ठगनोद्यतस्य । विक्रीडितं वैरकृतः सुरस्य, मोहामरोपाकुलमानसस्य ॥ ७३ ॥
यावद्विशङ्कं चरति स तावत्सौधं समैक्षिष्ट महत्सुधावत् । शैलस्य श्रृङ्गे करुणस्वरेण, स्त्रियोऽत्र कस्याश्चिदितं परेण ॥ ७४ ॥

प्रोच्चैर्गतः सप्तमभूमिकायां, ध्वनेर्विशेषं शृणुते शुभायाम् । एवं स्ववक्त्रेण कुलाङ्गना सा, तदा वदन्त्यस्ति धृतप्रवासा ॥७५॥
कुरुस्फुरद्वंशनभःशशाङ्क, श्रीवत्ससंशोभितभुजान्तराङ्क । सनत्कुमार त्वमहो न भर्त्ता, यदीह तत्प्रेत्य भवाधिहर्त्ता ॥ ७६ ॥
तदग्रतोऽभूत्प्रकटस्तदानीमयं नराधीशसुतोऽभिमानी । पप्रच्छ का सुन्दरि कस्य पुत्री, सनत्कुमारेण कुतोऽस्ति मैत्री ॥७७॥
दत्त्वासनं सा न्यगदत्कुमारं, शुभागमोऽमुत्र कुतस्तवारम् । त्वद्दर्शनान्मेऽस्ति मनः सहर्षं, वनं पयोदादिव सप्रकर्षम् ॥७८॥
सुता सुनन्दाऽस्म्यरिमर्दनस्य, द्रङ्गे किलोर्वीतिलके स्थितस्य । सनत्कुमारं प्रियमेव कर्तुं, जाता सरागा च सुखं विहर्त्तुम् ॥७९॥
तस्मै पितृभ्यामहमेकचित्ता, पयःप्रदानेन तदा प्रदत्ता । वज्राग्रवेगेन हृताऽत्र विद्याभृता कुमार्यप्यहमस्य विद्यात्(द्या) ॥८०॥
विनिर्मिते सद्मनि शृङ्गिशृङ्गे, बलाद्विमुक्ताऽत्र विमानचङ्गे । रात्रिन्दिवं शोकसमुद्रमग्ना, कष्टेन वर्त्ते कदलीव भग्ना ॥८१॥
अत्रान्तरेऽसौ खचरः समागाद्दृष्टः कुमारः सहसा निरागाः । उत्क्षिप्त आकाशतले बलेन, विद्याभृता तेन कृतज्वलेन ॥८२॥
वज्राहतेवात्यसुखं भजन्ती, हाहारवं स्वीयमुखे सृजन्ती । भूमण्डलेऽसौ पतिता वराकी.कुमारिका बाणहतेव काकी ॥८३॥
विधायिनी सत्पुरुषक्षयस्याभूवं विलापान् सृजतीत्यशस्यान् । अथो कुमारः खरमुष्टिघातैस्तं जीवमुक्तं विदधे हहा तैः ॥८४॥

पुनः सुनन्दापुरतः समागतः, सनत्कुमारः कुशलश्रिया श्रितः ।
आश्वासयामास च तां महाद्भुतं, वृत्तान्तमाख्याय निजं वचोचितम् ॥ ८५ ॥

सा तेन गन्धर्वविवाहवृत्त्या, करीकृता चेतसि वाचि सत्या । तस्यास्तु लावण्यकलां न कश्चिद्वक्तुं क्षमः स्याद्भुवने विपश्चित् ॥८६॥
मुखेन जिग्ये ननु पार्वणः शशी, स्फुरन्मयूरश्चिकुरैः कृतो वशी । गण्डौ पुनर्द्वावपि रत्नदर्पणौ, भुजौ मृणाले कृतनीसमर्पणौ ॥८७॥

पाणी धृताम्भोरुहकान्तिदम्भौ, कुचौ सुधापूरितहेमकुम्भौ । मृदू तदूरू कदलीविलासौ, मध्यप्रदेशो च तन्निम्नताभौ ॥८८॥
स्त्रीदर्शनप्रेमरसप्रपूर्णः, श्रीमैत्रया भोगभरैरजूर्णः । उवास तत्रैव गृहे सुखेन, स्वकस्वरां चेतसि शङ्कनेन ॥ ८९ ॥
सन्ध्यावली तत्र सदैव रहसा, सा वज्रवेगस्य समागता स्वसा । विलोकयामास मृतं सहोदरं, निजं धरित्रीपतितं महोकुरम् ॥९०॥
क्रूरेण केनापि विनाशितो मे, भ्राताऽत्र भाजीव विशिष्टशोभे । इतीव तन्मारणसावधानाऽभूयावता सर्मतिभ्रमताना ॥९१॥
नैमित्तिकोक्तं वचनं सदैवं, तस्याः स्मृतं निर्मितविश्वजेदम् । भविष्यति भ्रातृविनाशकारी, भोक्ता त्वदीयो भुवि चक्रधारी ॥९२॥
साऽपि क्रमाम्भोरुहि तस्य लग्ना, गुणात्मदत्तस्य वियोगखग्ना । भार्या कुमारेण निजा सुनन्दाऽनुज्ञावशात्तत्र कृता सनन्दा ॥९३॥

श्रीचन्द्रवेगस्य महर्षिवाक्यतः, पतिः कनीनां भवितेव धीमतः ।
सनत्कुमारोऽस्य यतस्ततस्तय(तौ), तद् चन्द्रवेगः श्वशुरोऽस्य जायते ॥ ९४ ॥

श्रीचन्द्रवेगश्वशुरेण तत्र, श्रीभानुवेगेन तथा स्वपुत्रः । प्रेष्येकदाऽसौ हरिचेण एकः, प्रचण्डवेगोऽपि ससद्विवेकः ॥ ९५ ॥
ताभ्यामुभाभ्यां प्रथमागताभ्यां, नृपेषसशाह्रथैर्युताभ्याम् । प्रोक्तं कुमाराय निशम्य जातं, तं वज्रवेगस्य सुतस्य घातम् ॥९६॥

विद्याधरोऽत्राशनिवेगनामभृत्त्वन्मारणार्थं समुपैति भूमिभृत् ।
आया पितृभ्यां महितौ त्वदन्तिके, ततो धनां धेहि धृतिं हृदि स्वके ॥ ९७ ॥

यावद्वयोः साम्प्रतमेव तातौ, समेष्यतस्त्वन्निकटे तथा तौ । अत्रान्तरे व्योमनि तूर्यशब्दः, समुत्थितः प्रावृषि वारिदाब्दः ॥९८॥

---

१ प्रतिघस्य कोपस्य मथनेन विस्तारेण सहिता २ सकम्पाना

तौ चानुवेगाभिधचन्द्रवेगौ, तत्रागतौ सैन्ययुतौ स्ववेगौ । नरेश्वरौ द्वावपि चारु कर्तुं, कुमारपार्श्वेऽखिलं प्रहर्तुम् ॥ ९९ ॥
अथाधिकामर्षसमागतस्य, विद्याधरस्याशनिवेगकस्य । सैन्यारवेण प्रविधाय मुक्तं, नभोऽङ्गणं तन्मुखरत्वयुक्तम् ॥ १०० ॥
तत्संमुखं व्योमनि तेन गत्वा, तदा कुमारेण बलं हि धृत्वा । विद्याभृदालीसहितेन युद्धं, कर्तुं समारब्धमतिप्रसिद्धम् ॥ १०१ ॥
आक्रान्तविक्रान्तशिरोमणीकं, समुच्छलच्छोणितधोरणीकम् । नभोऽभ्रमुक्तावृतमेदिनीकं, द्वन्द्वं करोति स्म तयोरनीकम् ॥ १०२ ॥
तौ चन्द्रभान्वादिमवेगविद्याधरौ तदानेन विमुच्य विद्याः । जितौ क्षणेनाशनिवेगनाम्ना, विद्याभृता तौ रवितुल्यधाम्ना ॥ १०३ ॥
अथो कुमारेण समं चकार, द्वन्द्वं स विद्याभृदुरुप्रहारः । विद्याभृताऽमोचि महोरगास्त्रं, मुक्तं कुमारेण च गारुडास्त्रम् ॥ १०४ ॥
आग्नेयशस्त्रं जलशस्त्रमुक्त्या, तत्तामसास्त्रं रविशस्त्रयुक्त्या । निषेध्य खण्डीकृतचन्द्रहासः, कृतः कुमारेण स विप्रयासः ॥ १०५ ॥
शस्त्रेण दोर्भ्यां रहितः क्षणेन, कृतो विशाखः शिखरीव तेन । कृतो यमो वज्रविमोचनाय, नीतो मृतिं भिन्नशिरा विधाय ॥ १०६ ॥
चमूः समस्ताशनिवेगसत्का, लग्ना कुमारांह्रियुगे समुत्का । अङ्गीकृता तस्य रमाऽप्यखर्वा, प्राप्ता जयश्रीः सुकृतेन सर्वा ॥ १०७ ॥
सचण्डवेगादिनभोगवारः, प्राप्तः स वैताढ्यगिरिं कुमारः । स्थितः पुरे चाशनिवेगनेतुः, खेटाः स्थिताः स्वस्वपदे परे तु ॥ १०८ ॥
मुहूर्तयोगोरुषु सुन्दरेषु, लग्नेषु वारादिषु चोत्तमेषु । विद्याधरालीविहिताऽभिषेकः, खेटैः कृतस्तस्य शुभातिरेकः ॥ १०९ ॥
अथैष वैताढ्यगिरावपापश्चक्रित्वमाप्याजनि सप्रतापः । श्रीचण्डवेगेन नृपेण तस्य, विज्ञप्तमाप्यावसरं विहस्य ॥ ११० ॥
मामेकदा भूमिपते ह्यनार्त्तार्चिर्मालिनोक्ता मुनिनेति वार्त्ता । त्वत्पुत्रिकोद्वाहविधेर्विधाता, चक्री चतुर्थो भविता प्रमाता ॥ १११ ॥

१ चन्द्रवेगश्चण्डवेगश्चैक एव प्रतिभासते.

जन्मास्तु तासां सफलं तदद्य,त्वदीयपाणिग्रहणेन सद्यः। उक्त्वेति वाग्भिः सममस्य सृष्टः,पुत्रीविवाहोऽप्यमुना गरिष्ठः ॥११२॥
अष्टाह्निकां शौभस्यजितोरुचक्रे,चक्रेऽप वैताढ्यगिरौ विचक्रे। नित्येष्वनित्येष्वपि सुन्दरेषु,श्रीमज्जिनाधीश्वरमन्दिरेषु ॥११३॥
अन्येषु तीर्थेष्वपि तीर्थयात्रां, कुर्वन्नयं नाथ्यमहैरमात्राम्। एकत्र नीचैः सरसि प्रधाने,प्राप्तः स्फुरत्फुल्लसताधिताने ॥११४॥
निरीक्षते स्माधिककौतुकानि,स्त्रीवृन्दलोकैः सहितः शुभानि। तत्रागतस्तावदमुष्य मित्रं,महेन्द्रसिंहः श्रृणुते स चित्रम् ॥११५॥
जीया अजस्रं चरणायमुत्र, श्रीविश्वसेनक्षितिपालपुत्र। सनत्कुमार त्वमघाशशाङ्कि(र्य)न्दिभजस्तत्र सदेति वक्ति ॥ ११६ ॥
गृह्णन् सरःस्वाधिसरोजगन्धं(स्थं),तस्यैव शृण्वन् यशसः प्रबन्धम्। ददर्श कुञ्जस्कदलीगृहस्थं (स्थ),सनत्कुमारं सुखकार्यवस्थम्॥
अनङ्गसृष्टिप्रतिमं विशिष्टं,तद्दर्शने वीक्ष्य मनोऽस्य हृष्टम्। नीतः स्वपार्श्वे विभुना वयस्य,आलिङ्गितश्चाधिकसौमनस्यः॥११७॥
आगत्य सोऽपि प्रथितप्रणामः, प्राप्तासनोऽस्थात्सविधेऽभिरामः।
अपृच्छदेतं नृपतिः सुखं ते, राज्येऽस्ति जन्ये च निजेऽतिक्रान्ते ॥ ११८ ॥
मातुः पितुर्भ्रातृकदम्बकस्य, श्रेयोऽस्ति मित्रोत्तम मामकस्य। अथाप्तपश्चात्तपदुप्रसादश्चक्रे स विज्ञप्तिमनाप्तसादः ॥ १२०॥
कायेन दे नाथ पितुर्जनन्याः,श्रेयः स्थितिस्त्वन्तरहो तदन्या। यस्मादकीनोऽश्वकृतापहारः,पित्रोर्व्ययां राति यथा प्रहारः१२१
त्वदीक्षणार्थं दशदिक्षु शोकात्संप्रेषितास्त्वक्षणकेन लोकाः।
धृताधृतिस्ते सचिवाऽपि वृद्धा, स्वयं चलन् सोऽथ मया निषिद्धः ॥ १२२ ॥
अहं ततः सैन्यजनान्युपेतस्त्वदाप्तये प्रस्थित एव नेतः। चिरं परिभ्रम्य घना तथा गां, निवृत्तसैन्यः क्रमतस्त्विहागाम् ॥१२३॥

दुर्वारकान्तारपुराकरेषु, प्रोद्दामदेशेषु महीधरेषु । एकाकिनो(ना) वेगवताऽथ मित्र, दृष्टो मया त्वं न हि कुत्र कुत्र ॥१२४॥
परं न दृग्गोचरतां प्रयातः,कियत्सु वर्षेषु गतेषु दातः । पुराकृतानां तमसां किलान्ते,त्वमद्य लब्धो निधिवत्सुकान्ते ॥१२५॥
वृत्तं विभो ब्रूहि निजं समूलं,निःशेषविद्वेषिशिरस्सु शूलम् । तदोक्तमेतेन ममैति निद्रा,भार्येयमेतत्कथयिष्यति द्राक् ॥१२६॥
जजल्प हृच्चित्रकरं तदीयं,तदा चरित्रं कुवलयपीयम् । प्रज्ञप्तिकायाः प्रकटप्रभावात् , कायेन वाचा सरला स्वभावात् ॥१२७॥
मरुञ्जयश्रीप्रभृतिर्दुरन्तः, श्रुतस्तदीयो ह्यमुनाऽप्युदन्तः । सुधारसास्वादसमा दशा सा, तयोस्तदाऽभूत्समनःप्रकाशा ॥१२८॥
अथैष वैताढ्यगिरौ प्रभुत्वाद्राज्यं पुनः पालयति स्म गत्वा । मित्रेण सार्कं परिवर्जयित्वा, सर्वाण्यवद्यानि रिपूँश्च जित्वा ॥१२९॥
महेन्द्रसिंहेन पुनः सुशीतैः, प्रोक्तं वचोभिः स्वधियोपनीतैः । माता तवास्ते बहुदुःखतप्ता, विपण्हृद्देव तथास्ति वप्ता ॥१३०॥

तस्मादतः प्रस्थितिरेव योग्या, बह्वी पितुः श्रीस्तु तवैव भोग्या ।
पाश्चात्यचिन्तामपि माऽथ मुञ्च, स्वीयं कुटुम्बं कुरु सोत्सवं च ॥ १३१ ॥

तदीयबुद्ध्या कृतवान् प्रयाणं,सार्धं गृहीत्वा दलमप्रमाणम् । चक्री स युक्तो मणिभूषिताभिर्विमानमालाभिरनिप्रभाभिः ॥१३२॥
विद्याधरोद्दामरमाभिरामश्चलक्षभस्त्यद्भुतरूपकामः । प्रापाद्भुतं भूरि सृजन् जनस्य, श्रीहस्तिनापुर्नगरं प्रशस्यः ॥ १३३ ॥
पितृप्रसूनागरमानसान्तस्तदा प्रमोदः प्रबभूव कान्तः । तद्दर्शनोद्दामसुधाम्बुसिक्ता, जाता विशश्चासुखदाहमुक्ताः ॥ १३४ ॥
षट्खण्डभूभारतवर्षभोक्ता निधीनवाप्यंहितले प्रयोक्ता । चक्रादिरत्नानि चतुर्दशायं, बभार चक्री दलयन्नपायम् ॥ १३५॥
द्वात्रिंशदुर्वीशसहस्रसेव्यः, सोऽभूच्चतुःषष्टिसहस्रदेव्यः । विभूषयन्ति स्म गृहाणि तस्य, द्विपाश्वपत्तीष्टरथाश्रितस्य ॥१३६॥

वर्षाण्यपि द्वादश चास्य हृष्टः, पट्टाभिषेकः समभूत्प्रहृष्टः । गजस्त्रिमाव्दीव पटुप्रतापश्चक्रेण जातो भरतक्ष्मापः ॥ १३७ ॥
अथो सुधर्माभिधसत्सभायां,शक्रः सुरश्रेणिनिषेवितायाम् । श्रोतोमणीनामकमिष्टकृत्यं,प्रमोदतः कारयति स्म नृत्यम् ॥१३८॥
ईशानतः सङ्गम आजगाम,तदेन्द्रपार्श्वे त्रिदशोऽभिरामः । सज्योतिषां सूर्य इवापरेषां,हरन् सुराणां रुचिरूपरेखाम् ॥१३९॥
प्रादुस्तदासप्रभमादितेयाः,तेजःकलाऽमुष्य कुतोऽस्त्यमेया । ऊचे नृपाऽऽचाम्लकवर्द्धमानं,कृतं तपोऽनेन पुरा प्रधानम् ॥१४०॥
सद्योतयत्तावदयं सुरोऽतिप्रौढं धराकः कुतुकं तनोति । युष्मासु यावन्न सनत्कुमारः, समीक्ष्यते रूपगुणैरुदारः ॥ १४१ ॥
तदैजयन्तो विजयोऽप्यनिष्टं, द्वौ मन्यमानौ वचनं पटिष्ठम् ।
सुरौ मिथो मन्त्रयतः सुदिव्यं, रूपं कथं स्यान्मनुजस्य नव्यम् ॥ १४२ ॥
यादृग्जयेत् पद्मिषु सत्करीटः,स्याद्(वा)दृगप्यान्तरितश्च कीटः। हीनो जयेत्तादृश एव मर्त्यः,किं नास्य बिभेति नुतायमर्त्यः १४२
प्रजल्पतो सत्यवचोऽपि किञ्चिन्नासादृशां वा प्रभुता कथञ्चित् । एतादृशां यौक्तिकमाधिपत्यं,प्रकुर्वतां सत्यतयाऽप्यसत्यम् १४४
तच्चक्रिरूपस्य तदैव द्वेषी, परीक्षणार्थं कृतविप्रवेषौ । द्वौ हस्तिनाख्ये नगरे प्रयातौ, तद्रूपमालोकयतस्तथा तौ ॥ १४५ ॥
एवं पुनश्चिन्तयतो मघोनाऽमुनाऽस्य सद्रूपकल्लोविलोना ।
साऽस्मिन् घनाऽस्तीति गताभिमानौ, जातौ शिरोधूननसावधानौ ॥ १४६ ॥
प्रजल्पतश्चक्रभृताऽपि पृष्टौ, तत्कारणं तत्र तदीयदृष्टौ । स्वां चक्रिणं रूपधरं सुरीयं, श्रुत्याऽऽवहस्मेम हृदस्मदीयम् ॥१४७॥

---

१ इन्द्रेण २ देवौ.

समागतौ सम्प्रति दूरदेशात्त्वदन्तिके द्वाःस्थकृतप्रवेशात् । रूपं सुरेभ्योऽप्यधिकं तवेदं, दृष्ट्वा मनो नौ मुदितं ह्यखेदम् ॥१४८॥
तदा नृपेणोक्तमहो युवाभ्यां, किं मर्दनस्यावसरे शुभाभ्याम् । लिप्ते च तैलेन खलेन देहे, प्रेक्षा कृताऽऽगत्य मदीयगेहे ॥१४९॥
क्षणं प्रतीक्ष्य प्रविलोकनीयं, रूपं शुभालङ्कृतिभृन्मदीयम् । इत्येवमागूर्य नरेश्वरेण, विसर्जितौ तौ च मदोद्धुरेण ॥१५०॥
निर्मापिता मज्जनयुक्तिरेपा, देहे नरेन्द्रेण पुनर्विशेषात् । ततः स दिव्यांशुकसारहारः, सर्वाङ्गशृङ्गारविधिं दधार ॥१५१॥
द्विजौ समाकारितवान् पुनस्तावुच्चैः सभायां नृपतिः पुरस्तात् । दृष्ट्वा विभुं रूपमदोपयुक्तं, धत्तो मुखं कृष्णतरं विरक्तम् ॥१५२॥
तयोः पुनः प्राह नराधिनाथः, कुतो विलक्षावधुना विभाथः । निवेद्यतां कारणमेवमुक्ते, तावूचतुस्तस्य पुरः स्वशक्तेः ॥१५३॥
यादृक्कृताभ्यङ्गविधौ शरीरे, चङ्गत्वमासीत्तव मेरुधीरे । तादृङ् न शृङ्गारसमाकुलेऽपि, प्रदृश्यते साम्प्रतमुत्तमेऽपि ॥१५४॥
कुव्याधयः सन्ति तवाङ्गमध्ये, संक्रान्तिमाप्ता बहुला अवध्ये । क्षणे क्षणे ते क्षयमानयन्ति त्वद्रूपशोभां विफलां सृजन्ति ॥१५५॥

वक्ति चक्री बहुबुद्धिमद्भ्यां, ज्ञातं कथङ्कारमिदं भवद्भ्याम् ।
विद्या कला काप्यथवा निमित्तं, किं वाऽवधिज्ञानमिहास्ति वित्तम् ॥ १५६ ॥

इतीव पृच्छामुखरस्य तस्य, क्षितीश्वरस्य प्रश्रितादरस्य । पुरश्चलत्कुण्डलशोभमानौ, जातौ सुरौ तौ प्रकटौ समानौ ॥१५७॥
निवेदयामासतुरिन्द्रवाण्या, मात्सर्यमाधाय मतिप्रहाण्या । प्राप्ताविहावां नरदेव तूर्णमालोकितस्त्वं गुणरत्नपूर्णः ॥ १५८ ॥

धन्यस्त्वमत्राभरणं पृथिव्या, यस्य स्तुतिः स्वर्गपुरेऽपि भव्या ।
वन्दिभ्रमं देवपतिस्तनोति, सत्त्वं न ते कोऽपि सुधीर्मिनोति ॥ १५९ ॥

शारीरिकस्ते सुषमाप्रपञ्चस्तेजश्च रूपं पटु यौवनं च । वृद्धिं गतं कालमियन्तमेतदनुक्षणं हानिमथैति नेदः ॥ १६० ॥
चित्तेऽस्मदीयेऽद्भुतमेतदेव, इमाममरूक्षान्तः प्रतिजानाति देव। क्षणेन यद्व्याधिवशाद्विशिष्टात्त्वद्रूपहानिस्त्वियतीह दृष्टा ॥१६१॥
अतः परं स्यादुचितं यथा ते, तथा विधेयं नृप शुद्धजाते। उक्त्वेति यातौ निजदेवलोके, सुधाशुभौ द्वावपि नष्टशोके ॥१६२॥
अथैव चक्री तनुसङ्गिमानं, दृष्ट्वा भवार्द्दं मुमुचेऽभिमानम् । रूपे क्षणेनैवमिति हीयमाने, वपुष्षु किं नाथ पुनर्न जाने ॥१६३॥

किं किं न कायस्य कृते मयाऽस्य, पाप कृत प्राणिगणं विनाश्य ।
यद्यस्ति तस्यापि दशेदृशी स्रा, तर्हीषु राज्यादिषु कीदृशीहा ॥ १६४ ॥

एतेन देहेन न कस्य कस्य, सृष्टानि कार्याणि मया परस्य। दृष्टान्यवक्रं कथमार्षियुक्तः, स्वकार्यकर्त्तव्यविधायशक्तः ॥१६५॥
अद्भुतकृतं यत्सुकृतं पुरा तत्तत्र प्रकुर्वेऽद्य नयं प्रमादः । धर्मं न रुग्व्याधवपुः करिष्ये, व्यर्थीकृतात्मीयजयो मरिष्ये ॥१६६॥
सद्भोगसुखायसमर्थकायश्चित्ते परान् भोगसुखो निधाय । ईर्ष्याभिपादं परमं वहिष्ये, चिन्तातुरः स्वाङ्गसुखं हरिष्ये ॥१६७॥
जीवः समास्वादितपूतिवीर्यः, शकृन्मयस्त्रीजठरेऽवतीर्य । पवित्र्यवाञ्छां कुरुते वराकः, स्नानश्रिया शोजनयेव काकः ॥१६८॥
चिन्तामणिं को दृषदा जहाति, तृणेन कः कल्पतरुं ददाति। कणेन कः कामगवीं च राति, कायेन को धर्मधनं जहाति ॥१६९॥
अन्तर्विमृश्येति सुतं स्वपट्टे, निवेश्य कीर्त्युत्सुकजन्हुपट्टे । श्रीअर्हद्वर्यागुरुसङ्घसन्मानाद्यैः कृतार्थीकृतमर्त्यजन्मा ॥ १७० ॥
षट्खण्डचक्रिरमामपास्य, प्रीत्या सुरश्रेणिकृतोरुदास्यः । गत्वोपकण्ठे विनयंधरस्य, जग्राह दीक्षां सुगुरूत्तमस्य ॥ १७१ ॥
अहर्निशं स्वीकृतशुद्धनिष्ठः, सम्यक्कया शिक्षितसूत्रशिष्टः। कृतोद्यमो मोक्षपथाय पडं, तपः करोति स्म धृतमतिष्ठम् ॥१७२॥

निधानरत्नान्यखिला रमण्यः, पदातयो मन्त्रिजनोऽप्यगण्यः ।
अनुव्रमन्ति स पमत्र मासान्, इत्थौवताप्येष न तान् कृताशान् ॥ १७३ ॥

अन्तर्मिलच्चीनककूरचक्रं, गलत्तनीजं पिबति स्म तक्रम् । तपस्य षष्ठस्य स पारणायां, कृतस्फुरद्दुर्गतिवारणायाम् ॥ १७४॥
असात्तपःकर्मवशात्सदाहे, देहे पयःपानवशादिवाहेः । जाता महर्षेः प्रकटाः कुरोगाः, कुष्ठादयो निर्मितकष्टयोगाः ॥१७५॥
तपःप्रभावाउदियाय लब्धिव्रजस्त्विवेन्दूदयतः सदब्धिः । तथाप्यसौ नोत्सहते चिकित्सां, कर्तुं स्वदेहे प्रवहन् यदक्षाम् ॥१७६॥
जानाति यत्पूर्वभवार्जितानां, स्वकर्मणामत्र ममोदितानाम् । अवेदितानां न विमुक्तिरास्ते, स्ववेदनायां तदसावुदास्ते ॥१७७॥

कुक्षयक्षिपीडां परमं ज्वरं च, श्वासं च कासं ह्यशनारुचिं च ।
कण्डूमितः सप्तशतीं समानां, सोढुं स लग्नो व्यथनं रुजानाम् ॥ १७८ ॥

अस्य प्रशंसा रचितोर्ध्वलोके, पुनः शचीशेन यदत्र लोके । अश्रद्दधानौ एवैष मयापि कार्त्तस्वरमत्तश्चेतसि वेदनार्त्तः ॥१७९॥
तावेव कर्तुं मरुतौ च दीक्षां, प्रत्युत्सुकस्यास्य मुनेः परीक्षाम् । समागतौ निर्मितवैद्यवेषौ, कुशस्थलीव्रेपजसद्विशेषौ ॥१८०॥
एकस्य शैलस्य तले मुनीन्द्रः,स्वधैर्यनिर्भर्त्सितसत्करीन्द्रः । स्थितस्तनूत्सर्गविधिं विधाय,दृष्टः स ताभ्यां जितरोषमायः ॥१८१॥
मन्दारयुक्तागमवर्द्धमानश्चित्रं न कार्त्तस्वरशोभमानः । परिस्फुरत्पादधरो मुनीन्द्रश्चकास्ति नव्योऽभ्युदितो गिरीन्द्रः ॥१८२॥
आत्मीयनाशा(सा)प्रनिवेशिताक्षश्चकास्ति निष्कम्पतनुर्जिताक्षः । निवेशितो धर्मनृपेण मोहद्विपजयस्तम्भ इवर्द्धि(वोर्ध्व)रोहः ॥

कुर्वीत एतौ स्वमुखेन घोषणं, कुष्ठज्वरश्वासकुमुखशोषणम् ।
कुर्वः क्रियायां भिषजौ महीस्पृशां, रुग्भोगनाशं च पुनर्गदस्पृशाम् ॥ १०४ ॥
प्रपारिसोत्सर्गविधिर्मुनीश्वरः, स प्राह तौ मत्यसमक्रियोत्करः ।
द्रव्येण न्यायेन पुनर्द्विधा रुजा, साध्या तदन्तर्युगयोस्तु काङ्क्षया ॥ १०५ ॥
प्रदर्शिता दीपशिखेव निर्मलीकृत्य स्वनिष्ठीवनमार्दिवाङ्गुली १०६
या द्रव्यरुक् सा मयकापि हन्यते,न न्यायरुक् क्षीणमला वितन्यते।
व्याधिस्फुरद्व्याधिनिवारकौषधे, स्वकीयपार्श्वे द्वयमप्यदं दधे। प्रतिक्रिया नैव परं विरच्यते, पुराकृतांहः स्वयमेव मुच्यते॥१०७॥
अज्ञानिभिर्द्रव्यरुजां क्षितिः कृता, केरष्ट नो न्यायरुजोऽस्त्विके धृताः ।
हन्म्यष्टपञ्चाशदधिष्ठितं शतं, कर्माष्टकस्य प्रकृतेः पुरा कृतम् ॥ १०८ ॥
घोरक्रिया चात्र कृता निरीक्ष्यते, न्यायः कषायः कटुको विलोक्यते ।
क्लेशापहारः स्फुटसौख्यकारकः, सितोपलास्वादविधिर्विकारकः ॥ १०९ ॥
एवं यदा न्यायरुजा विनाशे, सामर्थ्यमास्ते जयतोः सकाशे । निवेद्यतां तर्हि सदैव मह्यमाचर्यते यत्स्वधिया प्रसह्य ॥११०॥
इत्युक्तिमाकर्ण्य मुनेः पुरस्तौ, जातौ सुरौ द्वौ प्रकटौ प्रशस्तौ। प्रजल्पतश्चेन्द्रकृतां प्रशंसां, तथासहिष्णू विरचय्य हिंसाम् १११
तावेव चायां मरुतौ पुरागतौ, स्वर्गाद्विनिर्गत्य पुनः समागतौ। त्वदीयसत्त्वाधिकतापरीक्षया, न मूर्खता किं प्रकटीकृतेर्ष्यया ११२
मेरु महत्तुं यदि शोधवानां, भज्यन्त एते रदना गजानाम्। गुणस्तुतिं ते रचयन्नसीनः, स एक एवास्ति शुचिः शचीनः ॥ ११३ ॥

आवां कृतार्थौ तव दर्शनेन, स्याद्धा किमन्येन विमर्शनेन । नमोऽस्तु तुभ्यं मुनिपुंगवाय, श्रेयःपुरीमार्गशुभाध्वगाय॥१९४॥
संसारकाराक्षयकारकाय, स्वचक्रिलक्ष्मीत्यजनोत्सुकाय । विनिर्मितस्वात्महितव्रताय, स्वस्त्यस्तु तुभ्यं मुनिशेखराय॥ १९५ ॥
एकत्र संस्थायिसुपर्वचक्रे, यस्य स्तुतिस्ते हरिणापि चक्रे । तथापि धत्से न मनाक् प्रकर्ष, धत्से मदाद्रौ पविवत्त्वमर्षम् ॥ १९६ ॥
लब्धिष्वनेकास्वपि संगतासु, कर्त्ता चिकित्सां न हि रुग्लतासु।योगी त्वमेवासि मनीषिमान्यस्त्वया सदृक्षो मुनिरस्ति नान्यः१९७
समग्रवैराग्यनिधे महर्षे, कुरु प्रसादं विदिताऽत्र वर्षे । अज्ञानतो यत्तु तवापराद्धं, क्षमस्व सर्वं तदथो विराद्धम् ॥ १९८ ॥
एवं महर्षेः स्तवनं सृजन्तौ, पुनः पुनः पादयुगं नमन्तौ । प्रमोदरोमाञ्चितगात्रयष्टी, स्वर्गे सुरौ जग्मतुरार्द्रदृष्टी ॥ १९९ ॥
धौरेयवद्धर्मधुरां दधानः, सनत्कुमारर्षिरपि प्रधानः । महर्द्धिकोऽभूत्त्रिदशः स नाके, सनत्कुमारे शुभपुण्यपाके ॥ २०० ॥
इत्थं समाख्यातमदः पवित्रं, सनत्कुमाराख्यमुनेश्चरित्रम् । आकर्णनीयं कविभिः श्रवोभिः, सुचार्वनुप्राससमूहशोभि ॥२०१॥

॥ इति श्रीसनत्कुमारचरित्रम् ॥

अथ विरक्तचित्तः सत्त्वः सदा सुखी तदन्यस्तु महादुःखीत्येतदुपरि पूर्वकाव्यार्थसम्बद्धमेव षष्ठं काव्यमाह, तद्यथा—

**विरत्तचित्तस्स सया वि सुक्खं, रागाणुरत्तस्स अईव दुक्ख ।**
**एवं मुणित्ता परमं हि तत्तं, नीरागमग्गंमि धरेह चित्तं ॥ ६ ॥**

व्याख्या—विरक्तचित्तस्य वैराग्यापन्नात्मनः सदापि निरन्तरमेव सुखमस्ति । अथ रागानुरक्तस्य रक्तात्मनोऽतीव प्रकामं दुःखमास्ते । एवं परमं तत्त्वं मुणित्वा ज्ञात्वा हि निश्चितं नीरागमार्गे निःसङ्गाध्वनि चित्तं धरत निवेशयध्वमिति काव्यार्थः ॥

अथ विरक्तकामितानां सुखदुःखफलाविर्भावकः स्पष्टीक्रियते दृष्टान्तो जिनपालितजिनरक्षितसत्कः—

मधुराम्भोरुहपम्पा दुर्जनजातौ सदा निरनुकम्पा । शत्रुजननिष्प्रकम्पा चम्पा नाम्नाऽस्ति वरनगरी ॥ १ ॥
सकलहृदयानन्दी माकन्दी तत्र वर्तते श्रेष्ठी । जिनपालितजिनरक्षितनामानौ तत्सुतौ जातौ ॥ २ ॥
नानाव्यापारपरावपरापरकार्यलब्धचातुर्यौ । तावेकादशवारानवगाहेतां सुखाम्बुधिम् ॥ ३ ॥
भूयोऽपि तौ प्रचेलतुरात्मीयसगोत्रवारितावपि हि । प्रवहणमापूर्य बहुप्रकारवस्तूत्करैः सुतराम् ॥ ४ ॥
यावज्जलनिधिमध्ये प्रजग्मतुर्भागमागतावेतौ । प्रचलद्वायुप्रयोगात्तावत्स्फुटमस्फुटत् पोतः ॥ ५ ॥
पुण्यादवाप्तफलकौ जलधेरुपकण्ठमाश्रयन्तौ तौ । उत्तीर्य प्रचुरपयःपूरं दूरं स्थितौ विपदः ॥ ६ ॥
कथमपि रत्नद्वीपं प्राप्याभीक्ष्णं पचेलिमफलानि । कुम्भादीनमनस्कौ वृक्षच्छाया निषेवाते ॥ ७ ॥
तावत्तद्द्वीपाधिष्ठात्री क्षुब्धमानसा देवी । तत्राप पापमूर्तिः प्रत्यक्षघोररूपकरा ॥ ८ ॥
दृष्ट्वा दृष्ट्वा हृष्टा तौ पापिष्ठा मुखे स्फुटं मिष्टा । आचष्टेति निकृष्टा सार्धं भोगान् मया भजेतां भोः ॥ ९ ॥
यद्येषु शीर्षमस्तिष्क नो चेन्निशितासिनाऽमुना झमुना । युवयोर्मस्तकयुग्मं हठात्क्षितिमेवाशु निप्यामि ॥ १० ॥
नीत्वा कन्यकपुंसोर्भान्त्यामभ्यागताक्षितुष्टाभ्याम् । प्रतिपेदे तद्वचनं मृत्युजयं सर्वतोऽप्यधिकम् ॥ ११ ॥
उद्दिश्य क्षणमात्रेणैषा रोषारुणेक्षिणी प्रायः । तावानिन्ये भुवने निजे महापातकोत्पन्ने ॥ १२ ॥

१ आशुगो वायु २ तृणामयम्.

देव्यनयोरस्तदयोदारस्फारोरुशृङ्गारा ॥ १३ ॥
संजज्ञे निर्ह्रीका निर्भीका देहपुद्गलानशुभान् । देव्यनयोरस्तदयोदारस्फारोरुशृङ्गारा ॥ १४ ॥
अमृतमयरसफलानामानीयाहारमेतयोर्दत्ते । भुङ्क्ते च कामभोगानभिरामानिष्टसंयोगान् ॥ १५ ॥
साऽथ तयोरित्यवदत्कदाचिदतिसोन्मदाऽमरी क्रूरा । गन्तव्यं मम लवणोदधौ सुधाभुग्वरादेशात् ॥ १६ ॥
सुस्थितसुरेण सार्द्धं तृणकचवरकाष्ठखण्डमृतकाद्यम् । संशोध्योदधिमध्यात् कृत्वस्त्रिःसप्त वेगेन ॥ १७ ॥
यावदहमिहायामि स्थातव्यं तावदत्र हि युवाभ्याम् । चिन्ता कापि न कार्या धार्या चित्तेऽधृतिर्नैव ॥ १८ ॥
यदि हृदि न स्फुरति रतिः स्थितिभाजोरत्र मामकीनगृहे । तत्पूर्वदिगुद्याने तथोत्तरे पश्चिमारामे ॥ १९ ॥
प्रावृण्मुख्यमृतुद्वयमेकैकस्मिन्निहास्ति नित्यमहो । भ्राभ्यामुत्तीर्यातस्तत्र स्वैरं विहर्त्तव्यम् ॥ २० ॥
न पुनर्दक्षिणदिग्वनभूभागे सर्वथाऽपि गन्तव्यम् । यदहो तत्रास्ति महाभयङ्करो विषधरो विषमः ॥ २१ ॥
तावपि तथैव तद्गिरमङ्गीकुरुतः कृतान्तभीत्येव । सैवमुदीर्य जगाम क्षणतः क्षणदेव रविबिम्बात् ॥ २२ ॥
प्रतिषिद्धावप्येतौ रममाणौ रम्यविपिनवीथीषु । दक्षिणदिग्वनमारात्समीयतुर्वीक्षणोत्कमती ॥ २३ ॥
यावत्तन्मध्यभुवं प्राप्तौ दुर्गन्धदूषितघ्राणौ । तावत्करुणस्वरपरनरमेकमपश्यतां तत्र ॥ २४ ॥
प्रेतवनस्थितशूलाभिन्नाङ्गमिमं महाविलापपरम् । संप्रेक्ष्य चास्थिपूरं परितस्तौ बिभ्यतुः सुतराम् ॥ २५ ॥
तत्पार्श्वात्पप्रच्छतुरेतौ पूतैकमानसौ प्रायः । कोऽसि त्वं केनात्रानीतोऽसि कथं च दुरवस्थः ॥ २६ ॥

१ कृत्वः उत्तरपदे यस्येतिकृत्वा मध्यमपदलोपी समासः त्रिःसप्तपदेन सह कर्त्तव्यः ।

सोऽवादीन्नवगीः काकन्दीवास्तव्यं वणिक्तनयः । स्फुटितप्रवहणमागामहमिह संवीक्षितः सुर्या ॥ २६ ॥
रमितं तया मया सह स्वल्पपराधेऽपि कुपितवत्येषा । कर्त्तिकया छित्त्वाङ्गं शूलायामस्म्यहं दत्तः ॥ २७ ॥
एवमनेके लोकाः शोकाब्धौ पातितास्तया देव्या । कः कामिन्या वशगः कष्टमनिष्टं प्रपश्यो नो ॥ २८ ॥
तद्वाक्याकर्णनतः प्रोद्भूतात्यन्तभीतिकम्पाङ्गौ । तं प्रत्यास्यातस्तौ चिन्तासंतापसंग्रस्तौ ॥ २९ ॥
त्वद्वत्तो आवामपि तया महामायया गृहे नीतौ । तिष्ठावो निगृहीतावथ का गतिरावयोर्जगन्मित्री भोः ॥ ३० ॥
शृणुयामास्यो हि यथा तथा पुमानुक्तवान् वचः शनकैः । युवयोरपि दुरवस्था नूनं संभाव्यते भद्र ॥ ३१ ॥
तस्माद्दीनमनस्काभ्यामाभ्यामुक्तमार्चियर्थिभ्याम् । अस्मन्मरणत्राणोपायं दर्शय दयामय ! भोः ॥ ३२ ॥
करुणापरिपूर्णमनाः स नौ समाचष्ट कष्टगः स्पष्टम् । एकोऽस्ति जीवितव्योपायः कायस्य चेत् क्रियते ॥ ३३ ॥
इह पूर्वदिग्भारामेऽत्यभिरामे सेलकाह्वयो यक्षः । स तुरङ्गरूपधारी परोपकारी सदाऽप्यास्ते ॥ ३४ ॥
पूर्णामावास्यायामष्टम्यामथ चतुर्दशीदिवसे । आगत्य वक्ति स स्फुटं कं पथिकमवामि तारयाम्यहकम् ॥ ३५ ॥
अस्मांस्तारय पालय निर्नाथान् देशपुरपरिभ्रष्टान् । स करिष्यति वस्तूर्णं मनोरथापूरणं निखिलम् ॥ ३६ ॥
विपयासक्तेन मया तदर्चनं नहि कृतं सुकृतगम्यम् । न चवन्त्यां श्रुतवित्त्वां प्रमादपरता विधातव्या ॥ ३७ ॥
स्वीकृत्यैतस्य गिरं दुरन्तदुःखार्दितविघनवृष्टिम् । व्यावृत्य ततस्तत्रागत्य वने स्नानमाधाय ॥ ३८ ॥

१ पुरुषा. २ पूर्णया सहितामावास्या तस्याम्

पूजोद्युक्तमनस्कावमनस्कावङ्गनासङ्गे ॥ ३९ ॥
आदाय धवलकमलान्याजग्मतुरेतकौ हि यक्षगृहे । इति विज्ञप्तिमकार्ष्टामनिष्टकष्टोज्झवाञ्छितौ ॥ ४० ॥
अभ्यर्च्य भूरिभक्त्या नवनवयुक्त्युग्रवादभिष्टुत्य । त्राता प्राणिगणानामार्त्तानामाश्रयस्थानम् ॥ ४१ ॥
त्वं यक्ष रक्षकोऽसि प्रत्यक्षः कल्पवृक्षवद्दाता । भक्त्या न हि कस्तुष्यति रुष्यति न हि कः परुषवाचा ॥ ४२ ॥
एवं विज्ञप्तः सन् तुष्टः सुष्ठ्वेतदुपरि यक्षेशः । कं तारयामि कं पालयामि किल साध्वसाकुलितम् ॥ ४३ ॥
प्रोवाच वाचमनयोर्विनयोद्यतचेतसोरसौ सुमनाः । वैदेशिकावशरणावावां तारय तथा रक्ष ॥ ४४ ॥
अब्रूतामेतौ तं कारुणिकशिरोमणे ! महायक्ष ! । सुदृढतया मत्पृष्ठारूढाभ्यां खलु भवद्भ्यां भोः ॥ ४५ ॥
यक्षेणाख्यायि तदा सर्वमिदं सुस्थतां नयिष्येऽहम् । न हि शृङ्गारोदारा रूपरमा लोकनीया भोः ॥ ४६ ॥
तस्या मायाविन्या मानिन्याः केटके समेतायाः । न मनाक्कर्णे कार्या कटुकाऽपि न मानसे धार्या ॥ ४७ ॥
तद्गीरप्यतिमधुरा स्मरानुरागप्ररोहसंजननी । कथमपि युवयोस्तर्ह्यहमुच्छाल्य निजोरुपृष्ठतटात् ॥ ४८ ॥
यद्यनुरागवशंवदहृदयत्वं जातमेतदुपरिष्टात् । स्थास्यत उन्नतपदवीं तद्युवयोरर्पयिष्यामि ॥ ४९ ॥ युग्मम् ॥
क्षेप्स्याम्यन्तर्जलधेरथ यदि समभावतां समालम्ब्य । हृदयान्निवर्त्य रागं तस्थतुरेकाग्रतरचित्तौ ॥ ५० ॥
प्रतिपेदाते तावपि तदुक्तमत्यादरात्तथेत्युक्त्वा । तावधिरोप्य कुमारौ वियदध्वनि संप्रतस्थेऽसौ ॥ ५१ ॥
अत्रान्तरे तुरङ्गमरूपं निर्माय झटिति निर्मायः ।

१ उपेक्ष्येत्यर्थः. २ भवन्तौ कर्तृपदं.

पवमानजवनगत्या सत्वाधारः प्रयात्यसौ यावत् । तावत्समाजगाम व्यन्तर्यास्मीयधवलगृहे ॥ ५२ ॥
स्वस्मापि तौ वृपश्यन्ती तत्रैतौ दृशा ह्यपश्यन्ती । विपसाद हृदि नितान्तं कुत्र गतौ वञ्चयित्वा तौ ॥ ५३ ॥
तावदयधिप्रयोगादवगतसम्यक्तदीयकसवृत्त्या । आगत्य दवयजलधावेषा तत्केटकेऽधावत् ॥ ५४ ॥
स्पिस्वेयन्तं कालं मत्सद्मनि भोगजन्निमनुभूय । कथममिदित्वा चलितावद्यो भवन्तौ महापूर्तौ ॥ ५५ ॥
निर्मुच्यैनं पञ्चकमम्बीभूतं कृतान्तमिव च्छतम् । मामाश्रित्य पुनर्भोस्तथैव सुखिनौ युवां भवतम् ॥ ५६ ॥
नो चेन्निशितेनैतेनैव कृपाणेन पातयिष्यामि । मस्तकयोर्युगलमिदं भवतं कूष्माण्डफलयुगलम् ॥ ५७ ॥
इत्याद्युदमवचनैर्न क्षुब्धौ वज्रुणेऽप्यपि न क्षुब्धौ । प्रचलैरप्यनलज्वरैर्न सद्मव ( वि ) न्ध्याचलौ चलतः ॥ ५८ ॥
निरुपमरूपवती सा ह्यगण्यलावण्यमङ्गमावहती । शृङ्गारोदारगिरं जजल्प सङ्कल्पजन्मवशात् ॥ ५९ ॥
हा कथमनाथिकाऽहं दुस्सहविरहाग्निदाहसंतप्ता । अशरण्यारण्यगता हरिणीवाहं भ्रमिष्यामि ॥ ६० ॥
मुक्त्वा मामनुरक्तामचलामेकान्तकान्तकमनीयाम् । प्राप्तौ पथिकावस्थामस्थानोद्यानसन्मानौ ॥ ६१ ॥
न कदाचिन्नो भवतोरपराधः क्रोधतः कृतः कोऽपि । हेतोः कस्माद्रुष्टौ सन्तुष्टौ पश्यतोऽभिमुखम् ॥ ६२ ॥
सौयाङ्गसङ्गसखिलासेकादेकान्तसौख्यसमुपेतम् । चिरदाचिंतसमङ्गं मदीयमेतत्प्रकुर्यातम् ॥ ६३ ॥
इत्यादीन्यपि भणितान्यवगणयित्वा न वै विलोकयतः । एतस्या अपि सम्मुखमेतौ यावत्सुरदहृदयौ ॥ ६४ ॥

१ कामार्थं पश्यन्ती. २ कामवशात् ३ हीनमल्पबलरूपस्थानोद्यससन्मानौ ४ भवन्तौ

अवबुध्यावधिबोधात्सविरोधा दीप्तमानसक्रोधा । मद्वचसैष वलिष्यति जिनरक्षित इत्यवश्यतया ॥ ६५ ॥
प्रावर्त्तत सा वक्तुं युक्तं किमदस्तवाप्यहो कर्तुम् । जिनरक्षित ! दक्षशिरोमणे ! कथं गणयसि तृणाय ॥ ६६ ॥
जिनपालितोपरिष्टादिष्टा वाञ्छा कदापि मे नासीत् । हृदयाभीष्टस्तु भवानेवाधिक्येन तत्त्वतया ॥ ६७ ॥
जिनपालितः कदाचिद्यदि न वदति रुष्टधीर्मया सार्द्धम् । तव पुनरेतन्मौनावलम्बनं नैव युक्तमहो ॥ ६८ ॥
त्वद्विरहे मम हृदयं निर्दय ! संस्फुटति भृतसरोवरवत् । तत्प्रीतिपालिकरणाद्धारय वारय विषादभरम् ॥ ६९ ॥
नाहं त्वया विरहिता हितानि मन्ये वनानि गेहानि । हानिरियं महती ते यन्मामपहाय यासि रताम् ॥ ७० ॥
चरणरणन्मञ्जीरा क्षीरादपि मधुरवादिनी वदने । तदुपरि ववर्ष हर्षात्रिदशी सौवर्णकुसुमभरम् ॥ ७१ ॥
उत्कर्णतया स तया समुदीरितवाक्यमादराच्छृण्वन् । विद्धः स्मरशरनिकरैः स्मरँस्तदीयाङ्गरूपगुणान् ॥ ७२ ॥
तस्या मायाविन्या विज्ञानममानमङ्गजं ध्यायन् । विस्मारयन् समस्तं शूलादत्ताङ्गिगीःप्रसरम् ॥ ७३ ॥
प्रथमरतास्वादसुखोन्मुखीभवन्निर्भयत्वमाश्रित्य । सेलगयक्षाख्यातं विषवद्विषमं समवधूय ॥ ७४ ॥

आघ्राय सुरभिगन्धान् घ्राणप्रियकारिणस्तथारूपान् ।
जिनरक्षितः प्रपश्यति तदभिमुखं विमुखसुकृतौघः ॥ ७५ ॥ चतुर्भिः कलापकम् ॥

विषयामिषलवलुब्धं स्तब्धं स्वभ्रातृमोहनिर्मुक्तम् । अवगत्य सेलकाख्यस्तमपातयदम्बुधौ पृष्ठात् ॥ ७६ ॥
निपतन्तं गगनतलात् प्रवृद्धकोपानला बलादमरी । निःसंशयं मृतस्त्वं प्रपलाय्य व्रजसि रे दास ! ॥ ७७ ॥

श्रुत्वा श्रुताऽपि नाहं दृष्ट्वा दृष्टापि दुष्ट ! पापिष्ठ ! । भुक्त्वाऽजीष्टसुखानि प्रणष्टयानस्त्वथो धृष्ट ! ॥ ७८ ॥
प्रलपन्तीति सुनिष्ठुरमम्बरदेशादधस्त क्षिपन्तम् । तीक्ष्णक्षुरप्रधाराग्रेण विच्छेदास्य सर्वाङ्गम् ॥ ७९ ॥
तदनन्तरं शरीरं निशितकृपाणेन खण्डशः कृत्वा । प्रददौ दिग्देवीभ्यो बलिमस्यासादनायासात् ॥ ८० ॥
कुर्वाणा कलकलरवमतिभैरवभैरवीव सुर्येपा । क्षोभयितुं जिनपालितमगात्पुरस्तादप्रतस्तूर्णम् ॥ ८१ ॥
सोऽप्येकाग्रमनाः सन् सेलकमात्मीयसवयसं जानन् । देवीं स्ववैरिणीमिव मन्यानोऽलङ्घयन्मार्गम् ॥ ८२ ॥
संप्राप्य पुरीं चम्पामनुकम्पापूर्णमानसो यक्षः । स्वगृहे मुमोच चैनं कुशलेन स्वल्पकालेन ॥ ८३ ॥
मातापित्रोरग्रे निजानुजव्यतिकरं प्ररूपयति । अस्रप्रपातपूर्वं तावपि कुरुतोऽस्य मृत्युविधिम् ॥ ८४ ॥
जिनपालितः कदापि हि सद्गुरुसंयोगमाप्य निष्पापः । दीक्षां कदलीचक्रे चक्रेतरनिर्भेदस्यान्तः ॥ ८५ ॥
सम्यगधीत्यैकादशसङ्ख्यान्यङ्गान्यनङ्गनिःसङ्गः । मतमुररीकृत्य चिरं द्विसागरायुः सुरः समजनि ॥ ८६ ॥
सौधर्मादायुःक्षयमेत्य विदेहेऽवतारमासाद्य । चारित्रं सुचरित्वा स सिद्धिमुपयास्यति प्राज्ञः ॥ ८७ ॥
अत्रायमुपनयः खलु विज्ञेयः प्राज्ञिभिर्महाप्राज्ञैः । आत्मप्रबोधहेतोर्वैराग्यविकाशनार्थं च ॥ ८८ ॥

अत्रार्थे सिद्धान्तगाथाः—

जह रयणदीवदेवी तह इत्थं अविरई महापावा । जह लाहत्थी वणिया तह सुहकामा इहं जीवा ॥ ८९ ॥
जह तेहिं भीएहिं दिट्ठो आघायमंडले पुरिसो । संसारदुक्खभीया पासंति तहेव धम्मकहं ॥ ९० ॥

जइ एयं नमडहियं अहं विवाहित्तु अप्पगं डहियं । सुहियं न करेमि अहो दहेमि तो देहमग्गीए ॥ ३० ॥
तो मित्तेहिं स नीओ नीओ गेहे सिसुव्व कट्ठेण । कहमवि डुक्खेणेसो संचिट्ठइ गमइ दीहाइं ॥ ३१ ॥
तो जणएणाइट्ठा इट्ठा एयस्स नियतणुअस्स । चिंताउरुव्व दीसइ हीणमणो कहमयं विमणो ॥ ३२ ॥
वक्कुत्तिजुत्तिओ तम्मणस्स नावं सुगूढमवि मुणिउं । विन्नायवयणसोहेहिं गरुअमोहेहिं मित्तुवरिं ॥ ३३ ॥
तेहिं तस्स सरूवे कहिएऽवहिएण तो इमो पिउणा । उल्लवियं कह नवया पारद्धं धम्मियविरुद्धं ॥ ३४ ॥
किमु इब्भकुलुप्पन्ना कन्ना लायन्नरूवगुणपुन्ना । न हु संति इत्थ लोए जं एस असग्गहो गहिओ ॥ ३५ ॥
आरुहिउं धवलहरं मङ्गाए को पडेइ खड्डाए । पिच्चा पीयूसरसं को पियई कंजियं कुहियं ॥ ३६ ॥
जइ संपज्जइ हत्थी को चल्लइ रासहम्मि ता चडिओ । जुत्ताजुत्तं जाणसु अठाणे मा धिइं धरसु ॥ ३७ ॥
तदसग्गहमाइन्निय माया जाया य डुक्खभरखिन्ना । अल्लीणा तप्पासं सुयमेवं भणिउमाढत्ता ॥ ३८ ॥
रे वच्छ सच्छमइणा मयणाउरभावमागएणावि । न हु लज्जामज्जायाहरं[1] खु कम्मंवि कायव्वं ॥ ३९ ॥
नयणंसुवारिधाराभरेण हिययत्थलं खु सिंचंती । विलवइ लवइ गिराए कहं कलंकं कुले देसि ? ॥ ४० ॥
परणेसु कन्नयाणं सयं सयं अन्नमिब्भकुलभूयं । तं नणु कवड्डियाए कज्जे कोडिं परिच्चयसि ॥ ४१ ॥
जाहिं सह हसियभासियलेसोवि हु दोसपोसमावहइ । असुइत्थीणवि तासिं धिद्धी संबंधमहिलससि ॥ ४२ ॥

१ लज्जामर्यादानाशकम् .

जइ आउ अंगजाउं जाउं सज्झो अवरकरम्मि । ता जणणीयमवसो पउणीजउं जणम्मि धुवं ॥ ४३ ॥
कहकुप्परम्मि वससि ? रमसि नीयंगणंगसंगम्मि ? । तुममेगो मह पुत्तो कत्तो मह माणसे सुक्ख ॥ ४४ ॥
नियनयणघणसमए अंबरऽंबरविरायमाणीउं । गच्छंति जम्मठाणे अंबा कायमिणीउम ॥ ४५ ॥
नियपुत्तकुरायाराणोयणकुत्सुनिदाहदूहविया । झूरति कुडुंजरेणं जणणीउ सिहरिणीउव ॥ ४६ ॥
अम्ह कुलमेरुसेलो सजाउं सीयलो य संजाउं । पगेय नंदणेणं तुमए नंदणवणेणुव ॥ ४७ ॥
जो बहुएहिं मणोरहसएहिं उवयाइएहिं विविहेहिं । पत्तोऽसि तुमं पुत्तय सो अम्ह परम्मुहो होसि ॥ ४८ ॥
म मणसु अवमसु मा मायरमायरेण विसयंतिं । मह उवरि धरसु करुणं सरस मह कहसु को धम्मो ? ॥ ४९ ॥
इयाइमाइवयणसामयसित्तोऽवि तस्स कामग्गी । नहु उवसममायणो अहिययरं जलिउमाढत्तो ॥ ५० ॥
नो माय ताय निसुणह उवएस देह मोरहणा मा । जाणामि सयमेयं अहयं तुम्हाण उवइयं ॥ ५१ ॥
इइ जंपिरम्मि तम्मि य इत्तासुए नियसुए निरासंकं । मोहमयलंपिउं ते ठिया अहो चित्तसलिहिया ॥ ५२ ॥
नो मायरंपि पियरं न भायरं कुहियरंपि हु गणंति । कामाउरा मणुसा इहपरलोएसु भयभीआ ॥ ५३ ॥
तो अयगणिउं एसो तहेव सवेय सयणवग्गेस । चिंतामणीवि कक्करतुल्लो मन्निकाए अह नो ॥ ५४ ॥
अह उ(अ)यउम्मिऊय माणं नाणं विन्नाणजायकोसलं । सो मग्गइ तं धावं रेऊय सदसप(य)क्कम ॥ ५५ ॥

१ भवन्तीत्यध्याहार्यम्.

तत्तणुजारसमाणं कंचणमप्पेइ सो सरागमणो । तहवि नमा तं वालं न दिंति चिंतामणीतुल्लं ॥ ५६ ॥
तो वज्जरंति तमिलासुयं जया तुज्झ कज्जमेईए । तो अम्ह मिलसु सत्थे कलंकसंकं पमुत्तूणं ॥ ५७ ॥
तत्तो स तीइ रत्तो मिलिउं नमपेमयम्मि सिक्खेइ । सव्वाउऽवि कलाउ विन्नायरियाउ सीसुव्व ॥ ५८ ॥
नट्टविहीकोसल्ले जाए तं उव्वंति नणु नमया । अज्जेसु वहुयदव्वं कारेमो जेण पाणिगहं ॥ ५९ ॥
मन्नियमिणमेएणवि तदंगसंसग्गलालसत्तेण । हिंमइ गामे गामे नट्टकुलं सुट्टु पयमंतो ॥ ६० ॥
अह रिद्धिमंतमवणीनाहं वेनायमम्मि( मे नि )सामित्ता । नमपेमएण सद्धिं समागउ सिट्ठिउच्छुउ ॥ ६१ ॥
आहूआ तो रन्ना पिरकणयनिरकणुच्छुयमणेण । सव्वेऽवि नमा तो लहु ते पत्ता रायअत्थाणे ॥ ६२ ॥
अमुगदिणे कायव्वं नट्टं तुम्हेहिं अम्हपच्चरकं । इय आइट्ठा रन्ना हिट्ठा तुट्ठा य ते जाया ॥ ६३ ॥
तेहिं समीकयमवणीयलं खलंतीह न हु जहा चरणा । एगो महापमाणो वंसो आरोविउ तत्थ ॥ ६४ ॥
तस्सोवरिल्लभागे गरुयं कठं ठवित्तु तस्संते । दो कीलगा उ निहया तत्थेलानंदणो चमिउ ॥ ६५ ॥
एगत्थ करे गहियं खग्गं तह खेमयं तदन्नम्मि । सच्छिद्दपाउयाउ निहियाउ चलणजुयलम्मि ॥ ६६ ॥
पिट्ठीइ अभिमुहाणि य तहग्गउ अभिमुहाणि सग सत्त । दिन्नाणि तेण पउदस करणाणि सुसिप्पकलिएण ॥६७॥
करणंमी करणंमी दिन्ने छिद्दंमि पाउआसके । अपत्तेसिंसु स कीले किमसज्झं साहसधराणं ॥ ६८ ॥
तन्नट्टकलं पिच्छिय अतुल्लमच्छेरमुव्वहइ लोउ । अज्जम्ह दिच्छिसाफलमुव्वविंतो मिहो एवं ॥ ६९ ॥

सघोऽवि जणो चिंतइ अह पुव्वदेसो पइस्सए दाणं । पढमं तो नणु कुस अम्हेऽवि तउ पडगासो ॥ ७० ॥
तक्कालसवणओ अह राया जणइ नो मए सम्मं । दिट्ठं नाडयमेयं पुणरवि ता मज्झ दंसेसु ॥ ७१ ॥
सयो विम्हयभरियमणो सव्वजणो मोणमासिउं ठाइ । जं किर निवो पयंपइ तं सव्वं अलियमिह सेसं ॥ ७२ ॥
लुद्धो धणम्मि लुद्धो इलासुओ पुणवि मंडए नट्टं । पुव्वंव अपुव्वयरं नाणाविहकरणविहिकुसलो ॥ ७३ ॥
तहवि न दिन्नं दाणं सम्माणं वाऽवि धरणिनाहेण । तो आह अणायारो एसो राओ पहुप्पाओ ॥ ७४ ॥
ईहंतो तद्देहप्परिवाय भूमिवासयो पायं । अकरिंसु तीयवारं नट्टमियरोऽवि धणलुद्धो ॥ ७५ ॥
तत्तो निवो पयंपइ तं पइ नट्टं चउत्थवारमवि । दंसेसु जह मणिच्छियरिद्धिं तुह देमि धणचयं ॥ ७६ ॥
तस्स कहाकोयणकुसलोयणो तो जणो जणइ रायं । निठुरनिक्करुणप्पा तुमं जओ देसि नो दाणं ॥ ७७ ॥
कयरूकुमीए वम्महरससंजीवणमणोहरअमीए । लुद्धोऽसि नणु नडीए सव्वो अम्हेहिं नणु सामि ॥ ७८ ॥
नरुत्तरियाखाजत्थी इलासुओ पुणवि वंसमारुहिउं । इत्थंतरम्मि एसो पिच्छइ अट्टीहिं अच्छरियं ॥ ७९ ॥
कणयकलसअंगीओ नयणसिरीहसियवरकुरंगीओ । रूवेण सुचंगीओ मुहससिजुण्हासरंगीओ ॥ ८० ॥
सोवन्नाहरणाओ नेउरसद्देण मुहरचरणाओ । पट्टंसुयधरणाओ मयणरसासिसकरणाओ ॥ ८१ ॥
पीवरथोरथणीओ रयणुज्जलघमियसिरवरिमणीओ । तरुणीओ बहुगुणीओ सिंगाररसिक्कसरणीओ ॥ ८२ ॥

१ स्यूल

पक्खिज्जंतीउ मुणिं महुरासणपाणमोयगाईहिं । दिन्नाउ सुउविहिणा दाणं दिंतीउ ज्ञत्तीए ॥ ८३ ॥
तहऽवि न गिण्हंति वहुं मुहुं मुहुं न य मुहं पलोयंति । जइणो इरियासमिया नीरागा एसणासत्ता ॥ ८४ ॥
सवियारासुवि अवियारमाणसा साहुणो इमे धन्ना । मणयं न रागलेसो जेसिं नणु उल्लसइ थीसु ॥ ८५ ॥
अहयं पुणो अधन्नो नमीविमोहेण विनमिउ निविरुं । नट्टं करेमि पुरउ पुरपहुणो इत्थिलोलस्स ॥ ८६ ॥
अजसो मए न गणिउ हणिउ य कुलक्कमो कुसंगेण । धिद्धी मं नणु मुद्धं बुद्धी जस्सेरिसी जाया ॥ ८७ ॥
हंसुज्जले कुले मे लग्गो मसिकुच्चउ महामलिणो । एएण डुरायारायरणेणं निंदणिज्जेण ॥ ८८ ॥
को मम्मुहं पलोयइ लोउ सोउदएण किण्हयरं । जो धन्नो कयपुन्नो तहा अवन्नोदया जीरू ॥ ८९ ॥
सोऽहं हंसोऽवि धुवं काउ जाउ कुकम्मदोसेण । जेण नमी असुइकुमी विहुव समीहिया जोत्तुं ॥ ९० ॥
अहमहमो पुरमहो मतोऽवि निवो नमीइ जो सत्तो । सुवहूसु वहूसुवि सुंदरीसु रूवेण संतीसु ॥ ९१ ॥
जस्साजंगुरजोगा संजोगा सयणमित्तवग्गस्स । सोऽवि अहो ! लुद्धमणो पईए नीयनारीए ॥ ९२ ॥
नारीहिँ न के नमिया चमिया जे गोरवंमि इत्थ जए । तेऽवि हु धसत्ति पमिया मोहमहापासगलवद्धा ॥ ९३ ॥
धणजुवणहरणेणं अरिज्जूआ जा समग्गलोयस्स । सा नारित्ति कहं नणु जणिया सब्बे वियद्धेहिं ॥ ९४ ॥
एए पुण कयपुन्ना समग्गसत्तेसु धरियकारुणा । समतणमणीहिरषा समणा उत्तमकुलुप्पन्ना ॥ ९५ ॥

१ न गरिरिति.

जे अगणपसंगा विरया निच्चं रया तवोकम्मे । पंचमदंसे वेदे धारिंति करंति जीवदयं ॥ ९६ ॥
संता दंता संता दिंता धम्मोवएससमुयसंता । एसिं सव्वाणमिमं चरियं होए कयक्षरियं ॥ ९७ ॥
जइ एरिसो अहं पुण होमि कयाऽवि हु पसंतसुहलेसो । तो नरजम्मं सहलं करेमि नणु अन्नहा विहलं ॥ ९८ ॥
इय भीमसंतो सो उदग्गवेरग्गमग्गमल्लीणो । घोरंधयारमज्झे सीवुब्भोउ अहो जाउ ॥ ९९ ॥
कडुयम्मि महुरसाउं अणन्ननरुमंस्वाउं घणवुठी । कुगयगेहम्मि अहो समागउं सेयगयराउं ॥ १०० ॥
अमयं विस व जायं दवानलो सीयलत्तमावन्नो । जं एरिसपरिणामो हियएम्मेयस्स विप्फुरिउं ॥ १०१ ॥
एएसिं साहूणं जा किरिया सा मएऽवि सीकरिया । संसारो य असारो दिट्ठो दिट्ठीइ निच्छयाए ॥ १०२ ॥
पुण्णपवज्जासाउं यवसाउं तस्स जावधारित्ते । सपखो कह धम्मो न लहइ सुकयस्स संजोगं ॥ १०३ ॥
तक्खणमेव खीणे अग्गयसापोस सोहणेसस्स । घाइयकम्मचउक्के संपन्नं केवलं नाणं ॥ १०४ ॥
संसग्गम्मि कुहाऽवि हु चरिउं परिउं गुणेहिं न मणागं । समसत्तुमित्तजोगो इवासुउं जयस जगमज्झे ॥ १०५ ॥
अह नम्हुडियाऽवि महीवइणो चिंतं वियाणिय खणेण । चिंतइ धिरत्थु इत्थीजम्मं मे रइयघणकम्मं ॥ १०६ ॥
तहवि नवतारसं पुण खायलनिम्मलजलेण । पत्तं पावणाणं जणाण घणकम्मवघयर ॥ १०७ ॥
निब्भग्गसेहराए सोहग्गं मे विरक्षु रूवं च । सिविसुउं जस्स वसा पत्तो नीयत्तमवियप्पं ॥ १०८ ॥

---

१ सीकृता

अन्नो पुण अन्नाउवरिकियचित्तो महीवई एसो । लक्किजाइ मज्कुवरिं रत्तो तदणन्नखाणि अहं ॥ १०ए ॥
कज्जत्ती नणु लोउ न वल्लहो कोऽवि कस्सवि इहत्थि । सद्दिठीण अविसया विसया, विसमा विसाउऽवि ॥ ११० ॥
एएहिं पज्जत्तं तत्तं न मुणामि किंपि धम्मस्स । अहमम्मि ( म्हि ) अहम्मपरा सुत्ता मोहस्स निद्दाए ॥ १११ ॥
सुहन्नावणं गयाए नरूगयाए सइंदियजयाए । निज्जियमोहमयाए केवलबोहो समुल्लसिउ ॥ ११२ ॥
तत्तो नरिंदन्नज्जा सज्जा नच्चंतकोउहल्लम्मि । तल्लासीणा आसी वल्लहसंमाणमुज्यमणा ॥ ११३ ॥
सावि वियाणिय रायं नरूणीए उवरि धरियअणुरायं । दिठिवियाराईहिं विचिंतिउं एवमाढत्ता ॥ ११४ ॥
चावल्लमतुल्लमहो मणस्स एयस्स विसयसज्जस्स । रायं अहवा रंकं सव्वंपि विरूंवए कामो ॥ ११५ ॥
कल्लेस रायहंसो काईव वराइया कह ( कहि ) णु एसा । जं रुच्चइ एईए धिघी तं कामउच्चरियं ॥ ११६ ॥
कल्लेस रायसीहो उन्नरूरिउगयघकाहयाकोवो । हीणकुलायारपरा कल्लेसा जंबुईतुल्ला ॥ ११७ ॥
को कम्मेहिं न नरूिउ अहिगयविन्नाणनाणविज्जोऽवि । एयस्स को णु दोसो विलसियमेयं खु कम्माणं ॥ ११८ ॥
इंदो वा चंदो वा बंन्नो रुद्दो मुकुंद खंदो वा । संसारे सव्वजिया वसीकया मोहराएण ॥ ११ए ॥
विसयासत्ता सत्ता ज़ुहिया सुहिया पुणो विरत्तमणा । इय सुहन्नावणन्नावियचित्ताए रायकंताए ॥ १२० ॥
तक्कालमेव केवलमुज्जलमुप्पन्नमुन्नयममोहं । विप्फुरियं सुहकाणं सुहन्नावेणं महागरुअं ॥ १२१ ॥

१ अन्यायोपरिकृतचित्तः.

अह सोऽवि हु पुहईसो पुरश्रोयं जाणिउं घिरत्तमए । एयं मणम्मि ऊायइ विज्झायग्गीव निप्पहउं ॥ १२२ ॥
रज्जमयम्मि खु इमं कोसम्मतुससमतुच्छं मे । जाई मई य हीणा हीणायारो अहं जाओ ॥ १२३ ॥
सोएहिं खसिऊण तह सुदव्ववसेणेहिं मुक्कमणाओ । मज्झ विसयविसारा घणुय पायए खलु नत्थ ॥ १२४ ॥
लवणोअही जलेहिं अग्गी य जहिंधणेहि य घणेहिं । अप्पा सदा न तुस्सइ सुघेहिंवि चरित्तोएहिं ॥ १२५ ॥
जीए सेवारसिओ वसिओ नरुएरुयम्मि इन्नसुहं । कुखमुज्झित्ता विमलं तीए पुण ही अहं सुण्हो ॥ १२६ ॥
दीवे जहा पयगो मज्झे आवसस अह महामयरो । तह नियमिउंऽमि अहयं नरीइ फडम्मि जवकूवे ॥ १२७ ॥
इय सोहणम्मि ऊाणे वट्टंतो नावरो जइय निवो । आरुहिय खवगसेणिं केवलखाईइ सो वरिउं ॥ १२८ ॥
तेसिं नाणधराणं चउन्हमवि नियरूवत्तिदेवेहिं । विहिया केवलिमहिमा समप्पिउं साहुवेसो य ॥ १२९ ॥
अहह अहो अच्छरियं पस्सह ज रागरोसदोसिल्ला । चउरोऽवि चउरमइणो जाया वेरग्गरंगिल्ला ॥ १३० ॥
सवेऽवि पणमिया ते सुरेहिं सयरेहिं नायरजणेहिं । कंचणपउमारूढा सोहंता रायहंसुव ॥ १३१ ॥
अह य इलासुयनाणी माणी मणयंपि नेव मणमज्झे । अच्छरियजूयचरियं नियय कहिउं समाढत्तो ॥ १३२ ॥
पुणजवेऽहं समणो आसी यासीइ चंदणे तुम्हो । जम्मऽवि हु पवरआसजा जाया सुनिम्माया ॥ १३३ ॥
तं पिछतस्स सया रागो मह माणसे समुल्लसिउं । रमणाखोइय सम्मं सपत्ते जीवियंतेऽवि ॥ १३४ ॥
घेमाणियदेवत्तं पत्तो सा साहुणीवि खलु सत्तो । जाइमहम्मत्तमई संपत्ता सोयधम्मरया ॥ १३५ ॥

तमणालोइत्तु फुडं एरिसवंसुब्भवा नडी जाया । अहयं पुण सिटिसुर्ड एईए उवरि नेहिल्लो ॥ १३६ ॥
पुव्वभवब्भासार्ड दुगंछणिज्जोऽवि चेव निवसंतो । नडपेडयम्मि हिंडिर्ड अहह महाकम्मगरुअत्तं ॥ १३७ ॥
थेवोऽवि दोसलेसो धम्मे अईयारर्ड य जो लग्गो । अपडिक्कंतो सो होइ गरुअदुहलहरिजालऊं ॥ १३८ ॥
जं जेण कयं कम्मं तमवस्समिमस्स एइ नणु उदयं । भुत्तम्मि भोयणम्मी उग्गारो पायडो होइ ॥ १३९ ॥
तव्वयणामयपाणा घणा जणा तक्खणाउ पडिबुद्धा । किं जलहरवुट्ठीए तुट्ठिं न हु लहइ वणराई ॥ १४० ॥
निट्ठवियअट्ठकम्मा धम्मारामं सयावि सिंचंता । आउयमणुपूरित्ता चउरोऽवि हु नाणिणो अह ते ॥ १४१ ॥
संपत्ता मुक्खसुहं दुहं न जत्थत्थि लेसमित्तंपि । सिद्धा नाणसमिद्धा विहरंति सुहं सयाकालं ॥ १४२ ॥
जे पुण बहुस्सुयत्तं लद्धुं मायाइ गारवेणऽहवा । नालोयंतइयारे कह ते सिवसाहगा हुंति ॥ १४३ ॥
जे पुण निस्सल्लमणा गुरूण पुरर्ड कहित्तु नियदोसे । ते आराहगभावं लहिऊण सिवं गमिस्संति ॥ १४४ ॥
जो वंसग्गे चडिर्ड दुहावि नडियाइ रागनडिर्डऽवि । पडिर्ड न दुग्गईए स इलापुत्तो मुणी जयउ ॥ १४५ ॥
विसयविरत्तो होउं मिक्खापहमुज्झिउं पहे लग्गो । सो अज्जो निरवज्जो इलासुर्ड वंदणिज्जो उ ॥ १४६ ॥
पवित्तमेयं चरियं सुणित्ता, इलासुयस्सुत्तमसंवरस्स । गयाइयारं जिणरायधम्मं, कुणंतु पावंतु सिवस्स सम्मं ॥ १४७॥

॥ इति इलापुत्रचरित्रं संपूर्णम् ॥

अथ विशुद्धश्राद्धाचारप्रकटनपरं काव्यमाह—

पूया जिणाणं सुगुरूण सेवणं, धम्मक्खराणं सवणं वियारणं ।
तवोविहाणं तह दाणदावणं, सुसावयाणं बहुपुन्नजायणं ॥ १९ ॥

व्याख्या—पूजनं पूजाऽष्टभेदा सप्तदशभेदा वा एकविंशतिधा सिद्धान्तप्रतिपादिता द्रव्यभावभेदभिन्ना वा कार्या श्रीजिनानां रागद्वेषजेतॄणां । तथा सुष्ठु तत्त्वमार्गं गृणन्तीति सुगुरवस्तेषां सेवनं पर्युपासनं । यथा श्रीउत्तराध्ययनसूत्रे—"अब्भुट्ठाणं अंजलिकरणं तहेवासणदायणं । गुरुभत्ति भावसुस्सूसा विणओ एस वियाहिओ ॥ १ ॥" इत्यादिगुरुसेवाक्रमः स्वीकार्यः । तथा धर्ममयान्यक्षराणि धर्माक्षराणि तेषां श्रवणं निरन्तरं कार्यं, सुगुरुसेवायाः फलमेतदेव, एवं कुर्वतां श्रावकत्वं यथार्थं स्यादिति हेतोः । तथा श्रवणस्यैतत्फलं यत्तत्त्वानां विचारणं, विचारे क्रियमाणे बुद्धिगुणाः प्रादुर्भवन्ति । तद्यथा—"शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥ १ ॥" इति । तथा तपसो द्वादशभेदस्य विधानं । तथा दानदापनं दीयते यत्तद्दानं स्वयं दानं अन्यस्माद्वा दापनं । एतत्सप्तकं कृतं सत् सम्यक्प्राप्तिनिवृत्तिकारकं स्यात् सुश्रावकाणां तथा प्रचुरपुण्यप्राग्भारभाजनं भवेदिति संक्षेपार्थः । व्यासार्थस्तु दृष्टान्तेभ्यः कथयिष्यत इत्यर्थः ॥

अथ प्रथमतोऽर्हदर्चाविषये धनदकथा लिख्यते—

प्रयाति दूरे दुरितं समस्तं, भवेत्करस्थायि सुखं प्रशस्तम् । निकेतनं संपदलंकरोति, वपुः विभश्रीः स्ववशा तनोति ॥ १ ॥

क्रूरः कथञ्चिन्न कलिर्धुनोति, न धर्मवल्लीमयशः सुनोति । पूजाविधानाज्जगदीश्वरस्य, पदद्वयानम्रसुरासुरस्य ॥ २ ॥ युग्मम्.

पुरी मनोज्ञा प्रविभात्ययोध्या, भव्यावली यत्र सुखप्रबोध्या । इभ्याः स्फुरद्दानपयःप्रवाहाः, किं प्रावृषेण्या इव वारिवाहाः ॥३॥

श्रीरामनामा पुरि तत्र राजा, कलाकलापेन नवः स राजा । श्रेष्ठी धनाढ्यो धनदोऽस्ति तत्र, श्रीदोपमोऽनल्परमापवित्रः ॥४॥

चत्वार एतस्य सुताः प्रवीणा, जाताः कुलाचारविधौ धुरीणाः । अन्येद्युरन्तर्धनदेन शिष्टं, श्रेष्ठिप्रधानेन पुनर्विमृष्टम् ॥ ५ ॥

महाबलान्दोलितकेतुकल्पं, स्यादस्थिरं राज्यरमाद्यनल्पम् । अतीव लोलं भुवि जीवितव्यं, स्याद्यौवनं बुद्बुदवत्सुदिव्यम् ॥६॥

पाथोजिनीपत्रपृषत्समानं, मानुष्यकं कल्पतरूपमानम् । सर्वेऽपि भोगाः क्षणभङ्गुरास्ते, पुण्यार्जनं जीवितसारमास्ते ॥ ७ ॥

स्वयं विमृश्येत्यमुना विहारः, श्रीतीर्थनेतुः प्रहतान्धकारः । श्रिया जितोद्दाममरुद्विमानः, प्रकारितः प्रोच्चनगोपमानः ॥८॥

ततः परं भूरिधनैः प्रतिष्ठा, निर्मापिता पुण्यगणालघिष्ठा । श्रीतीर्थकृद्बिम्बकदम्बकस्य, स्पष्टोत्सवैर्ध्वस्ततमो निरस्य ॥ ९ ॥

श्रेष्ठ्यन्यदा पूर्वभवान्तरायप्रोद्दामकर्मोदयतो विमायः । बभूव निःशेषधनैर्वियुक्तः, पद्माकरो वा कमलैर्विमुक्तः ॥ १० ॥

स्वनिर्धनत्वादथ तां विमुच्य, श्रेष्ठी पुरीं धर्ममतिः स रुच्यः । कृत्वा स्थितिं तत्पुरपार्श्ववर्त्तिग्रामे स निर्वाहविधिं विभर्त्ति ॥११॥

पुनः पुनस्तस्य पुरस्य यातायातेन वृत्तिं कृतवान् प्रमाता । कियन्तमप्येष किल स्वकालं, दौःस्थ्यादतिक्रामितवान् विशालम् १२

अथैकदाऽऽयातमवेक्ष्य धुर्यं, श्रीमच्चतुर्मासकपर्व वर्यम् । सुतैः स्वकीयैः सममाप सारां, पुरीमयोध्यामवनावुदाराम् ॥ १३ ॥

स्वचैत्यसोपानलताधिरूढः, स यावदास्ते मतिमानमूढः । चतुःसरा मालिकयाऽस्य माला, पूजाकृतेऽदायि तदा रसाला ॥१४॥

पुष्पैः समभ्यर्च्य जिनाधिनाथं, विनिर्मितोद्दामतमःप्रमाथम् । चित्ते पुनः प्राप निजे प्रमोदं, केकीव दृष्ट्वा गगने पयोदम् ॥१५॥

रात्रौ समागत्य गुरोः समीपेऽग्रतः स्थितोऽध्यायमदीव नीपे। एकान्तमालोक्य निनिन्द हास्यः, स्वरोरजायं सुगुरोः पुरस्थः॥१६
आकर्णकारी गुरुभिः प्रदत्तः, कपर्दियक्षस्य तदातिचित्तः। परोपकारप्रविधानदक्षैर्मन्त्रोऽस्य धर्मोऽप्यनि यक्षकर्हे॥ १७ ॥
चतुर्दशीनिश्यथ संगतायां, कादम्बिनीगुप्तकुलासितायाम्। आराधयामास तमेव मन्त्रं, स याममुग्मापगमे स्वतन्त्रम्॥ १८॥
मन्त्रप्रभावेण कपर्दनामा, यक्षो बभूव प्रकटः सधामा। स श्रेष्ठिनं प्राह चतुस्सरस्य, माहात्म्य देवार्चनयोजितस्य ॥ १९ ॥
त्वयार्जितं पुण्यफलं यदार्य, तद्देहि मे श्रेष्ठिवरानिवार्यम्। तदोक्तमेतेन ददे शरण्यं, कस्यापि नैकस्य सुमस्य पुण्यम्॥ २० ॥
तदीयधर्मार्दतिरञ्जितेन, श्रीमज्जिनाज्ञाचरणाश्रितेन। तुष्टेन यक्षेण दयां विधाय, साधर्मिकत्वं हृदये निधाय॥ २१ ॥
आविष्कृताः स्वर्णभृता विशालाश्चत्वार उच्चाः कलशा रसालाः। चतुर्षु कोणेषु महालयस्यामुष्यार्कबिम्बोदयचप्रशस्याः॥२२॥
कृत्येस्यहत्यत्यमवाप यस्मा, प्रशाप्य चैतज्जनताय दक्षः। अथ प्रभाते स्वगृहं जगाम, श्रेष्ठी प्रमोदातिशयाभिरामः॥ २३ ॥
स्वधर्मनिन्दाकरणोद्यतेभ्यस्तदा निजेभ्यो धनदः सुतेभ्यः। समर्पयामास रयादगण्य, यदप्रदत्तं सकलं हिरण्यम्॥ २४ ॥
पितुः समीपाज्जनता नदेतु, विपत्पयःपूरनिषेधसेतुम्। आपृच्छ्य संशीतिविमुक्तचित्तास्तेऽपीह जाता परिखन्धचित्ताः॥२५॥
ततः परं याचकदत्तदाना, अर्हन्मताराधनसावधानाः। पूजाविधिं तीर्थकृतां सृजन्तः, संघस्य भक्तिं परिकल्पयन्तः॥२६॥
प्रभावकाः पुण्यपथस्य सन्तः, सुतास्तदीयाः कृपयोल्लसन्तः। तत्रैव पुर्यां शमिमण्डलान्तं, चक्रुः परेषामपि बोधिलाभम्॥२७॥

॥ इति पूजाविषये धनदकथा ॥

अथ सद्गुरोः सेवाफलमुदीर्यते। सद्गुरोः सेवा इहलोकपरलोकाद्यर्थसार्थसाधिनी स्यादिति अत्रार्थे श्रीनमिविनमिज्ञातमातन्यते

श्रीऋषभजिनदीक्षादाने नमिविनमी कच्छमहाकच्छराजतनुजौ न तीरे आसतां पश्चादागत्य राज्यश्रीभाराभिलाषुकौ स्वीकृतव्रतमपि श्रीयुगादीशमुपासामासतुः । तदनन्तरमनयोः किमभूदित्याह—

नमिविनमीण जयाणं नागिंदो विज्जादाण वेयड्ढे । उत्तर दाहिण सेढी सठी पन्नास नयराइं ॥ १ ॥

अस्या अर्थः कथानके दर्श्यते—

श्रीऋषभनतिहेतोः पन्नगपतिरन्यदा धरणनामा । आयादायासपरौ नमिविनमी कीदृशौ च तदा ॥ १ ॥ कायोत्सर्गस्थस्य प्रभोः शुभोदयकृतः समौनस्य । पदयोरग्रे पाथश्छटकं दत्त्वा कुसुमपुञ्जम् ॥ २ ॥ प्रक्षिप्य ततो नत्वाऽभूतामिति नित्यमेव तौ स्वामिन् । अस्मभ्यमपि हि भागं प्रयच्छ कुरु माऽन्तरं नियतम् ॥ ३ ॥ आकर्ण्य तदभूत प्रभुरधुना वर्त्ततेऽतिनिःसङ्गः । न किमपि देयं पार्श्वे कथं मुधा याचना क्रियते ॥ ४ ॥ शोच्यं न किञ्चिदपि भो याच्यं भरताद्यदीक्ष्यते वस्तु । प्रभुतनुभूः स तु राजा पुनरावां वाचिकौ पुत्रौ ॥ ५ ॥ नान्यं समाश्रयेवहि दानावसरे तु नागतावावाम् । कार्यवशाद्दूरगतौ जातौ दाताऽयमेवाथ ॥ ६ ॥ इत्युक्ते सति ताभ्यामभ्यासपरेण भर्तृसेवायाः । धरणेन्द्रेणावादि प्रसन्नचित्तोऽस्म्यहं युवयोः ॥ ७ ॥ स्वामिन्यतीव भक्त्या परिचर्या निष्फला प्रभोः किं स्यात् ? । सेवा सुरद्रुमस्य प्रदायिनी चिन्तितार्थानाम् ॥ ८ ॥ युवयोर्ददामि विद्या अनवद्याः पाठसिद्धयः स्फीताः । ग्राह्यास्ता हि भवद्भ्यामनुजीविभ्यां जिनेन्द्रस्य ॥ ९ ॥

१ भगवत्समीपे.

अवदानुकाऽष्टचत्वारिंशत्साहस्रिका महाविद्याः । आम्नाता विद्भिस्तासु चतस्रः स्फुरद्विद्याः ॥ १० ॥ प्रथमा
गौर्यथ गान्धारी प्रज्ञप्ती रोहिणी ख्याताः । गम्भसु यूयं विद्यासमृद्धिराजसर्क शीलम् ॥ ११ ॥ स्वजन प्रबोध्य तानि-
र्नजअर सर्वमपि हि कुर्यातात् । वैताढ्यशैलशीर्षे श्रेण्यो सद्दक्षिणोत्तरयोः ॥ १२ ॥ षष्टिपुराण्युत्तरदिशि पञ्चाशद्दक्षिणाख्-
यश्रेण्याम् । विनिवेश्य कुरुत राज्य समादिदेशेति जोगीन्द्रः ॥ १३ ॥ जिनचैत्यानां च जिनानां च तथा चरमदेहिनां
यतिनाम् । कायोत्सर्गकृतामथ पराजयिष्यन्ति येऽल्पधमाः ॥ १४ ॥ मत्तवत्तया नभोगाः परवनिताक्षुब्धमानसा ये च ।
मोक्ष्यन्ति तान् कुशिष्यानिव विद्याः सर्वथा सद्यः ॥ १५ ॥ प्रकटितनिश्चलशिष्या ( ष्टा ) मित्यहिनेतुः प्रशस्तिमाविश्य ।
तौ तत्प्रसत्तिमुदितावानम्य युगादिजिनराजम् ॥ १६ ॥ वन्दित्वा चादीशं विमानमाधाय पुष्पकाभिख्यम् । आरुह्य तद-
तिरम्यं कच्छमहाकच्छयोः प्रवरं पुनः ॥ १७ ॥ श्रीमद्युगादिसद्गुरुसेवोरुफलं निवेद्य जरतस्य । आदाय स्वजनजनं सर्वं
गत्वा च वैताढ्ये ॥ १८ ॥ श्रेण्युत्तरदक्षिणयोः संस्थाप्य पुराणि चातिरम्याणि । निष्कण्टकराज्यसुखं नमिविनमिन्यामन-
नुयन्त्यौ ॥ १९ ॥ बहुकालमाकलय्य श्रियममलामविकलं व्रतमुपेत्य । श्रीसिद्धिशैलशीर्षे केवलबोधं समुपलभ्य ॥ २० ॥
कोटिद्वयसाधुयुतावद्ययपदमा ( पतुस्तौ ) सलाद्भुः प्रान्ते । सद्गुरुसेवाफलमिदमिह मोऽप्यन्यं समग्रमपि ॥ २१ ॥ यदै-
हिकामुष्मिककार्यसिद्धिः, समृद्धिवृद्धिश्च विशुद्धबुद्धिः । स सद्गुरूपास्तिजरानुजावः, सर्वोऽप्यसौ चेतसि वेदितव्यः ॥ २२ ॥
एवमात्मनि विचिन्त्य सुधीभिः, सद्गुरोः पदपयोरुहसेवा । सर्वकालममलेन विधेया, मानसेन सह शुद्धमेधसा (मखेन) ॥ २३ ॥

॥ इति सद्गुरूपास्तिविषये नमिविनमिदृष्टान्तः ॥

अथ द्वितीयपदे "धम्मक्खराणं सवणं वियारणं" इति प्रकारद्वयमेकस्मिन्नेव दृष्टान्ते समवतार्यते । पूर्वं तावद्धर्माक्षराणां श्रवणमाकर्णनमेवातीव दुर्लभं । तदनु तदर्थविचारणमतीव दुरापं । सम्यगर्थपर्यालोचनं तु सुकृतिनामेव घटामाटीकते । अत्रार्थे चिलातीसुतोदाहृतिरुदाह्रियते—

नयरम्मि खिइपइट्ठियनामे फलदलमणोहरारामे । पंफिच्चविहियदप्पो विप्पोति (त्थि) ह जन्नदेवुत्ति ॥ १ ॥ सासण अवन्नवाई माईवाईण पढमरेहिल्लो । सो खुड्डुएण गुरुणा निवारिएणावि वायम्मि ॥ २ ॥ विजिउं विहियपइन्नो गलिय-मउ दिक्खिउ गुरुहिं इमो । साहूवरि रोसिल्लो सुचोइउ सासणसुरीए ॥ ३ ॥ तत्तो तत्तोवगउ निम्मायत्तेण कुणइ सो धम्मं । धिज्जाइमाइज्जाणं परं मणाउ न मिल्हेइ ॥ ४ ॥ तन्नाई उवसंता तज्जा तम्मि नेहला वाढं । परिवायगोवएसा पारणए कम्मणं देइ ॥ ५ ॥ नियचित्तविवज्जासं मुणी मुणित्ता चइत्तु जत्ताइं । संपत्तो सुरलोयं सोयं सा काउमाढत्ता ॥ ६ ॥ पव्वइय साहुणीणं पासे आसेविऊण मुणिधम्मं । पच्छित्तमणालोइय तं पच्छन्नं पुराइन्नं ॥ ७ ॥ कालं काऊण मया अमया-सिणाणमुच्चमणुपत्ता । अह जन्नदेवदेवो चुउ तउ सुरकमणुहविउं ॥ ८ ॥ अइउज्जलरायगिहे रायगिहे नामयम्मि वरन-यरे । धणसत्थवाहदासी चिलाइया तस्सुउ जाउ ॥ ९ ॥ नामं चिलाइपुत्तोत्ति निम्मियं सिट्ठिणा पहिट्ठेण । पुत्रकयमुणि-दुगंछा कयावि किं निष्फला होइ ॥ १० ॥ तज्जायाए जीवो धणसिट्ठिप्पणइणीइ जद्दाए । पंचन्ह सुयाणुवरिं संपन्ना सुंसुमा धूया ॥ ११ ॥ तीए स वालगाहित्तणम्मि ठविउ धणेण गिहवइणा । पायं धणवंताणं सिसूणि पालंति कम्मकरा ॥ १२ ॥ पुरलोउवेयकरो मुहरो कलिकलहकारगत्ताए । निद्धाडिउ गिहाउ धणेण नणु जग्गचित्तेण ॥ १३ ॥ अइपब्ब-

विसयसिण्पसुण्णसंसोहधिकातरुमर्सि । सो सीहगुहं पर्सि गंतुं गठवेस सफुर्सि ॥ १४ ॥ पठमप्पहारकारी धारी निस्सयाइ
निस्सकं । तक्करसेणाहिवई सो आठं जिसमज्झम्मि ॥ १५ ॥ सगिहम्मि सुसुमा सा इत्तो दिवोरुदेहकंतिल्ला । जाया
जुव्वणकाले पाठेयगिरिंवधूयव ॥ १६ ॥ अन्नायपरो अह अन्नयेस आहिसु चोरसेणाए । जामो रायगिहम्मी धणमणि-
संपूरियगिहम्मि ॥ १७ ॥ तत्थ धणनाम सिट्ठी हिट्ठीकयतिसिरेठं सरिद्धीए । तस्स य पुत्ती किल सुंसमित्ति सा मज्झ
तुम्ह धण ॥ १८ ॥ संपत्ता तत्थ पुरे अहसया कुसयावत्ता चोरा । अग्गे चिलाइपुत्तं काउ दाउं सनकुमारं ॥ १९ ॥
धणजवणमणुपविट्ठा पाविट्ठा लुंटिउं समारद्धा । अवसोइणिं पदाउ साहित्ता अप्पणो नाम ॥ २० ॥ चमिया सेणस्स
व सा चमिया तक्करमिमा रमारुधा । गेहोवरि वहृती चित्ती मठयसिक्काए ॥ २१ ॥ संगहियगेहसारा तारा इव दिण-
यरोदए जाए । नट्ठा सवे चोरा रोरा इव गहियजत्तत्ता ॥ २२ ॥ तप्पिच्छं स कुत्तो पधाविउं सुंसुमासुठं सहसा । संजा-
सइ सिट्ठी अह सवाइ घरमणुस्साइं ॥ २३ ॥ गछठ सवं दवं संपकाउ माणुसाण कुसलति । जा पासइ नियपूयं ता
पिछइ त न सयहिज्जो ॥ २४ ॥ अह विन्नघइ नरिंदं गिण्हिय तस्सुहरुसिन्नपरिवार । सुयपंचगेण सद्धिं सिट्ठी चिलायस्स
मणुलग्गो ॥ २५ ॥ अइउग्गाघि हु जग्गा चोरा सवपि वाहियं दवं । नयर पइ ते वलिया ससुठं सिट्ठी चिलायस्स
॥ २६ ॥ जायासन्नमहीए पत्तो तत्तो इमो विचिंतेइ । मामप्पासाउ इमे गिण्हंति धडेण नणु अवसं ॥ २७ ॥ जह मह
तह पयस्सवि मा हवउ इमा मणम्मि इय मुणिउ । निहणित्तु तय सीसं गिण्हिय सो अग्गउं चलिउं ॥ २८ ॥ जं पुव-

१ कुबेर २ यथा चटिका श्येनकरे पतति तथा सुसुमा चिलातीपुत्रकरे चटिता

भवे कम्मणपओगओ मारिओ मुणी हुंतो । कम्ममुइन्नं तं सुसमाइ भुंजाइ पुराविहियं ॥ २९ ॥ तो विमणदुम्मणो सो धणो
नियत्तो पुराभिमुहमग्गे । गिण्हित्तु सुयादेहं पत्तो अडवीमज्झभूमीए ॥ ३० ॥ जा जिणमूलसहिया फुरंतचित्ता लसंतम
यसिरया । सविसाहा य सन्नहा नहसिरिसारिच्छया जा य ॥ ३१ ॥ तीए मज्झावडिओ नडिओ तण्हाछुहाइ जा सिट्ठी ।
छुहियाउहसोगत्तो ता मज्झणहरकणो जाओ ॥ ३२ ॥ चिंतिउमेसो लग्गो किमेयमसमंजसं समुब्भूयं । छुहिया हया कहं
हा पिच्छंताणं खु अम्हाणं ॥ ३३ ॥ किं इंदजालमेयं किं वा दिव्वस्स विलसियमतुल्लं । अहवा पडिकूलत्ते कम्माणं किं न संभ-
वइ ? ॥ ३४ ॥ अइदूरे रायगिहं पडिया वियमाडवीइ मज्झम्मि । पासे न संबलं तह नित्थरियव्वं कहं वसणं ॥ ३५ ॥
इय परिभाविय भणिया तणया विणयाणमंतसिरकमला । मं भक्खेऊण अहो संपइ नियजीवियं धरह ॥ ३६ ॥ नगरं
गंतूण तओ पच्छा दाणाइपुन्नकरणेहिं । कुणह अप्पविसुद्धिं मा अम्ह कुलक्खओ होउ ॥ ३७ ॥ पंचत्तमुवगएसुं पंचसुवि
पसत्थवंसतिलएसु । तो पढमसुएणुत्तं पुज्जो अज्जो तुमं ताय ॥ ३८ ॥ किमणप्पवियप्पेहिं एयं मयमंगमेव भक्खेह । तो
तेहिं तहा विहियं अरत्तदुट्ठेहिं सव्वेहिं ॥ ३९ ॥ भोत्तव्वमिह तहेव हु अतुच्छमुच्छाइरहियमुणिणावि । जह नायाधम्मक-
हाए भासियं तह मुणेयव्वं ॥ ४० ॥ संपत्तो धणसिट्ठी हिट्ठीकयमाणसो अइदुहाओ । रायगिहमिमीइ तओ मयकिच्चाइं
अकासी य ॥ ४१ ॥ तत्तो नियजिट्ठसुए आरोविय गेहभारमिव खंभे । सिरिवीरजिणेसरपयकमले भसलत्तमुवगम्म
॥ ४२ ॥ पव्वज्जं पडिवज्जिय वज्जिय सावज्जजोगसंभारं । इक्कारसंगधारी वहूणि वासाणि उग्गतवं ॥ ४३ ॥ काउं सोह-
म्मसुरो उक्कोसाऊ सुरो समुप्पन्नो । अह सो चिलाइपुत्तो रत्तो तवयणपिच्छाए ॥ ४४ ॥ अवकोसीकयखग्गो वच्चंतो

दक्खिणाभिमुहमेसो । चिट्ठइ पग समण काउस्सग्गट्ठियं सत्थ ॥ ४५ ॥ अेवरकरेहिं सम्मं धम्म मह काहसु जो महास-
मणा । नो चे तुह सीसमहं छिंदिसु फलव पाडिस्सं ॥ ४६ ॥ उवसंगओ पियाणिय तप्परियोद मुणी समुल्लवइ । उवस-
मविवेयसंवरपयतियमिममयचिंतुसमं ॥ ४७ ॥ न हु संकिलेसमहुले गाथे गाउं महोचियमवस्सं । इय विसाय महप्पा
विहगुण स योमगुहीओ ॥ ४८ ॥ तत्तो चिलाइपुत्तो तत्तोऽवि हु पावपुंजगिम्हेण । चित्तेव पयतियुआसीवसहखिलेण
संजाओ ॥ ४९ ॥ चिंतइ चित्ते सत्ते कारुण्णमगणमुणहंतो सो । पयतियमेयमणग्घं मणिय नणु मुणिवईदिस ॥ ५० ॥
कोहवसट्टो अहय फवो मह उवसमस्स लेसोऽवि । तत्तो जावज्जीवं मए कसाया परिच्चत्ता ॥ ५१ ॥ धणसयणाइविवेगो
कायवो तह मए पमत्तेण । इय नाउ सीस लह सग्गं हत्थाउ मिल्हेइ ॥ ५२ ॥ मणइंदियाण निच्चं कायवो संवरो मए-
ऽवस्सं । एवं धीमंसंतो निच्चलकाउं ठिओ एसो ॥ ५३ ॥ धन्नो सो नणु समणो तिन्नि पया मज्झ जेण उवइट्ठा । अह-
मवि सफलियपहे गाउं साहेमि नियकज्जं ॥ ५४ ॥ इय चिंत ( ति ) स्स तस्स य रुहिरसरंटियतणुस्स गंधेण । कीडीउ
निग्गयाउं लाइउमारद्धमेयाहिं ॥ ५५ ॥ पायतलं छिंदित्ता विणिग्गया जाउ सीसदेसंमि । तह अच्चारियं देहं अह आयं
चालिणीतुल्लं ॥ ५६ ॥ देहम्मि दीहराइं जायाइं सयसहस्सछिड्डाइं । दुक्करयासीय इमाणि किमिह निच्चालमम्माणि ॥५७॥
अइनिविडं तणुपीडं अहियासंतो चिलाइपुत्तो सो । सुहझाणाउं न चलइ मेरुव अईव निक्कंपो ॥ ५८ ॥ उक्किट्ठुक्कला-
लिज्झसरीरेण तेण सिद्धेण । अड्ढाइज्जदिवसंते आउयपरियत्तमणुपत्तं ॥ ५९ ॥ संपत्तो सुरलोए सहसारे सारसुक्खसंचारे ।
बहुदुक्खसमुत्तारे चिलाइपुत्तो गुणपवित्तो ॥ ६० ॥ तारिसपाविट्ठनिही अहीय अइविसदोसरोसिट्ठो । ज सोऽवि गओ

सग्गं तं धम्मक्खरवियारफलं ॥ ६१ ॥ एयं वियाणित्तु वियारणाए, धम्मक्खराणं फलमुत्तमुत्तमं । सम्मं वियारेह सुतत्तमग्गं, सग्गं च सिद्धी जह होइ निच्छयं ॥ ६२ ॥

॥ इति धर्माक्षरश्रवणविचारणोपरि श्रीचिलातीसुतकथानकम् ॥

अथ तपोविधानमिति दृष्टान्तेन दृढीक्रियते—

कयंगलामहापुर्यामर्यमेवोज्ज्वलत्विषा । श्रीवीरः समवासार्षीद्वीर्पे मणिरिवाङ्गिनाम् ॥ १ ॥ चतुर्वेदस्मृतिप्राज्ञः श्रावस्तीपुरि विश्रुतः । गर्दभालिपरिव्राजः शिष्योऽभूत्स्कन्दनामकः ॥ २ ॥ स श्रीवीरस्य शिष्येण प्रश्नितः पिङ्गलेन भोः । स्कन्दकाख्याहि किं लोकः सान्तोऽनादिरुतास्त्यसौ ? ॥ ३ ॥ जीवः सिद्धिस्तथा सिद्धाः किं सान्ताः ? किमनादयः ? । केन वा मरणेनात्र जीवाः संसृतिचारिणः ? ॥ ४ ॥ केन चान्तकराः सत्त्वाः संसारस्य स्मृताः ? वद । प्रश्नोत्तराण्यजानानस्तूष्णीकत्वमधात्ततः ॥ ५ ॥ द्वित्रिः पृष्टेऽपि मौन्यस्थात्ततः श्रावस्तिकापुरि । श्रीवीरमागतं ज्ञात्वा जनश्रेणिगमागमात् ॥ ६ ॥ ततः स्वयं चचालैष स्वसन्देहापनुत्तये । श्रीवीरसन्निधौ स्कन्दकोऽपि रत्यन्तदक्षिणः ॥ ७ ॥ पिङ्गलप्रश्नवाक्यारमवेत्तारमवेत्य तम् । श्रीवीरोक्त्या गौतमेशः संमुखीनः समागमत् ॥ ८ ॥ स्कन्दक स्वागतं ते भोः प्रश्नवाक्यानभिज्ञताम् । प्रोक्तवाँस्त्वं कथं वेत्सि ? श्रीवीराद्विस्मितस्ततः ॥ ९ ॥ बाढं प्रमुदितः स्वान्ते श्रीवीरं स्कन्द आनमत् । ततः स्फुटमथाचष्ट सन्देहार्थान् जगत्प्रभुः ॥ १० ॥ स्कन्दक द्रव्यतो लोक एकद्रव्यस्ततोऽन्तभाक् । क्षेत्रतः सर्वदिक्चक्रे ह्यसङ्ख्याः कोटिकोटयः ॥ ११ ॥ योजनानां हि विज्ञेयाः सान्तताऽतः प्ररूपिता । भावतोऽनन्त एष स्यादनन्ताः पर्यया

यतः ॥ १२ ॥ एवं जीवश्च सिद्धिश्च सिद्धा ज्ञेयाः प्रजेश्वरः । छिन्नेदं मरणं स्कन्द भावपारिकत्वयोगतः ॥ १३ ॥ सृजन्
बालमृतिं जीवोऽनन्तयोनिष्वनारतम् । आत्मानं दुःखितं कुर्यादनार्याचारमश्नुते ॥ १४ ॥ बालमृत्या पुनर्जीवः संसारं
बहुन्येवसम् । एवं वीरोक्तिमाकर्ण्य स्कन्दकः प्रतिबुद्धवान् ॥ १५ ॥ जवारण्यमिदं स्वामिन् जराजन्ममहाग्निना । मदीयं
प्रगयभासे किं करोमि ? समादिश ॥ १६ ॥ यथा गृहे गृहे दीप्तेऽग्निना वसुसमुच्चयम् । बहिर्निष्काशयेत्सार तथास्मा-
नमहं प्रभो ॥ १७ ॥ बहिर्निःसारयिष्यामि युष्मत्पदनिषेवणात् । ततोऽसौ प्रव्रमादत्य पालयामास निश्चलः ॥ १८ ॥
यत्स यत्नेन गन्तव्यमासितव्यं च यत्नतः । जोक्तव्यं च ( प्र ) यत्नेन जापितव्यं प्रयत्नतः ॥ १९ ॥ न हि प्रमादिना
जाव्यं सयमे संयतात्मना । एवंविधाभिः शिक्षाभिः शिक्षितः स्वामिना स्वयम् ॥ २० ॥ एकादशाङ्ग्या अध्येता कृतो-
ग्रतपा अजत् । श्रीवीरोपासिरव्कालमाऽनगाराध्वनि धीरधीः ॥ २१ ॥ प्रतिमा द्वादशासौ च सिषेवे गुर्वनुज्ञया । ततश्च
गुणरत्नाख्यपर्यन्तमकरोत्तपः ॥ २२ ॥ चतुर्थषष्ठदशमाष्टमद्वादशसंज्ञकैः । मासार्द्धमासक्षपणैस्तपोभिर्विविधात्मकैः ॥ २३ ॥
मानसे जावयन्नास्ते नित्यं द्वादश जावनाः । कृशाङ्गः सुतरां जज्ञे निर्मांसः शोषितोज्झितः ॥ २४ ॥ यात्यायाति च
सत्त्वेन केवलेनाङ्गवर्त्तिना । समुच्चिरन्नपि गिरं म्लायत्यग्लानकोऽपि सन् ॥ २५ ॥ श्रीवीरादेशमासाद्यानशनं स प्रपेदि-
वान् । शोजनाध्यवसायः सन् पादपोपगमं व्यधात् ॥ २६ ॥ इत्थं स स्कन्दकः साधुर्मतं द्वादशवत्सरीम् । प्रपाल्य काल-
धर्मेणाच्युतं स्वर्गमवासदत् ॥ २७ ॥ ततश्च्युत्वा विदेहाख्ये वर्षे जन्माप्य सत्कुले । सिद्धिं प्रयास्यति क्षिप्रं प्रक्षीणाशेष-
कर्मकः ॥ २८ ॥ इत्थं श्रीस्कन्दकोदन्तमतिथीकृत्य कर्णयोः । तपस्यायामविश्रान्तं धन्यैः कार्यः परिश्रमः ॥ २९ ॥

॥ इति तपोविषये स्कन्दकदृष्टान्तः ॥

अथ गृहस्थानां दानधर्मप्राधान्यख्यापनार्थं दृष्टान्तमाह—

शिववद्विलसद्भूपन्नं वृषभपुरं नाम पत्तनमिहास्ति । गोरसलालसहृदया यत्र प्राज्ञाश्च गोपालाः ॥ १ ॥ स्तूपकरण्डक-
नामोद्यानं गानं सृजन्ति यत्र जनाः । यत्रानेके सरलाः सरलाः सज्जनसमास्तरवः ॥ २ ॥ तत्रास्ति पूर्णयक्षायतनं नतन-
न्दिवृद्धिसंजननम् । यद्यात्रागतलोकाः शोकार्त्तिंनरात्र पश्यन्ति ॥ ३ ॥ वनमिव मालाकारस्तत्प्रतिपालयति पत्तनं नृप-
तिः । राज्यसमृद्धिधनावहधनावहाख्यः प्रथितनामा ॥ ४ ॥ अस्खलितशीलनीतिस्तत्पत्नी मालतीति संजज्ञे । शुचिशी-
लपरिमलगुणैर्याऽभिनवा मालतीवाभात् ॥ ५ ॥ साऽऽधिव्याधिविमुक्ता मुक्तालतिकेव निर्मलगुणाढ्या । सुखनिद्रासंसुप्ता
पुनरीषज्जाग्रती किञ्चित् ॥ ६ ॥ अन्यत्र दिने प्रातः प्रायः क्षणदाक्षणे नरेन्द्रजनी[1] । मुखकमलमभिविशन्तं शान्तं हर्य[2]-
क्षमद्राक्षीत् ॥ ७ ॥ युग्मम् ॥ नृपतिमुपेत्य साख्यत्साक्षाद्द्राक्षाकिरा गिरा राज्ञी । तं स्वप्नमात्मदृष्टं राज्ञोद्दिष्टं मनोऽभी-
ष्टम् ॥ ८ ॥ राज्यधुरीणोऽरीणो[3] महाप्रवीणो भवद्गृहे सूनुः । भावीति तन्निशम्य जगाम निजधाम वामाक्षी ॥ ९ ॥ रज-
नीशेषं गमयामास महामोदमेदुरमनस्का । देवगुरुस्फुरद्गुरुतरगीतैर्गीतैर्निजसखीभिः ॥ १० ॥ प्रातरलङ्कृतदेहस्तूर्णमल-
ङ्कृत्य विष्टरं नृपः । स्वप्नविचारणचतुरान्नरान् समाहूय तानूचे ॥ ११ ॥ कथयत भोः प्राज्ञनराः स्वप्नस्यैतस्य किं फलं
भावि । तेऽप्यालोच्य मिथस्तं तदाहुरवधारय स्वामिन् ॥ १२ ॥ ख्याता अस्मच्छास्त्रे चत्वारिंशद्द्वयीयुताः (शुभ) स्वप्नाः ।
त्रिंशत्तेषु महान्तः प्रशस्ताः प्राज्ञलोकेन ॥ १३ ॥ जिनचक्रधरजनन्यः पश्यन्ति चतुर्दश द्विपप्रभृतीन् । तेषु च सप्तचतु-

१ जनी—पत्नी. २ सिंहम्. ३ अवद्धः.

प्रकसत्कलकाँक्षानिह स्वमान् ॥ १४ ॥ वीरान्तेऽप्यतपुण्या स्वमृद्धय ( हरिवंशचन्द्र ) मवसखीकराआम्बाः । देव्या नि-
रैक्षि सिंहः स्वप्ने यशोजनाकारः ॥ १५ ॥ तस्य प्रजायतः स्वमु जविता सविता कुवाम्बुजोल्लासे । राज्यश्रीजरजोत्का
मोत्का या सप्तनः समये ॥ १६ ॥ विससर्ज जृभिजर्चा सत्कृत्य विचित्रवस्त्रताम्बूलैः । तेऽप्यापुर्निजसद्म प्रमुदितहृदयाः
प्रदानेन ॥ १७ ॥ देव्यपि भजार गर्भं रोहणधरणीव रत्नमन्तःस्थम् । समये प्रासूत सुतं पूर्वाशा रविमिवोद्दीप्तम् ॥ १८ ॥
वर्धापनकमकारि क्षितिपेन निजाङ्गजन्मजन्मदिने । सर्वत्र पुरे सद्मनि तोरणचन्दनघटन्यासैः ॥ १९ ॥ जनकरो नन्दि-
करो प्रसाकमथ स्वयं सुरद्रुमवत् । तस्मादस्यास्त्वभिधाऽन्वर्थतया जननन्दिरिति ॥ २० ॥ ववृधे हरिचन्दनवन्मलयो-
र्व्यामिव सुवपुरावासे । प्रव्यामुवन् समग्रं स्ववपुःसौरजजनैर्विम्बम् ॥ २१ ॥ सर्वकलाकौशल्य तस्यातुल्य मवूय देहस्थम् ।
न हि चित्राणि शिखरिषु कृतानि सहजानि किं नु स्युः ॥ २२ ॥ तारुण्यशिखरिशिखरारूढोऽपि प्रौढिमानमापन्नः ।
न हि सन्मार्गस्खलनं मनागपि प्रापमेतस्य ॥ २३ ॥ प्रासादपञ्चशतिकां स कारयित्वा सुतस्य वासकृते । कन्यानां पञ्च-
शतं विवाहयामास गुरुभूत्या ॥ २४ ॥ स्त्रीभिः सह रक्तमना अन्वजयत्कामभोगसौख्यानि । दोगुन्दुकदेव इवाप्सरो-
भिरुद्दामकामाभिः ॥ २५ ॥ स्तूपकरण्डोद्यानेऽन्यदा सदा सेवितः सुरैरसुरैः । समवससार स्वामी चामीकररुग्महावीरः
॥ २६ ॥ वीरागमनज्ञापनतः क्षितिपतिमेत्य सपदि वनपालः । राजसभासीनमथो सत्वरमानन्दयामास ॥ २७ ॥ सार्ध-
द्वादशलक्षदानस्मै विस्मेरवदननयनाब्जः । प्रददौ जगदानन्दनहेतोः स्वयमेव निष्क्रान्तः ॥ २८ ॥ कोणिकवद्विस्तारात्स्वा
नत्वा जगत्पतिं वीरम् । निषसाद सादमुक्तः सजननन्दिर्महीमघवा ॥ २९ ॥ योजनविस्तारिण्या वाण्या प्राण्यात्मबोधका-

रिण्या । प्रभुरुपदिदेश धर्मं सम्यग्धर्माविबोधकृते ॥ ३० ॥ भव्या नृजन्म दुर्लभमुपलभ्य बुधा मुधा प्रमादेन । मा हारयध्वमार्जवयुक्ता धर्मे कुरुत यत्नम् ॥ ३१ ॥ संसारारण्यगतौ रागद्वेषौ द्विषौ विजेतव्यौ । यौ धर्मधनं हरतस्तस्करवद्विश्वविश्वस्य ॥ ३२ ॥ सम्यगुपास्यः स्वामी सर्वज्ञः सद्गुरुः समासेव्यः । केवलभृत्प्रज्ञप्तः कार्यो धर्मः सदाकालम् ॥ ३३ ॥ पीयूषवदतिमधुरां श्रुत्यञ्जलिना प्रपीय वीरगिरम् । प्रतिपेदे द्वादशधा सह सम्यक्त्वेन गृहिधर्मम् ॥ ३४ ॥ समया जनकेन निजं जगाम धाम प्रसन्नधीस्तनयः । गृहिधर्मादानवशान्मन्वानः स्वं कृतार्थतया ॥ ३५ ॥ स्वामिनमानम्याथ प्रोचे श्रीगौतमस्तमश्छेदी । भगवन्नृभु[1]विभुवदसौ सौभाग्यरमाभिरामाङ्गः ॥ ३६ ॥ सुन्दररूपश्रीमान् विधुवत्सौम्याननाभानानन्दी । साधूनामप्यधिकः प्रबोधकृत्केन धर्मेण ॥ ३७ ॥ श्रीभद्रनन्दिरिति तत्पृच्छावसरे स्वरेण मधुरेण । भगवानूचे तं प्रति पुर्यामिह पुण्डरीकिण्याम् ॥ ३८ ॥ प्राग्जन्मनि विजयाख्यस्तनुजन्माऽजनि नृपस्य सुकुमारः । सोऽन्यत्र दिने पश्यन्नगरमपश्यत्समायान्तम् ॥ ३९ ॥ नैद्यकृते छद्मस्थं श्रीयुगबाहुप्रभुं शुभं मूर्त्या । मध्यंदिने दिनेश्वरवदतिसतेजस्कमति तपसा ॥ ४० ॥ सहसा गृहोपरिस्थस्ततः समुत्तीर्य वर्यधैर्यश्रीः । सप्ताष्टपदान्यभिमुखमेत्य ततस्त्रिः प्रदक्षिणया ॥ ४१ ॥ वन्दित्वा विज्ञपयामास विधाय प्रसादमीश मयि । आगच्छाहारकृते प्रभुरप्यागात् क्षणादेव ॥ ४२ ॥ विस्तारितवान् भगवान् करकमलं विमलकोमलं विपुलम् ॥ नवरसवतीं रसवतीमदान्मुदाऽभ्युदितरोमाञ्चः ॥ ४३ ॥ प्रतिलाभयि (लम्भय) ता भक्त्या त्रिकशुद्ध्याऽनेन तीर्थकरसाधुम् । फलमतुलमेतदर्जितमूर्जितमत्यद्भुतं दधता ॥ ४४ ॥ सुकृतानुबन्धि सुकृतं

१ ऋभूनां देवानां विभुरिन्द्रस्तद्वत्.

राज्यश्रीभुजगभोगसंयोगाः । मोषैः सुखजन्ममयो नृजवः ससारतुच्छत्वम् ॥ ४५ ॥ विम्यानि तत्र पञ्च प्रकटीभूतानि सारभूतानि । चेलोत्क्षेपः समजनि निनेदुर्दिवि देवदुन्दुभयः ॥ ४६ ॥ दानमहो दानमहो इत्युद्घोषः सुरैर्व्यधायि दिवि । अमितन्महाजनौघः प्रशशंस कुमारवरदानम् ॥ ४७ ॥ विजयो विजयश्रीभाक् मन्नूतकार्दं विधाय जिनधर्मम् । दानप्रभावतः सलु समजनिह जडनन्दिरिति ॥ ४८ ॥ पुनरिन्द्रभूतिरवदत्स्वामिन्नेष मतं गृहीष्यति किम् ? । समये ग्रास्यति सम्यग्धर्ममशेषी ( मसौ ही ) कुमारोऽथ ॥ ४९ ॥ अष्टम्यादिषु पर्वसु पौषधशालामुपेत्य सत्यमनाः । संशोध्योच्चारभुवं कुशसंसारं समारुह्य ॥ ५० ॥ अष्टमभक्ततपोभाक् पौषधमौषधसमानमघरोगे । अकरोदन्यत्र दिने चिनेशपदपद्मपट्चरणः ॥ ५१ ॥ तपसः परिसमाप्तिसमये रजनीशेषे व्यचिन्तयदिदं सः । धन्यानि तानि नगरग्रामाकरगिरिवनानीह ॥ ५२ ॥ यत्र श्रीवीरविभुर्विहरति हरति प्रभूतपापतमः । दर्पयति भव्यपद्मान् रविरिव सज्ज्ञानकिरणधरः ॥ ५३ ॥ धन्यास्ते राजसुताः सामन्ताः श्रेष्ठिनन्दनाश्च जनाः । प्रभुपदकमलोपान्ते प्रतिपद्यन्ते व्रते चरणम् ॥ ५४ ॥ यद्यत्र कदाप्यथ प्रसद्य सद्यः समेति जगदीशः । तदहं तत्पदमूले दीक्षां कदीकरोमि मुदा ॥ ५५ ॥ ज्ञात्वेति तन्मनोगतमर्थमनर्घमथोगहृवीरः । समवसृतः प्रसृतयशाः सुरासुरश्रेणिसंसेव्यः ॥ ५६ ॥ तत्पक्षपातनमस्याद्देतोश्चेतोऽभिमानमुत्सृज्य । श्रीजडनन्दिसहितः क्षितिपस्तत्राजगाम जवात् ॥ ५७ ॥ सम्यक् प्रभुमानम्य क्षितिभुक् स्वोचितमहीमलंचक्रे । तावज्जलधरमधुरध्वनिना धर्मं दिदेश विभुः ॥ ५८ ॥ जभ्या भववारिनिधौ चिन्तामणिवरसुदुर्लभो नृभवः । तत्राप्यार्यो देशस्तद्गोत्समकुलसमुन्नतिः ॥ ५९ ॥ तत्रापि निरामयता दुरवापा पापतो निवृत्तिमतिः । तत्सर्वमाप्य कार्या प्रमादविरतिर्धृति-

धार्या ॥ ६० ॥ इत्यादि निशम्य भवोद्वेगसमुत्पादिनीमनीतिभिदम् । भगवद्वाणीं क्षोणीपालः संप्राप निजसद्म ॥ ६१ ॥
स्वामिनमाह कुमारः प्रव्रज्यामार्य संगृहीष्येऽहम् । पृष्ट्वा पितरौ किं तु प्रतिबन्धो वत्स नो कार्यः ॥ ६२ ॥ इति भगवति
वदति सति प्राप स्वगृहं प्रणम्य पितृचरणौ । श्रीभद्रनन्दिरेवं विज्ञप्तिं तंतनीति स्म ॥ ६३ ॥ श्रीवीरमुखाम्भोजान्मया-
लिनेवातिलालसत्वेन । धर्ममधु मधुरमा ( ता ) स्वितमापीतमतीव सौख्यकरम् ॥ ६४ ॥ तन्मम रुचितं निश्चितमुचितं
कृत्यं हृदन्तरे विदितम् । श्रुत्वा जगदतुरेवं पितरौ त्वं वत्स कृतपुण्यः ॥ ६५ ॥ द्विस्त्रिरिति निगदिते सति नृपसूः प्रोवाच
मातृपित्रग्रे । भवदनुमत्या व्रतमहमद्यैव स्वीकरिष्यामि ॥ ६६ ॥ कर्णकटु कंकटुकवद्वाक्यं श्रुत्वा मुमूर्छ तज्जननी । प्रगु-
णीकृता च तत्क्षणमेवैषा व्यलपदित्युच्चैः ॥ ६७ ॥ हा वत्स स्वच्छमते जनितोऽसि बहूपयाचितशतैस्त्वम् । माम-
शरणामपास्य श्रामण्यं श्रयसि कथमधुना ?॥ ६८ ॥ व्रजति त्वयि मत्प्राणा यातारस्तूर्णमेव शोकार्त्ताः । जीवन्ति जलचराः
किमु संशुष्के निम्नगासलिले ॥ ६९ ॥ यावज्जीवामो वयमिह तावत्तिष्ठ शिष्ट निजकगृहे । तदनु प्रवृद्धसंततिरन्ते यति-
धर्मभाग्भूयाः ॥ ७० ॥ इति भणितिं निजमातुः श्रुतिसात्कृत्वा नरेन्द्रसूः प्राह । विद्युल्लताकरिश्रुतिचटुलतरे
जीवितव्येऽस्मिन् ॥ ७१ ॥ स्थैर्याशाप्रतिबन्धः कस्य स्याद्यस्य चेतना महती । मरणमवश्यं शरणं सर्वेषामसुमतां नियतम्
॥ ७२ ॥ पितरौ—नन्दन नन्दनवनवत्सच्छायमतीव तावकं देहम् । तत्सुखभोगविलासाननुभूय ततो व्रतं चर भोः ॥७३॥
कुमारः—विविधाधिव्याधिगृहं वपुरपवित्रं प्रपातुकमवश्यम् । तज्जीर्णतृणकुटीवत्तदिदानीमस्तु मे दीक्षा ॥ ७४ ॥ पितरौ—
एता वनिताः सुकुलोत्पन्नास्तारुण्यरूपसंपन्नाः । पञ्चशतप्रमिताः कथमिह भाविन्यश्च्युतालम्बाः ? ॥ ७५ ॥ कुमारः—विष-

मिश्रितपायसवद्विषमान् विषयान्निषेवते कोऽत्र । अशुचीनशुचिसमुत्थान् स्वस्मिन् पाचिम्यमभिलाषी ( कारुहन् )॥७६॥
पितरौ—पूर्वजपरम्परागतवित्तमिदं देहि शुभ नोः स्वैरम् । पश्चाद्वार्द्धकसमये प्रतिपद्यस्व मतं तत्र ॥ ७७ ॥ कुमारः—
विजये कः प्रतिबन्धस्तस्करसलिलानलभयजाजि । यस्माद्विरोधजाताः सुहृदोऽपि जयेयुरिह विघ्ने ॥ ७८ ॥ पितरौ—
यद्व्रूयस्तवरोरासिङ्गनमिह सुदुष्करं पुंसाम् । तदसुखोचितानां जयादृशानां व्रताचरणम् ॥ ७९ ॥ कुमारः—ये कातरा
नराः स्युस्तेषामिह दुष्करं समग्रमपि । धीरात्मनां तु पुंसामसाध्यमिह किमपि खलु नास्ति ॥ ८० ॥ व्रतनिश्चयमवगत्य
क्षमाधिपस्तमभिषिच्य दिनमेकम् । राज्ये महामहीत्यात्मजमित्यूचे मधुरवाचा ॥ ८१ ॥ किं प्रयच्छाम्यहो तदनु कुमार-
स्तमेवमाचख्यौ । देहि रजोहरणमथो पतद्ग्रहं नापरोऽस्त्यर्थः ॥ ८२ ॥ द्वयमपि लक्षद्वितयीदानादानाय्य मेदिनीमघवा ।
अर्पयदस्मै खलु समर्थ्य पुनराह्वयद्दिवाकीर्तिम् ॥ ८३ ॥ चतुरङ्गुलीं (लान्) विमुक्त्वा ( व्य तु ) केशानपसारयेत्यना-
पत तम् । तेनापि तथा विहिते प्रसार्य पटमग्रहीद्देवी ॥ ८४ ॥ सस्नाप्य चार्चयित्वा पवित्रचेलाञ्चलेन तान् बद्ध्वा ।
आभरणकरण्डान्तर्गन्धद्रव्यैर्निचिक्षेप ॥ ८५ ॥ भूयोऽपि काञ्चनमयैः कलशैरतिशीतलैः सलिलपूरैः । स्नानं च कार-
यित्वा विलिप्य हरिचन्दनैर्देहम् ॥ ८६ ॥ परिधाप्य वस्त्रयुगलीं कनकमयैर्भूषणैर्विभूष्य भृशम् । निजकारितशिबिका-
यामारोप्य महीपतिः स्वसुतम् ॥ ८७ ॥ पूर्वाभिमुखस्थापितपीठे विनिवेश्य शक्रवद्बुधिरम् । आत्मानममन्यत स कृतार्थ-
मुचमसुताचरणात् ॥ ८८ ॥ धर्मध्वजादि लात्वा दक्षिणभद्रासने कुमाराम्बा । निषसाद सादविधुरा धात्री वामस्थपीठाग्रे

१ विपादविह्वला

॥ ८९ ॥ एका तरुणी निदधौ कुमारशीर्षे स्फुरत्प्रभं छत्रम् । तत्पार्श्वयोः सुरूपे चामरहस्ते स्थिते नार्यौ ॥ ९० ॥ पूर्वस्यां व्यजनकरा हुतभुग्भृङ्गारपाणयश्चास्थुः । स्वर्वनिता इव वनिताः स्व ( सु ) रूपलावण्यगुणमहिताः ॥ ९१ ॥ समरूपयौवनानां समानशुचिवेषरुम्वरधनानाम् । उत्क्षिप्ताऽथो शिबिका राजसुतानां सहस्रेण ॥ ९२ ॥ पुरतोऽष्टमङ्गलानि प्रतस्थिरे मङ्गलैकहेतूनि । प्रत्येकं चाष्टशतं चचाल रथतुरगगजसत्कम् ॥ ९३ ॥ असियष्टिध्वजकुन्तप्रहरणभरधारिणः प्रभूतनराः । जयजयरवमुखरमुखास्तदनु पथि प्रस्थिताः प्रचुराः ॥ ९४ ॥ कल्पद्रुरिव प्रथयन्नर्थभरं प्रार्थनापरनरेभ्यः । दक्षिणकरेण नृणामञ्जलिमालाः प्रतीच्छंश्च ॥ ९५ ॥ महिलाभिरङ्गुलीभिः परस्परं दर्श्यमानरूपकलः । प्रोत्फुल्ललोचनजनैर्निरीक्ष ( क्ष्य ) माणः प्रसन्नास्यः ॥ ९६ ॥ संप्रार्थ्यमानसङ्गः सहृदयहृदयैः परिस्फुरन् प्रीत्या । संस्तूयमानमहिमा हिमांशुरिव सुचतुरचकोरैः ॥ ९७ ॥ संप्राप पापहरणं शरणं संसारभीतजन्तूनाम् । विश्वश्रीभरशरणं कुमारराजः समवसरणम् ॥९८॥ दृक्पथमुपागते श्रीवीरे तरसाऽवतीर्य शिबिकातः । कृत्वा प्रदक्षिणात्रयमेष ववन्दे मुदा नाथम् ॥ ९९ ॥ प्रणिपत्य प्रभुमेवं विज्ञपयामासतुस्ततः पितरौ । एकोऽयमस्मदात्मज इष्टः स च जातभीर्भवतः ॥ १०० ॥ युष्मच्चरणोपान्ते प्रव्रज्यामीहते वयं तुभ्यम् । दद्मः सचित्तभिक्षामक्षामधियाऽद्य गृह्णन्तु ॥ १०१ ॥ प्रभुणाऽभाणि न कार्यः प्रतिबन्धस्तदनु भद्रनन्दिरथो । गत्वेशानदिशं स्वयममुचत्पुराभरणभारम् ॥ १०२ ॥ केशकलापमलुञ्चन्निपुरतरपञ्चमुष्टिभिरनिष्टम् । दुष्कर्मजालमिव स प्रसन्नधीर्देव्यधत्त पटम् ॥ १०३ ॥ हंसविचित्रं नेत्राश्रुवारिधाराप्रवर्षिणी घनवत् । जगृहे साऽऽभरणालीमा-

१ हंसेन विचित्रं चित्रवन्तं पटमित्यत्रान्वयः पटे हंसचित्रमस्तीत्यर्थः.

स्रीनमना जिनाज्ञायाम् ॥ १०४ ॥ अस्मिन्नर्थे वत्सक यतितव्यं मा कृथाः प्रमादभरम् । जननीसुदीर्थं तनयं प्रति सम
निर्जं जगाम ततः ॥ १०५ ॥ आह कुमारः स्वामिन्नेष भवो ननु दवोपमाधारी । यत्रानेके सत्त्वा दुःखाग्निभरेण दह्यन्ते
॥ १०६ ॥ तदुपशमाय घनाघनसर्वोत्कृष्टोरुवृष्टिसदृष्टिसमाम् । देहि प्रसद्य दीक्षामीर्ष्योर्मिविषादतापहराम् ॥ १०७ ॥ तदनु
स्वमुखेन विभुर्दस्याऽस्मै सुव्रतानि रत्नानि । अनुशिष्टिमित्यजापत प्रवर्तितव्यं यतनयैव ॥ १०८ ॥ स्थाने याने पानेऽशने
तथा समुपवेशने शयने । यवने विहाररचने प्राणिपरित्राणकृत्य भोः ॥ १०९ ॥ तव गीस्तथेति नेतः प्रपद्यमान१ स जह्-
नन्दिमुनिः । अध्ययनार्थं स्थविरोपान्तेऽथ स्थापयाञ्चक्रे ॥ ११० ॥ विधिवत्कृतोरुतपसा व्रतपालनतत्परेण नयमुनिना ।
एकादशाङ्गधीता स्तोकेनानेहसाऽनेन ॥ १११ ॥ सुचिरं प्रपाल्य संयममन्ते संलिख्य मासमेकमसौ । आलोचितसर्वैनाः
सौधर्ममवाप सुरलोकम् ॥ ११२ ॥ तत्रोपभुज्य भोगानवियोगानायुषः क्षये च्युत्वा । प्राप्योत्तमकुलजन्म प्रपाल्य धर्मं
गृहस्थानाम् ॥ ११३ ॥ प्रान्ते प्रपद्य दीक्षां भावी देवः सनत्कुमारेऽसौ । एवं ब्रह्मणि शुक्रानतनामन्यारणे चापि ॥ ११४ ॥
तस्मा ( स्मा ) त्सर्वार्थाख्ये चतुर्दशस्वेषु जन्मसु सुरेषु । विषयसुखान्यनुभूत्वा ( य च ) ततो विदेहे नरो भूत्वा ॥११५॥
प्रतिपद्य प्रव्रज्यामज्यायःस्थानवर्जनोत्सुकाम् । प्रक्षिप्तसर्वकर्मा केवलमासाद्य परमोघम् ॥ ११६ ॥ प्राप्स्यत्यक्षयमोक्षान-
न्तसुखं ज्ञानदर्शनसहाय१ । ज्योतिर्मयतामयते यन्नात्माऽसौ प्रदीप इव ॥ ११७ ॥ श्रीजम्बूनन्दिचरितं चरितं गुणोघैरा-

---

१ भगवता

कर्ण्यं कर्णपुटकैः पटवो मनुष्याः । सत्पात्रदानविधये निधये शुभानां, नित्योद्यताः सुविदितार्थभरा भवन्तु ॥ ११७ ॥

॥ इति सुपात्रदानोपरि श्रीभद्रनन्दिचरितं श्रीविपाकश्रुताख्यातं समाप्तम् ॥

अथ सर्वकषायपरिजिहीर्षयोपदेशकाव्यमुपदर्श्यते—

**कोहाइया सोलस जे कसाया, पच्चक्खरूवा नणु ते पिसाया ।**
**छलंति ते लोयमिमं समग्गं, दुक्खं समप्पंति तहा उदग्गं ॥ ३० ॥**

व्याख्या—क्रोध आदिर्येषां ते क्रोधादिकाः । षट् च दश च षोडश ये कषायाः प्रसिद्धरूपाः । कषायेषु क्रोध एव मुख्यस्तदनुवर्त्ती मानश्च, द्वयोरेतयोरविनाभावः, यत्र क्रोधस्तत्र मानेनावश्यं भाव्यम् । यत्र च माया तत्र लोभः, एतयोरपि एकाश्रयित्वं, यः पुमान् मायावान् सोऽवश्यं लोभाभिभूत एव, यः कश्चिन्निर्मायः स निर्लोभ एव । ते च कषायाः क्रोधमानमायालोभरूपाश्चत्वारः प्रत्येकं संज्वलनप्रत्याख्यानाप्रत्याख्यानानन्तानुबन्धिभेदेन षोडश बोद्धव्याः । सं ईषत् ज्वलयन्ति चारित्रिणमपीति संज्वलनाः । प्रत्याख्यानावरणाः सर्वविरतिनिषेधकाः । न विद्यते प्रत्याख्यानं देशसर्वविरतिरूपं येषु तेऽप्रत्याख्यानाः । अनन्तं भवमनुबध्नन्तीति अनन्तानुबन्धिनः । यद्यपि चैषां शेषकषायोदयरहितानामुदयो नास्ति तथाप्यवश्यमनन्तसंसारमूलकारणमिथ्यात्वोदयाक्षेपकत्वादेषामेवानन्तानुबन्धित्वव्यपदेशः । यदुक्तं—"जाजीववरिसचउमासपक्खगा निरयतिरिनरा अमरा । सम्माणुसव्वविरईअहखायचरित्तघायकरा ॥ १ ॥" व्याख्या—यावज्जीवं (व) वर्षादीन् गच्छन्तीति डप्रत्ययः । व्यवहारत इत्युक्तं, अन्यथा बाहुबल्यादीनां पक्षादिपरतोऽपि संज्वलनाद्यवस्थितिः

श्रूयते । अन्येषां संयतादीनां चानन्तानुबन्ध्यादीनामुदयस्य श्रवणात् अन्तर्मुहूर्त्तादिकं कालं यावत् । कारणे कार्योपचा-
रात् कषाया अनन्तानुबन्ध्यादयोऽपि नरकादिदाः । इदमपि व्यवहाराश्रितमेव, अन्यथा अनन्तानुबन्ध्युदयवतामपि
मिथ्यादृशां केषांचिदुपरितनग्रैवेयकेषूत्पत्तिः श्रूयते । प्रत्याख्यानावरणोदयवतां देशविरतानां देवगतिः । अप्रत्याख्यानो-
दयवतां च सम्यग्दृष्टिदेवानां च मनुष्यगतिः । अथ एभ्यः षोडशभेदेभ्यः चतुःषष्टिभेदा अप्युद्भाविताः संभवन्ति । यथा
संज्वलनः संज्वलनक्रोधः, संज्वलनः प्रत्याख्यानक्रोधः, सञ्ज्वलनोऽप्रत्याख्यानक्रोधः, संज्वलनोऽनन्तानुबन्धिक्रोधः । एवं
प्रत्याख्यानाप्रत्याख्यानानन्तानुबन्धिक्रोधाः प्रत्येकं चतुर्भेदाः कृताः षोडशभेदभाजः स्युः । एवं मानमायालोभा अपि
प्रत्येकं षोडशषोडशभेदाः स्युः । सर्वे मिलिताः चतुःषष्टिर्भवन्ति । यद्येषां चतुःषष्टिभेदत्वं न स्यात्तर्हि श्रीकृष्णश्रेणिक-
सत्यक्याद्यः क्षायिकसम्यक्त्वधारिणोऽपि कथं नरकगतिभाजः स्युः । पर तत्र संज्वलनानन्तानुबन्ध्युदय एव कारण-
मिति तत्त्वं । "पच्चक्केति" प्रत्यक्षरूपा दृश्यरूपाः । ननु निश्चितं । ते कषायाः पिशाचा एव मन्तव्याः । तेषां कर्तव्य-
माह—ज्वलयन्ति ते कषाया लोकं इमं प्रत्यक्षोपलक्ष्यमाणं समस्तं । तथा दुःख शारीरमानसादिकं समर्पयन्त्युग्रं महा-
विषमिति गाथार्थः ॥ १० ॥

ये च कषायपिशाचैर्न छलितास्त एव धीराः प्रख्याप्यन्ते न त्वितरे । तदुपरि श्रीदमदन्तराजर्षिसन्धिमाह—

नूत्तामिणिज्जालरयणि पसत्थ, तिठठंचम जिहिं जण वसइ सुत्थ । अन्नाइं (इ) ववहारि य लोय अत्थ, न हु दीसइ
जिहिं दुरयत्थसत्थ ॥ १ ॥ चिंतित्तु चित्ति अइविसम अत्थ, करयलि कलंतवरचक्कसत्थ । सुसिलोयजुत्तिकारणि पसत्थ,

जिहिं पंकियसम नणु सुहफसत्थ ॥ २ ॥ जिणहरम्मि (हि) यकंचणकंतिमीस, कलसुजालजोइहिं रयणिदीस । अंतर न
मुणिज्जइ जगिहिं वीसु, तं नयर अत्थि इह हत्थिसीस (सु) ॥ ३ ॥ कुंदुजालमंजुलसवलदंत, कुत्थियदीणहघणदाणदिंत ।
अमरिंदतुल्लनवरूवकंत, दवदंत तत्थ वसुमईकंत ॥ ४ ॥ जेणुद्धरघु (जू) यबलसादसेण, समरंगणि जित्तियवेरिसेण ।
हिमकिरणरुप्पसेलुज्जलेण, जूमंकल धवलिय नियजसेण ॥ ५ ॥ सो जरासिंधु पकिवासुदेव, संसेवण कज्जिहि मणुअदेव ।
दवदंत रायगिहपुरिहि पत्त, बहुमन्निय तेणवि सिन्नजुत्त ॥ ६ ॥ इत्थंतरि हत्थिणपुरवराउ, निग्गच्छियविण नाहिण व-
(व) राउ । तसु देसुच्चूरिय पंकवेहिं, पंचहिं मंकियबलतंकवेहिं ॥ ७ ॥ तं वइअरमाइन्निय जवेण, दवदंतज्जूमिवइणा
चरेण । हत्थिणपुर वेढिय नियबलेण, जह नहयल सयलुवि वद्दलेण ॥ ८ ॥ जाणावइ पंकव चरमुहेण, निवसंत देस
अम्हह सुहेण । उव्वासिय तासिउ न हु बलेण, तुम्हेहिं किंतु निच्छइ छलेण ॥ ९ ॥ न हु एस वीरलोयाण मग्ग, जं
किज्जइ छल काउरिसजुग्ग । तुम्हे उत्तमवंसुप्पवाय, तत्थवि पुण पंच य पंकवाय ॥ १० ॥ जइ अच्छइ परक्कम कोवि
तुम्ह, निग्गच्छिय कुग्गवराउ अम्ह । संमुह आवेविण जुझ लेहु, पकिणीयचक्कसिरि पाय देहु ॥ ११ ॥ अज्जवि न किंचि
गयमत्थि तुम्ह, जुयकंडू खिज्जउ रणिहिं अम्ह । इय दूअवयणि ते तज्जिया य, कुग्गंतरि संठिय लज्जिया य ॥ १२ ॥
जह मूसग मज्जारियजएण, चिट्ठंति विलंतरि विग्गहेण । तह अप्पा रक्खिय पंकवेहिं, हत्थिणपुरकुग्गि निलुक्कएहिं ॥१३॥
तिहिं कुग्गरोह बहुदिण करे वि, बाहिरठियनर वंदिहिं धरेवि । दवदंतराउ नियगणि पत्त, नयमग्गि रज्ज पालइ पवित्त
॥ १४ ॥ अह कइवइ दिवसंतिरिहिं तत्थ, सिरिनेमिनाहगणहर पसत्थ । सिरिधम्मघोससूरिंदचंद, जिव हरिसिय धम्मि-

पकुमुयविंद ॥ १५ ॥ तत्थागममुणिगणमणुअरेहिं, अरविंद जेम सेविय सुरेहिं । बलंदणकज्जि समेइ राउ, पणमइ पहु-
जणिहि सूरिपाउ ॥ १६ ॥ वरवेसधरंजियमाणसेण, सेवियवेरग्गरसायणेण । धणधरणमुणियमसेस, विसयाइसुरक पइ-
छाण एव ॥ १७ ॥ पडिवज्जइ संजममायरेण, परियणसयणाइ न गणिय तेण । अह सुत्तअत्थसिरक्कं खरेवि, गुरुआण
मउड सीसिहिं गहेवि ॥ १८ ॥ गीयत्थगुणिहिं अणुगंजणीय, सुरमाणवदाणवपुअणीय । एकल्ल स मुणि करइ विहार,
अठारसहसलीलंग धार ॥ १९ ॥ दयदत्तरायरिसि गयपुरंमि, समुयागय पंचवपुरवणम्मि । किरि मुत्तिमंत जगि धम्म एह,
वेरग्गरंग अइचग देह ॥ २० ॥ सो पुरउवारि ठिय काउसग्गि, अक्कोहिय सुरनरखयरवग्गि । मेरुव निप्पकंपगुणंग,
अकोहमाण परिचत्तसंग ॥ २१ ॥ ( भाव ) रयवाडीकज्जिहिं परियणसमिहिं, दिट्ठ पंचहिं पंडवेहिं । सो मुणिवर-
तरकण देइ पइक्कण वंदिय जत्तिपरमसिहिं ॥ २२ ॥ कयपुन्न धन्न मुनिवर महंत, दवदंत रायरिसि विजयवंत । पयस्स
नमंसणदंसणेण, दूरेण दुरिय नासइ खणेण ॥ २३ ॥ निस्संगसिरोमणि समणसीह, मुणिमज्झि इमस्स उ पढमलीह । तिण
जेम जेण परिचत्त रज्जघणपरियणसुंदररूवजन्न ॥ २४ ॥ पंचहिं पंडवि किय परमजत्ति, इय कवि सुणंतुवि अप्पकित्ति ।
न हु आणइ चित्तहमसि माण, इक ठायइ नियमणि सुक्कझाण ॥ २५ ॥ चढिएसु तेसु इय मुणि थुणिसु, दुज्जोहण इत्थं-
तरइ पत्तु । पडिमट्ठिय दिट्ठ तेण साहु, तत्तुवरि अइरुट्ठ सो असाहु ॥ २६ ॥ एएण अम्ह अइअजस दिन्न, गढरोह
करिय अयसिरीय छिन्न । इय पुव्ववेर संजरिय चित्ति, सो बीजपूरि ताडेइ झत्ति ॥ २७ ॥ तं दट्ठु तस्स परियण असेस,
उप्पन्नतियअमरिसविसेस । पाहाणखंडि आहणइ साहु, सुहझाणि सहइ सो निरवराहु ॥ २८ ॥ रइवाडियचडियजुहि-

छिदेण, मुणिरायमपिछिय पत्थिवेण । वहुपत्थर पिक्खिय परियणो य, अह पुछिय तेण य अप्पणो य ॥ २९ ॥ सो कत्थ साहु जो इत्थ हुंत, जियरागदोस मुणिगणमहंत । तेणवि डुज्जोहण तणिय वत्त, वज्जरिय सुणिय सो डुक्ख पत्त ॥ ३० ॥ दूरिहिं अवसारिय उवल तेण, आसासिय मुणि सह परियणेण । तसु देह सज्ज काऊण राय, खामीय संपत्तउ गेह-नाय ॥ ३१ ॥ दवदंतरायरिसि सुद्धचित्त, इय जावण जावइ सुप्पवित्त । खणभंगुर देह असार एह, मलमुत्तपरीसहत-णउ गेह ॥ ३२ ॥ जइ इत्थ सहिज्जइ किंपि कठ, सिवसुह पाविज्जइ तेण इठ । न हु कोइ मित्त मह सत्तु तेम, फरुस-क्खर हवँ ( उ ) वागरउँ ( उ ) केम ॥ ३३ ॥ अवराहपरेसुवि पोरवेसु, नहु रोस वहउँ ( उ ) जीवियहरेसु । उवया-रिसु गुणसंथवपरेसु, समचित्तवित्ति तह पंडवेसु ॥ ३४ ॥ कइयावि जुहिछिलभूमिपालु, सेवा समुवागय अइकिवालु । डुज्जोहणमइडुज्जाणमणिठ, इय तज्जइ रे रे धिठ डुठ ॥ ३५ ॥ कुलकमलहुयासण हीणचित्त, तुह जम्मवि जीविय अप्प-वित्त । अवहेलिय किणि कारणि मुणिंद, तइँ ( इ ) सीयलसोम जहेह चंद ॥ ३६ ॥ तइया तउँ ( उ ) कत्थवि गयउ आसि, गिज्जंती न सुणीय गुणहरासि । हत्थिणउर वेढिय नियवलेण, जइया दवदंतनरेसरेण ॥ ३७ ॥ पढमं पंचवि अम्हे जिया य, पछा पंचवि नियइंदिया य । तो पंचमहव्वय धरिय भार, जिण्पिय कुण सक्कइ मुणि उदार ॥ ३८ ॥ नमणिज्ज एह जगवंदणिज्ज, पुज्जाणवि मुणिवर एह पुज्ज । इत्थंतरि डुसह सहंत पीड, दवदंतरायरिसि सिरिकिरीड ॥ ३९ ॥ नियआउतणउ पज्जंत जाणि, चत्तारि कसायह करीय हाणि । मुणि लीणउ निच्चलसुक्कझाणि, चंचलजिय आणीय इक्कठाणि ॥ ४० ॥ पडिवज्जिय झाणंतरियमेस, पज्जालिय कम्मिंधण असेस । आरुहिय खवगसेणिं मुणिंद, संप-

चउ केवलसिरिमिमंद ॥ ४१ ॥ न हु खमइ अम्ह गुणगणउ अंत, जगवंत नाणदंसण अणंत । दढदंतरायरिसि सत दंत, सो हूअउ निवुइरमणिकंत ॥४२॥ (घात) इयपरि दढदंतह चरिय सुणंतह पुण्णवंत भवीयहनरह। भवपाव पणासइ मण उल्लासइ सासयसुहसंगपरह ॥ ४३ ॥

॥ इति श्रीदृढदन्तराजर्षिसन्धिः ॥

अथ परोपहासकरणमुत्तमानामतीवानुचितं तद्विषयोपदेशमाह—

परोपहासं न कहिंपि कुज्जा, लहुत्तणं जेण जणो लहिज्जा ।

परस्स दोसेसु मणं न दिज्जा, धीमं नरो धम्मधुरं धरिज्जा ॥ ३१ ॥

व्याख्या—परः स्वस्मादन्यस्तस्योपहासः परोपहासः परदोषोद्घाटनं त न कुत्रापि समविषमदशायामपि कुर्यादिति शिष्टाचारः, येन कृतेन जनो लघुत्वं लभेत। तथा परस्य दोषेषु मनो न दधीत। धीमान्नर एवं कुर्वन् धर्मधुरां धरेदिति काव्यार्थः ३१

एतदुपरि दृष्टान्तमाह—

एकदा निर्मदात्माऽगादनगारशिरोमणिः । चित्रकूटमहादुर्गं साक्षात् स्वर्गमिव श्रिया ॥ १ ॥ जिनवल्लभसूरीन्द्रः शिष्यप्रग्रहभासुरः । विहरन् संहरन् सूर इव मिथ्यात्वदुस्तमः ॥ २ ॥ वसतौ याचितायां तदासिस्रोकोऽददात्तदा । सो-

१ श्रीठाणांगे—"चउहिं ठाणेहिं हासुप्पत्ति सिया, तंजहा—पासित्ता भासित्ता सुणित्ता संभरित्ता । तथाच—"आयारपन्नत्तिधरं, दिट्ठिवायमहिज्जगं । वायविक्खलियं नच्चा, न तं उवहसे मुणी ॥ १ ॥" इत्यपि ज्ञेयं ।

पहासं चण्डिकायाश्चैत्यमत्यन्तदुर्धियः ॥ ३ ॥ धर्मैकतानधीः सूरिरवात्सीत्तत्र शिष्यकः । रात्रावेकः समुत्थाय प्रायः केलिप्रियत्वतः ॥ ४ ॥ भैरवीचक्षुषोर्द्वन्द्वमुच्चखानातिकोपतः । शिशोरुत्पाटयामास नेत्रेऽसौ (स) दुःखितोऽरुदत् ॥ ५ ॥ गुरुर्ज्ञात्वा समाकृष्य पशुवद्ध्यानरज्जुतः । तामाह चण्डिके चण्डे शिष्यकस्यास्य का गतिः ॥ ६ ॥ वेगाद् दृग्युगमेतस्य देहि मुग्धाशयो ह्ययम् । तया दिव्यानुभावेनाकारि व्याकोशलोचनः ॥ ७ ॥ ततः साधारणश्राद्धः श्रद्धावान् साधुभक्तधीः । सूरिमानीय शून्यैकवेश्मन्यस्थापयन्मुदा ॥ ८ ॥ स्वौकस्तीरे गुरोः सेवामकृतासौ दिवानिशम् । स प्रायस्तुच्छवित्तत्वात्सकलैः परिभूयते ॥ ९ ॥ द्विवेलं यात्यसौ सार्धं गुरूणां वहिरन्यदा । अधिकार्यहसन्नाशस्तद्द्वयं वीक्ष्य वर्त्मनि ॥ १० ॥ कीदृक् सदृग्युगलिका मिलिता मलिनाम्बरा । यादृग्गुरुस्तथैवैष यजमानोऽप्यहो जनाः ॥ ११ ॥ ततोऽसौ गुरुणाऽभाणि न श्रियः क्वापि हि स्थिराः । प्रायोऽधिकारिवर्गस्य दुःशीला महिला इव ॥ १२ ॥ त्वदीयहृदयादेष समुत्तारयिता शिलाम् । न सामान्यजनो ज्ञेयस्त्वया गर्वान्धचक्षुषा ॥ १३ ॥ ततस्तदनुगाः प्रोचुः स्वामिना सह सोन्मदाः । स कीदृग्वासरो भावी यत्रास्येदृशवैभवम् ॥ १४ ॥ तस्य भाग्यदशावेशादाचख्युः सूरयोऽन्यदा । भवता क्रियते भद्र न किं वाणिज्यमुद्यमात् ॥ १५ ॥ सहेतुकैवोक्तिरियमित्यवेत्य चतुष्पथे । यावज्जगाम स श्राद्धस्तावत्सूरिवरा जगुः ॥ १६ ॥ यदद्य प्रासुकं वस्तु लभ्यते तत्खलु त्वया । ग्राह्यमार्य विचार्य नो किञ्चिच्चित्तेऽल्पमूल्यकम् ॥ १७ ॥ श्रीपद्मान्तर्गतो यावदेष द्वेषकरो नृणाम् । तावदाभाषितः शौल्कशालिकैरिव सालकैः ॥ १८ ॥ उपहासपरैरेवमेहि वस्तु गृहाण भोः । तेनावादि न हि ग्रन्थौ देयमास्ते धनं मम ॥ १९ ॥ उद्धारकेण चेत् किञ्चिल्लभ्यते तर्हि गृह्यते । तैराख्यातमहो लाहि

॥११३॥

मदनस्तम्भकानिमान् ॥ २० ॥ धनं विक्रीय विक्रीय दास्येऽहं साम्प्रतं न हि । तैः मयपे समुत्पाट्यानिनाय स निजौकसि ॥ २१ ॥ ततो गुरव आपस्युर्दरुद्यैनैतकं प्रति । एते संशोध्य संशोध्य विक्रेतव्या न चान्यथा ॥ २२ ॥ यावद्ग्ग्यार्जयोपेतौ दम्पती जेतुमास्थितौ । तावन्मध्याद्विनिर्जग्मुस्तपनीयमया कुशाः ॥ २३ ॥ हृष्टस्तुष्टस्ततः श्रेष्ठी संगोप्यैतान् गृहान्तरे । शनैः शनैः सुविक्रीय ददौ तद्देयमादरात् ॥ २४ ॥ ईश्वरत्वं क्रमेणापाकारि तादृग्गुरुाज्ञया । नुकोपाधिकृतस्योपर्युर्वीशस्तु कदापि हि ॥ २५ ॥ वस्तुप्रधान्तः सोऽपाति मूर्च्छितत्वातकैरिव । भूपादिष्टेर्भटैर्दुष्टैर्सैन्यदम्यकृतेऽन्यदा ॥ २६ ॥ यदस्यदायि च निशाऽग्रान्तरे दुःखिनाऽमुना । श्रेष्ठी साधारणो दृष्टः स्पष्टमाचष्ट तं प्रति ॥ २७ ॥ अहो निजगुरोर्वाक्यं पालय त्व महामते । गुर्वादिष्टा निकृष्टा मे सा वेला समुपस्थिता ॥ २८ ॥ अतस्तेन तयार्ष्णा तदे पदम्यसञ्चयम् । विधाय मूर्धनि स्वीये न्यमोचि नृपसङ्कटात् ॥ २९ ॥ यथाऽनेनोपहासस्यात्रैव राजाधिकारिणा । फलं लब्धं तथाऽन्योऽपि भुङ्क्ते हास्यवशंवदः ॥३०॥ तस्मान्नैवोत्तमेनापोपहस्यः कोऽपि सद्धिया । सधनो निर्धनो वापि स्वगौरवजरार्थिना ॥ ३१ ॥

॥ इति साधारण( श्रेष्ठि )दृष्टान्तः ॥

"परस्स दोसेसुवि" परस्य दोषाः सन्तोऽपि नोद्भाव्याः । एतदुपरि श्राद्धात्मजदृष्टान्तमाह—

पुरे पोतनपूर्नाम्नि धाम्नि धान्यधनश्रियाम् । वसन्ति सद्य तरुणाः करुणारिक्तचेतसः ॥ १ ॥ एकः श्रावकपुत्रोऽस्ति तन्मित्रं मिथ्यापकः । परदोषतिरस्कारमा तत्र शत्रुसुहृत्समः ॥ २ ॥ वने जग्मुर्धनाढ्यास्तेऽन्यदा लोकैः समं मथौ । अदे-

सर्वो भूताङ्कतः । तेष्वाह श्रावको नाहं हरे किञ्चित्र कस्यचित् ॥ ५ ॥ अमुमर्थं नृपो यस्मादेव नो निहितः पदे । सम्मानयित्वाऽन्ये सर्वे दण्डिताः क्रूरकर्मणि ॥ ६ ॥

॥ इति तृतीयाणुव्रतकथा ॥

अथ चतुर्थव्रतमुच्यते—

समायरं वा अवरस्स जायं, मणिज्ज ठिविज्ज जणावायं ।
जे अन्नकंतासु नरा पसत्ता ते ऊंति दुक्खाइ इहेव पत्ता ॥ ४५ ॥

व्याख्या—आत्मीयजननीमिवापरस्यात्मव्यतिरिक्तस्य जाया भार्या मन्येत पराङ्गनां स्वमातरमिव मन्यीत । ठिम्यादेवं कुर्वन् जनापवादं जनावर्णवादं एवं कुर्वतः पुंसः सर्वथा जनापवादो न स्यात् । व्यतिरेकमाह—ये परस्त्रनास्वन्यकान्तासु नराः प्रसक्ताः प्रसङ्गभाजः स्युः ते झटिति दुःखान्यत्रैव जन्मनि प्राप्ता लक्ष्मणवदिति काव्यार्थः ॥ "समणोवासगो भूवर्ग मेहुणं पच्चक्खाइ । से परदारगमणे दुविहे पन्नत्ते, तं जहा—ओरालियपरदारगमणे वेउव्वियपरदारगमणे (य) । सदारसंतोसस्स इमे पंच अइयारा जाणियव्वा, न समायरियव्वा, तं जहा—इत्तरपरिग्गहियागमणे अपरिग्गहियागमणे अणंगकीडाकरणे परवीवाहकरणे कामभोगतिव्वाभिलासे त्ति" । अत्रोदाहरणम्—

अत्रास्ति स्वस्तिमद्भ्रमरकचक्षुषिताञ्चितम् । पुरं श्रीनिलयं नाम धामाख्यामार्थसम्पदाम् ॥ १ ॥ तत्रारिकुञ्जकीलालखाद-

१ कीलालं रुधिरं ।

यथार्थनामा कामाजस्तत्राधीशोऽरिमर्दनः ॥ २ ॥ कमले श्रीरिवोदारा तद्गृहे कमलेक्षणा । कमलश्री-
सासित्तुजङ्गमः । यथार्थनामा कामाजस्तत्राधीशोऽरिमर्दनः ॥ २ ॥
रिति प्रीतिपात्रं प्रेयस्यजनि प्रभुजा ॥ ३ ॥ तयोरजन्यनूनश्रीः सूनुः सूनृतवाक्पटुः । शूरवीरशिरोरत्नं वीरनामा कुमारकः ॥ ४ ॥ सोऽन्यदाऽऽखेटकं कर्तुमटाट्यन् त्रिकटाटवीम् । नैकं शशकमेणं वा प्रेक्षिष्टाक्लिष्टधीरपि ॥ ५ ॥ ततो विस्मितचेताः सन् बम्भ्रमीति यतस्ततः । कुतश्चिन्तार्तचित्तानामेकत्रावस्थितिर्धृतिः ॥ ६ ॥ तस्मादेकत्र निस्त्रासदेशे पेशलभूरुहे । अपश्यन्नतिविश्वस्तान् सारङ्गव्याघ्रशशकप्रभृतीन् श्वापदव्रजान् ॥ ७ ॥ निरातङ्कान्निराशङ्कानेकत्र मिलितान् भृशम् । स्निग्धवत्प्रीतिवत्सलान् ॥ ८ ॥ तत्कालमेव जीमूतोद्दामगर्जिततर्जनम् । वर्जनं पापपूगस्य साधोर्ध्यानं शृणोत्यसौ ॥ ९ ॥ वैरायन्ते न तिर्यञ्चः परस्परमनेकशः । न ते यत्प्रहताः शस्त्रैर्निशितैरागतैर्जवात् ॥ १० ॥ विवेदेतोऽस्य परिवारेण हिंसान्यस्त्राणि तान् प्रति । परं श्वापदजन्तूनां न लगान्यङ्गके मनाक् ॥ ११ ॥ तत्सर्वं स्फूर्जितं साधोः प्रभावस्य महीयसः । विवेद मेदिनीकान्ततनयो विनयोज्ज्वलः ॥ १२ ॥ ततः समुल्लसद्भक्तिपूरपूरितहृत्सकः । समेत्य साधुमानस्य विधिनाऽग्र उपाविशत् ॥ १३ ॥ तत्परीवारवर्गोऽपि प्रणनाम गुरोः पदम् । गुरुर्धर्माशिषा सर्वानभिनन्द्य विदांवरः ॥ १४ ॥ जैनधर्मम-चाचख्यौ श्रमणः सुकृतोद्यमी । दुर्लभः प्राप्यते नैव नृभवो भवकोटिभिः ॥ १५ ॥ तत्रापि सत्तमा जातिर्दुष्प्रापं तत्र सत्कुलम् । कुलेऽप्यद्भुतरूपत्वं रूपेऽप्यारोग्यमुत्तमम् ॥ १६ ॥ तत्रापि धर्मसामग्री सामग्र्यामपि सत्क्रिया । क्रियायामपि कौशल्यं कौशल्ये सुविचारता ॥ १७ ॥ तत्रापि हि दयावत्त्वं सर्वसत्त्वेषु सर्वदा । पालनीयं सदाचारविचारचतुरात्मना ॥ १८ ॥

१ परस्मैपदं चिन्त्यम् । २ पूगः समूहः ।

परप्राणापहारेण ये मन्यन्ते स्वशूरताम् । धिक् जन्म यौवनं तेषां जीवितव्यमपीह धिक् ॥ १९ ॥ भूयांस्येनांसि सन्तीह परं प्राणातिपातजम् । पातकेषूच्यते मुख्यं मोक्षाशाशासकारणम् ॥ २० ॥ सर्वेऽपि प्राणिनः स्वीयमाणत्राणपरायणाः । त्राय्यमाना इमे मार्गैः प्राणिनः स्युः सुदुःखिताः ॥ २१ ॥ सुखिना दुःखिना वाऽपि जीविताशा समैव हि । कथमेके विहन्यन्ते रक्ष्यन्ते च तथा परे ॥ २२ ॥ जीवहत्याविधातारः फलमश्नुवते कटु । तेषां दुर्गतिपातः स्यादसातशतसंकटः ॥ २३ ॥ इत्यर्हद्धर्मनिरतश्रोपदेशामृतपानतः । निर्वापितस्फीततृष्णार्चिर्लेभे सम्यक्त्वमुज्ज्वलम् ॥ २४ ॥ न हि सकम्पतः स्थूलजीवघातमतः परम् । करिष्ये स्थूलमनृतं न ब्रुवे पञ्चधा मुधा ॥२५॥ परस्त्रीसेवनं मांसजग्धाद्य सपातकम् । वर्जितं तत्परीवारजनेन गुरुसाक्षिकम् ॥ २६ ॥ प्रणिपत्य गुरुं जेजुः कुमाराद्या नरास्ततः । स्वं स्थानं सुस्थिता धर्मे धर्मेणार्था-सरं यथा ॥ २७ ॥ अथान्यदाऽवनीनेत्रा पुत्राः पृष्टाः सुधीमता । कीदृशी शेमुषी कस्येति परीक्षां विधित्सता ॥ २८ ॥ पाञ्चालदेशे भवका योऽस्ति संस्थापितः पुरा । अस्वामिभुक् सुदक्षात्मा नियोगी वञ्चनोज्झितः ॥२९॥ दशाब्दी स दीनारसत्कासेकत्र वत्सरे । उत्पतिष्णुं समाख्याति तावदन्योऽब्रवीद्वदः ॥३०॥ वत्साः पञ्चदशामुष्य वास्ये देशास्य तेऽत्र नोः । अस्मा(युष्मा)भिः पूर्वमेवोक्तमर्थयाम्यधिकं पुनः ॥ ३१ ॥ ततः किमत्र कर्तव्यं धीरं मुक्त्वेत्यवक् प्रभुः । तत आख्यान्ति सर्वेऽपि योऽर्थयेऽमुरि भूयसो ॥ ३२ ॥ स तत्र स्थाप्यते देशे किमन्यैरर्जनोज्झितैः । ततः क्षितिपतिं मोघे नोच्यते वीर किं त्वया ॥ ३३ ॥ स प्रश्नशिराः प्राप्यत तातपादैर्न्यगादि यत् । पूर्वोऽधिकारी निर्मायः शाठ्यमुक्तमतिर्नृशाम् ॥ ३४ ॥

---

१ तव किमत्र कर्तव्यमिति प्रभुरवक् ततो धीरं मुक्त्वा सर्वेऽप्याख्यान्तीत्यन्वय ।

स एवास्माकमत्रेष्टः किमन्यैः क्लिष्टचेष्टितैः । मा प्रजाः पीडयत्वेष न्यायेनार्जयताद्धनम् ॥ ३५ ॥ बहु द्रव्यं विनाऽन्यायेन कथं वृद्धिमश्नुते । अन्यायश्च महत्पा(द्दापा)पद्रुममूलमुदीरितम् ॥ ३६ ॥ पूर्व एव नियोग्यस्तु स्वस्तिकृद्यः प्रजाजने । नादत्ते ह्यधिकं द्रव्यमनयं दूरतस्त्यजन् ॥ ३७ ॥ योऽर्जयिष्यति निष्कस्य लक्षान् पञ्चदश ध्रुवम् । ऋतेऽनीतिं कथमसौ धनमुत्पादयिष्यति ॥ ३८ ॥ नवन्नियोगितामेत्य यः समुल्लङ्घयेन्नयम् । अयं दाता ह्यधर्मस्य तवाथाप्ययशस्ततः ॥ ३९ ॥ ततश्चिन्तयति क्ष्मापः पापनिर्मुक्तधीरयम् । ज्यायान् लघुरपि प्रायः प्रकृष्टैः सद्गुणव्रजैः ॥ ४० ॥ राज्यधूर्धरणे धुर्यवर्यतावं व्रजेदसौ । ततः समानजातिभ्यो रत्नवद्यत्नमर्हति ॥ ४१ ॥ निश्छद्मातुल्यवात्सल्यपिच्छलस्वच्छमानसे । मय्यस्मिन् वैरभाजः स्युरन्ये धन्ये गुणोत्करैः ॥ ४२ ॥ तस्मादेषोऽन्यदेशेऽपि निर्गुणीकृत्य निर्जरम् । प्रेष्यते तत्र सौख्येन शाता निःशङ्कनिर्जयः ॥ ४३ ॥ पश्चादपि हि राज्यस्याधारः स्तम्भो गृहस्य वा । भव्यमुक्तोरुभद्रौघः सम्यग्भावी सुनिश्चितम् ॥ ४४ ॥ एवं विमृश्य भूमीशस्तं कुमारमुदाहरत् । वत्स सर्वेऽप्यमी पुत्रा दुश्चरित्राश्च दुर्धियः ॥ ४५ ॥ त्वमेवैकः सुधीस्तेभ्यः प्रजल्पन् वैपरीत्यतः । नान्यार्जितश्रियो भोक्तृभावस्तवस्यत्र युज्यते ॥ ४६ ॥ विहाय रहसा देशमेनमन्यत्र याहि भोः । नात्रस्थस्य भवद्भव्यैर्भवं व्यज्यते खलु ॥ ४७ ॥ ततः पृथ्वीपतेः पादाब्जमरकृत्य स निर्ययौ । मंत्रिमागरमल्यात्मजन्मना विमलेन युक् ॥ ४८ ॥ प्रछन्नादिष्टभूपष्टसुभटैः पान्थतां गतैः । अनुद्रुताध्वा प्रययौ स कोशलपुरं पुरम् ॥ ४९ ॥ पुरः परिसरोद्देशसरस्तीरे नरेशसूः । विशश्राम श्रमी यावत्तावत् कलकलोऽभवत् ॥ ५० ॥ अनार्यतुर्यनिर्घोषः पुरे प्रादुर्भवत्

१ रत्नमिव रक्षितुं योग्योऽस्ति । २ वा शब्दोऽत्रेवार्थे ।

च । नगरागमसुका कोऽपि तेनापृच्छ्यत तापसा ॥ ५१ ॥ पुरे कोऽप्युत्सवोऽद्यासे येन वाद्यध्वनिर्महान् । श्रुत्वोरानन्द-
मातन्वनाकरयते अहो वद ॥ ५२ ॥ स प्राह श्रूयतामत्र रणरङ्गमहीशितुः । पुत्री कुरुमती नाम साऽऽस्ते प्राणप्रियङ्करी
॥ ५३ ॥ परं पुरुषविद्वेषपोषमादधती सती । वरं वरयते नैव किञ्चिद्दौचित्यवेदिनी ॥ ५४ ॥ ततस्तज्जनकेन स्वगोत्रदेव्य-
तिपूजया । आराध्य पृष्टा तुष्टाऽऽह जयतः पट्टकुञ्जरः ॥ ५५ ॥ यत्कण्ठे क्षिपति क्षिप्रं मालामम्लानपुष्पिकाम् । स कुमा-
र्याः पतिर्जायी तस्मिन्नेवास्ति निश्चितम् ॥ ५६ ॥ ततः करी कृतार्चः सन्मुखे तत्कटोपरि । कुमार्यारोपयाञ्चक्रे वकेसर-
मनस्विनी ॥ ५७ ॥ नवन्निर्झरैर्जिर्वाद्यैर्गजेनारामिकाहृतः । क्षुपकामे स्थापिता माला निर्मला मोदमालिनी ॥ ५८ ॥ मही-
क्षिन्माण्डलीकालीभक्तिसामन्तसेवितः । साम्प्रतं स पुरीमध्ये भ्राम्यन्नास्ते निरङ्कुशः ॥ ५९ ॥ इत्युक्त्वा विरते तस्मिन्ना-
कस्मिक इवाम्बुदः । तावत्तत्क्षेन संप्राप तत्कृपर्थं येभर्थं करी ॥ ६० ॥ गलन्मदजलासिक्तसकलक्षोणिमण्डलः । तमागच्छ-
न्तमालोक्य गर्जन्तं निर्जरं रयात् ॥ ६१ ॥ विमलोऽपोधयद्वीरकुमारं प्रवलायितम् । प्रपेदे तावदेतस्य पार्श्वे पट्टेभराट्
प्रभोः ॥ ६२ ॥ करामोक्षितस्रमाला सा कण्ठे तेनास्य चिक्षिपे । पुण्यभाजां हि राज्यश्रीर्दासीवानुपदं व्रजेत् ॥ ६३ ॥
स्वस्कन्धमपरक्षमसावारोप्य क्ष्मापनन्दनम् । अगर्ज गजसारोऽपि प्रभुस्तुष्टो निजे हृदि ॥ ६४ ॥ मारोदारोरुरूपश्रीः कुमा-
र्याः पविरेव वै । भावीति साऽपि प्रैक्षिष्ट दृष्टा ज्ञापिस्वयञ्जनम् ॥ ६५ ॥ गजानां दशकं स्वर्णलक्षं चाश्वसहस्रकम् ।
विश्राणय राजपुत्राय प्रभुर्भूस्पिष्टापनैः ॥ ६६ ॥ तायालयेऽथ सम्प्राप्ते कुमार्याः पाणिपल्लवम् । कुमारकरपद्मेन ग्राहयामास
पार्थिवः ॥ ६७ ॥ करमोचनवेलायामिभाश्वच्च तनुजन्मने । प्रददौ ग्रामसाहस्रीमश्रीनिर्नाशिनीं नृपः ॥ ६८ ॥ सौधे नृप-

तिना दत्ते लसत्तेजा दिनेशवत् । विललास सुखं भोगान् कान्तया सह भूपभूः ॥ ६९ ॥ पिता स्वप्रहितप्रच्छन्नानुगामि-
गणाननात् । पौत्रं राज्याप्तिवृत्तान्तमवेत्य मुमुदेतराम् ॥ ७० ॥ प्राज्याज्यैर्भूरिभिर्भोज्यैरभोजि क्ष्मापनन्दनः । विवाहा-
नन्तरं राज्ञा तेनाभक्ष्यं न भक्षितम् ॥ ७१ ॥ किमेतदिति पृष्टोऽसौ स्पष्टमाचष्ट पार्थिवम् । सावधानतया मन्त्रीः श्रूयते
तर्हि कथ्यते ॥ ७२ ॥ मांसपाको निषेध्योऽयं रसवत्यां महीपते । प्राक् ततः कथयिष्येऽहं तेनाप्यथ तथा कृते ॥ ७३ ॥
कुमारः प्रोचिवान् राजन् दोषो मांसाशने महान् । पञ्चाक्षप्राणिहत्यातः पलं स्यान्नान्यथा पुनः ॥ ७४ ॥ सत्त्वहिंसा तु
हेतुः स्यान्नरकस्येति दर्श्यते । सर्वेषु धर्मशास्त्रेषु समयज्ञैरनेकशः ॥ ७५ ॥ इत्याख्यायि क्षमापाल गुरुणा मे क्षमाभृता ।
कृता तस्योपदेशाली मुक्तामालेव वक्षसि ॥ ७६ ॥ गृहिधर्मो मयाऽग्राहि विरतिः पलभक्षणात् । श्रुत्वेति सादरस्तस्मिन्न-
जायत नरेश्वरः ॥ ७७ ॥ विश्वस्तधीस्तद्वचसि प्रपेदे पलवर्जनम् । स देवगुरुतत्त्वाढ्यं स्वीचक्रे धर्ममार्हतम् ॥ ७८ ॥ अथा-
न्यदा प्रतीहाराज्ञया गेहान्तरागता । काचित्समेत्य स्त्री एवं कुमारं प्रत्यवीवदत् ॥ ७९ ॥ अहो सुन्दर सुन्दर्यश्चतस्रः
सन्ति सुन्दराः । रूपश्रीनिर्जितोद्दामरमारम्भारतिप्रभाः ॥ ८० ॥ श्रेष्ठिमन्त्रिक्ष्मापालप्रतीहारप्रियाः प्रियाः । तास्त्वाम-
वेक्ष्य पञ्चेषुप्रहारैर्जर्जराः कृताः ॥ ८१ ॥ मन्मथव्यथया बाढमुद्वेजितवपुर्लताः । यथा स्युः सज्जसर्वाङ्गास्तथा कार्याः
स्वसङ्गमात् ॥ ८२ ॥ ततः किमपि निश्चित्य तत्रोपायं स राजसूः । अत्रापत प्रतीहारी प्रथमे प्रहरे निशः ॥ ८३ ॥ द्वितीये
श्रेष्ठिकान्तैतु तृतीये मन्त्रिवल्लभा । चतुर्थे नृपभार्या तु प्राप्नोतु स्वसमीहितम् ॥ ८४ ॥ एतद्गीरमृतास्वादमेदुरा साथ

१ एतु आगच्छतु ।

दूतिका । ततः समेत्य तासौ सा ज्ञापयामास तद्वचः ॥ ८५ ॥ ततः प्रोषे द्वितीयेऽह्नि राजानं राजनन्दनः । अदृष्टवधद
दृष्ट कुरुषे तत्किमप्यहम् ॥ ८६ ॥ दर्शयामि जघयोग्यमब्रवीन्नृपतिस्ततः । स्वमसमुत्रतुल्योऽसि व्यवहारेषु सत्तमः॥८७॥
धर्मदानात्तुरुष्मासि परमोपकृतिक्षमः । दर्शनीयं निषेध्यं यत्तत्पूर्वं प्रगुणीकुरु ॥ ८८ ॥ अथाज्ञाप्यीकुमारस्तं सम्धायामथ
मद्गृहे । प्रच्छन्नीभूय संस्थेय समेत्यैव मपत्रपान् ॥ ८९ ॥ तथा कृते महीन्द्रेण कुमारेण स्वसन्निधौ । गुप्तं पर्यङ्कमाधाय
तत्र संस्थापितः स च ॥ ९० ॥ अथ केनापि दम्भेन निर्गत्य निजसद्मनः । समाजगाम तद्धाम कुमारस्तामवोचत ॥ ९१ ॥
अत्राप्यशर्मदाः पुंसां परत्र नरकाधदाः । विषया विषसंकाशास्तीव्रापद्विविधायिनः ॥९२॥ भोगा रोगावहाः कस्य देहिनः
स्युर्न सेविताः । जवे परत्र दौर्भाग्यवियोगव्याधिहेतवः ॥ ९३ ॥ नाम्भोनिधिर्यथाम्भोभिः समिद्भिर्न धनञ्जयः । यथा
तृप्तिमिवाप्नोति जीवोऽपि न तथा सुखैः ॥ ९४ ॥ त्रैदशैर्भोगसंयोगैर्जन्तुर्यदि न तुष्यति । तुच्छैर्नृजन्मजैरेतैस्तत्कथं तृप्ति-
मासुयात् ॥९५॥ बहिर्वृत्त्या मैरामुग्धाः प्राणिनां विषयाः स्मृताः । विपाककटुकाः किंतु किंपाकफलवच्च ते ॥९६॥ हेयास्त-
स्मादमी भोगा नोपादेयाः सुधीमताम् । इन्द्रियाणि मनश्चापि नियम्य खलु निश्चलम् ॥ ९७ ॥ ज्ञानदर्शनचारित्राण्येव
मार्गोऽस्ति निर्वृतेः । तद्भेदः सकलस्तेन मत्यपादि तदमतः ॥ ९८ ॥ प्रतीहार्यापि सद्बोधं श्रेष्ठिन्यायातवत्सयो । द्वितीये
यामिनीयामे य(ज)धन्या स्थापिताऽऽदिमा ॥ ९९ ॥ द्वितीयां बोधयामास वैराग्याजन्यागजैः । मलिनीक्रियते किंतु
निर्मलं कुसुमाश्रयोः ॥ १०० ॥ यस्मिन्यन्तेऽत्र भोः सस्थैरनाधारा परंशताः । तदङ्गमञ्जनेन सततं केन धार्यते॥१०१॥

१ प्रतीहारी इति कर्तृपदमध्याहार्यम् । २ कुमारधाम । ३ अतिसुन्दरा ।

कृतानि यान्यसत्कर्माण्युन्मत्तैर्यौवने जनैः । खादृकुर्वन्तीह तान्यन्ते शल्यवद्वार्धकेऽधिकम् ॥ १०२ ॥ सावूबुधदिति श्रुत्वा
मन्त्रिपत्न्याययौ ततः । चक्षुरुद्घटितं तस्या विवेकाख्यं तदुक्तिभिः ॥१०३॥ साऽप्यस्थापि स्वीयपृष्ठे जवाज्जवनिकान्तरे।
तुर्ययामे रमारम्या समागाद्भूपवल्लभा ॥ १०४ ॥ सोन्मुक्तशयनीयेन प्रणता राजसूनुना । ततोऽवग् जीविताधीश किम-
नीदृशमादृतम् ॥ १०५ ॥ समयोऽयं न हि स्वामिन्नभ्युत्थानप्रणामयोः । सौवाङ्गसङ्गपीयूषैर्वपुस्तापमपाकुरु ॥ १०६ ॥
भेकीवाम्भो विना यद्वज्ज्योत्स्ना चन्द्रमसं विना । हंसी मानसनिर्मुक्ता त्वां विना ह्यस्मि दुःखिनी ॥ १०७ ॥ निर्व्रीक-
मिति निर्ह्रीकं जल्पन्तीं तामनारतम् । स नाभिमुखमप्यस्याः पश्यत्यप्रीतवन्मनाक् ॥ १०८ ॥ नैषा पञ्चेषुदर्पोद्यज्ज्वरावे-
शवशंवदा । उपदेशपयःपानमर्हत्यस्मादुपेक्षिता ॥ १०९ ॥ ततः सा स्वमवज्ञातमवेत्येत्यब्रवीद्गिरम् । त्वत्सदृक्षा महादक्षा
न प्रतिज्ञातलोपिनः ॥ ११० ॥ यथा यवासकस्यार्थे मेघः स्याद्वह्निवृष्टिभाक् । सदाक्षिण्योऽप्यभूस्तद्वत्त्वं मदर्थेऽतिनि-
ष्ठुरः ॥ १११ ॥ कुमारः प्रोक्तवानेतां नितान्तं तान्तमानसाम् । दूतीवचः प्रपद्य त्वमाहूताऽसि मयैव हि ॥ ११२ ॥
दुःशैल्यकर्दमालिप्तां तप्तां मनसिजोष्मणा । अहं निर्वापयिष्यामि त्वामहो धर्मवारिणा ॥ ११३ ॥ मामहो सुन्दरात्मीय-
वपुःसङ्गमरङ्गतः । एकशः कुरु संतुष्टां हृदयेच्छानिवर्तनात् ॥ ११४ ॥ तयेत्युक्ते कुमारस्तां स्माह विस्मेरलोचनः । भूत्वा
भूवल्लभस्यास्य वल्लभा प्राणवल्लभा ॥ ११५ ॥ कथमन्याङ्गसाङ्गत्यमीहसे वहसे रतिम् । न हि पङ्काकुलं हंसी
पयः सेवेत कर्हिचित् ॥ ११६ ॥ यद्वहो रतिजं सौख्यं चौरवत्सेव्यते खलु । तदशर्मैव जानीहि परिणामे सुदुःखदम्

१ उन्मुक्तं शयनीयं येन तेन ।

॥ ११७ ॥ इत्युक्तेऽप्यमुमत्सा नो प्रसदामहमात्मनः । कूल्यग्रे यत्पुरा मोर्क तत्कुर्विति भजाथ सा ॥ ११० ॥ शशंस
राजसूरेनामीप्सितं ते कदाऽप्यहो । अन्मन्यसिम नाथ्येव किं मधूकेन फल्गुना ॥ ११९ ॥ कामये कामिनीमन्यां नाहं
सुखोऽपि निश्चया । यथायाति स्वयं रम्ना रतिर्वोऽपि हि पार्वती ॥ १२० ॥ इत्येतदीयसत्त्वस्य सत्तत्त्वं परिभिम्स्य सा ।
वैराग्यात्मङ्गरङ्गेणापूरयत्स्वीयमानसम् ॥ १२१ ॥ पत्नीत्वेनागता साहमत्रूखे च जगिम्यहो । धर्मिर्दकृतयाऽस्यापि तरव-
मस्य कृपां कुरु ॥ १२२ ॥ त्वं कनिष्ठोऽसि मे भ्राता पाता पातकपङ्कतः । गुणैर्गरिष्ठः सुतरामन्तरापत्तिवारक[1] ॥ १२३ ॥
विहिताऽऽशातना यच्चे तस्मात्पातकतः कथम् । मोक्ष्यो मे जषिसा हन्त व्यापत्तापाम्बुदोपमः ॥ १२४ ॥ सपत्नी प्रेयसी
जाता स्वपितुर्दुहितास्म्यहम् । आगते मूलनक्षत्रे प्रेष्यह पितुरन्तिके । धात्रीजनेन सहिता तेन प्रवरभूपतेः ॥ १२५ ॥
मातुलेनाथ मंगाळदेशाज्जिमिनितुर्वरा । स्वकीयश्वशुरस्याहमदाम्यथ घनैर्दिनैः ॥ १२६ ॥ स्वकुक्षोरुनजोदेशसुधाम्भौपम्य-
माश्रयन् । अन्म प्रपेदिर्पोस्त्व जोः शुभोदयभाग्यजाजनम् ॥ १२७ ॥ सीमन्तिन्यः समस्तास्ते पुत्र्या मातऽहितघ्निः । अहं
पुनरनाधारवतीनामभ्यायिनी ॥ १२० ॥ केनाप्यथ प्रयोगेण प्राणांस्त्यक्ष्यामि निश्चितम् । न श्रेयः पापिना प्रायः प्राय-
धारणमीरितम् ॥ १२९ ॥ अज्ञानमरणेनाक्षमनेन तव सुन्दरि । स्वधाम याहि दोपायाः शेषमुक्तस्य क्षणात् ॥ १३० ॥
सर्वपापक्षयोपायं पश्चाद्दर्शयिताऽस्मि ते । सम्प्रत्या तापसोऽआर्ये सम्प्रति प्रतिपाद्यते ॥ १३१ ॥ कुमारानुज्ञया राज्ञी
प्रपेदे स्थानमात्मनः । यथा जाङ्गुलिकादेशवशेन किल जोगिनी ॥ १३२ ॥ तिस्रोऽन्या अपि जग्मुस्ताः स्वीकृत्य नियम

१ पश्चाद्यं छंदितमिति प्रतौ लिखितमस्ति ।

दृढम् । अन्यकान्तोपभोगार्थे सम्यक्त्वावाप्तबुद्ध्यः ॥ १३३ ॥ अथाचख्यौ क्ष्मानाथः कुमारं प्रति सादरम् । अनुज्ञां देहि यद्यामो वयमात्मीयमन्दिरम् ॥ १३४ ॥ इत्युक्ते साकमेतेन कुमारोऽप्यचलल्लघु । प्रणम्य जग्मिवान् धाम क्ष्माभृत्सौधमात्मनः ॥ १३५ ॥ जाते प्रत्यूषसमये दिनेशेऽभ्युदयोन्मुखे । प्रातःकृत्यानि निर्मायाजूहवन्नृपनन्दनम् ॥ १३६ ॥ यावत्तं प्रति वक्त्युर्वीपालस्तत्कालमुज्ज्वलम् । दिश्यपश्यत्स पूर्वस्यां तेजःपुञ्जं समुद्भवम् ॥ १३७ ॥ ततो राज्ञा प्रतीहारं प्रत्यवाचि प्रियं वचः । ज्ञातव्यतिकरः सोऽपि क्षणात् प्रोवाच पार्थिवम् ॥ १३८ ॥ केवलज्ञानवान् कोऽपि मुनीन्द्रः समुपेयिवान् । तद्वन्दनार्थमायान्ति देवास्तद्दीप्तयो ह्यमूः ॥ १३९ ॥ तावद्भूमिपतिस्तेन समया सविवेकधीः । सर्वर्द्ध्या सद्गुरोः पादप्रणामार्थमुपागमत् ॥ १४० ॥ वन्दित्वा विधिना साधूनुपाविशदथाग्रतः । कुमारोऽपि नमस्कृत्य तथैव स्थितिमासदत् ॥ १४१ ॥ गुरुं विज्ञापयामास संयोज्य करपङ्कजम् । महाननुग्रहः स्वामिन् विदधे मयि साम्प्रतम् ॥१४२॥ यदात्मीयमदाय्येतद्दर्शनं शुभदर्शनम् । स्पर्शनं पुण्यराशीनां कार्श्यकारि भवैनसाम् ॥१४३॥ अथोर्वीवासवः प्राह दीक्षादानेन मे द्रुतम् । स्वामिन्ननुगृहाण त्वं तत्त्वं धर्मस्य संदिश ॥१४४॥ गुरुरूचे भवाम्भोधिमध्यमपतदङ्गिनाम् । दीक्षामार्गस्तरीकल्पः प्रोत्तरेयुर्यतोऽञ्जसा ॥ १४५ ॥ इत्युक्ते प्रीतचेतस्कः प्रोत्थितायां च पर्षदि । अवग्रहाद्बहिर्गत्वा साधूनामवनीशिता॥१४६॥ मुकुटाद्यानलङ्कारान् स्वाङ्गादिव सुरद्रुतः । समुत्तार्यार्पयत्पुष्पाणीव क्षितिभृदुत्तमः ॥ १४७ ॥ स्वीयं परिजनं चाह कुमारः स्फारविक्रमः । भूपोऽयं भवतां भावीत्युक्त्वा तं प्राणमत्स्वयम् ॥ १४८ ॥ ज्ञानिनः पार्श्वमागत्य नृपभार्योऽग्रहीद्व्रतम् । प्रायः पत्यनुगामिन्यः स्त्रियो दुश्चरिता अपि ॥ १४९ ॥ अन्या अपि हि धन्यास्तत्पत्न्यः काश्चन संयमम् । जगृहुस्तद्गुरो-

क्षीरे पूरेणोज्झितकल्मषाः ॥ १५० ॥ मुनिनाथोऽपि राजर्षिपर्युपासितपत्कजः । दिनानि कतिचित्तत्र स्थित्वाऽन्यत्र प्रत-
स्थिवान् ॥ १५१ ॥ कुमारनृपतिर्नीत्या प्रजाः सर्वाः प्रपालयन् । जैनं प्रज्ञापयामास धर्मं शर्मार्पकं सताम् ॥ १५२ ॥
गणयन्नात्मना तुल्यं मन्त्रिपुत्रं गुणोज्ज्वलम् । मैत्रीमहाद्रुमस्यैष अभाङ्क फलमुत्तमम् ॥ १५३ ॥ रिपुमर्दनभूमीन्द्रोऽन्यदा
हेलादजूहवत् । पुत्रं श्रीनिलये स्वीये पुरे विमल( श्रीवीर )नामकम् ॥ १५४ ॥ तेनापि विमले राज्यभारः स्फारो निवे-
शितः । स्वयं विज्ञाततत्त्वेन विधिना व्रतमाददे ॥ १५५ ॥ गृहिधर्मं समाराध्य क्रमाद्वीरकुमारराट् । राजर्षे रक्षपालस्य
पार्श्वे दीक्षामुपाददे ॥ १५६ ॥ नानादेशसरःश्रेण्यां भव्यपङ्केरुहावलीः । प्रबोध्य ज्ञानदीधित्या निर्वाणं प्राप पूषवत्
॥ १५७ ॥ एवं पुष्पायुधस्फूर्जद्घोषप्रमथनप्रभुः । श्रीमान् वीरकुमाराख्यः प्रेयः श्रेयः समासदत् ॥ १५८ ॥ अन्यान्यत्रापि
हि भवे परस्त्रीविरतः पुमान् । यशःश्रेयःपदं यायादपायात्परिमुच्यते ॥ १५९ ॥ तारुण्यभावेऽपि विरक्तबुद्ध्या, व्रत
धृतं श्रीविमलेन तुर्यम् । यथा तथा भव्यनराः प्रकामं, प्रशमर्तं भोः प्रतिपालयध्वम् ॥ १६० ॥

॥ इति तुर्यव्रते श्रीवीरकुमारकथा ॥

अथ परिग्रहनिग्रहोपदेशमाह—

जे पावकारीणि परिग्गहाणि, मेल्लंति अच्चंतदुहावहाणि ।
तेसिं कहं हुंति जए सुहाणि, सया भविस्संति महादुहाणि ॥ ४९ ॥

---

१ वीरकुमारे २ श्रीवीरकुमारेण

व्याख्या—ये मनुष्याः पापकारिणः दुष्कृतजनकान् परिग्रहान्, प्राकृतत्वान्नपुंसकनिर्देशः, मीलयन्ति संगृह्णन्ति, परं किंभूताँस्तान् ? अत्यन्तमाधिक्येन दुःखमावहन्ति ये तान् तथाभूतान्, तेषां कथं भवन्ति जगति सौख्यानि ? अपि तु न कथञ्चित्, परिग्रहभाजां किं तु सदा नित्यं महादुःखान्येव स्युः इति । यदुक्तं "संसारमूलमारम्भास्तेषां हेतुः परिग्रहः । तस्मादुपासकः कुर्यादल्पमल्पं परिग्रहम् ॥ १ ॥" इति काव्यतात्पर्यम् ॥ अथ परिग्रहोपरि दृष्टा नव भेदाः, यथा—"धण १ धन्न २ खित्त ३ वत्थु ४ रुप्प ५ सुवन्ने ६ य कुविय ७ परिमाणे । दुपए ८ चउप्पयंमी ९ पन्किमे देसियं सव्वं ॥ १ ॥" इति । "पंचमाणुव्वयस्स इमे पंच अइयारा जाणियव्वा, न समायरियव्वा, तं जहा—धणधन्नाणं पमाणाइक्कमे १, खित्तवत्थूणं २, रुप्पसुवन्नाणं ३, कुप्पसारत्थपिव्वाइयस्स ४, दुपयचउप्पयाणं परिमाणाइक्कमे ५" ॥ अथ परिग्रहे दृष्टान्तः सूच्यते—

अचलपुरेऽभूत्तिलकः श्रेष्ठी तिलकः समृद्धजनराशेः । नानाधान्यान्यसकौ संजग्राहाखिलपुरेषु ॥ १ ॥ गोधूमचणकचीनकमुद्गमुकुष्टातसीतिलादीनि । सार्द्धिकया शस्यानि प्रददे सार्धं च जग्राह ॥ २ ॥ अन्नैरभ्रं जगृहे गृहे वहिर्वा धनैश्च धान्यानि । जीवाजीवैरपि स प्रभूतशस्यानि मीलितवान् ॥ ३ ॥ दुष्कालेऽपि कराले धान्योपात्तैर्घनैर्धनैर्लोकात् । स हि धान्यमूढकालीमवन्धयत् पुनरपि सुकाले ॥ ४ ॥ एवं वर्धितलोभः प्रभूतलाभात्सुभिक्षदुर्भिक्षे । न हि कीटकोटिहिंसामजीगणत्स्वल्पिकामपि सः ॥ ५ ॥ अतिधान्यभरारोपात् खरकरभादीनपीडयद्गाढम् । तद्वद्बुधा नवधापरिग्रहाग्रहपरः समभूत् ॥ ६ ॥ कोऽप्यन्यदा तदग्रे वदन्निमित्तज्ञ ऐपमः समये । भावि महादुर्भिक्षं श्रेष्ठी तद्वाक्यमाकर्ण्य ॥ ७ ॥ सर्व-

कृष्यबलेनागृह्णान्यानि सर्वजेतानि । दूरादप्याकृष्य धनं प्रगुणकर्णैर्जैरितवान् कोशान् ॥ ८ ॥ तदजावे स्वगृहानप्य-मीजरह्मोज्वलोल्लज(प)मनस्कः । कौशिक इवान्धकारं दुर्जिताागमनमैच्छत्सः ॥ ९ ॥ तावत्प्रावृट्समयात्मागेवावर्षदम्बुचु-म्बुरः । धाराशरप्रपातैर्हृदयं प्रविदारयन्नस्य ॥ १० ॥ अहह मम मुक्तामप्रमुखानानि प्रणश्य यास्यन्ति । कथमेष घनो दुष्टः पापिष्ठः कष्टकृन्मनसः ॥११॥ किं कुर्वे कस्यैतद्ब्रूमीत्यादि स्वचेतसि ध्यायन् । प्रापाकस्मात्क्षिपन पापात्मा हृदयसस्फोटात् ॥ १२ ॥ नरकप्रथमावन्यामज्ञानोपहतधीरसावगमत् । एवमसंतुष्टहृदामस्ति सुखं नैव कुत्रापि ॥ १३ ॥ ये निष्परि-ग्रहाः स्युः संतोषसुधारसेन संसिक्ताः । ते स्युर्मुक्तिनितम्बिन्युरःस्थलाखण्डलौ हारः ॥ १४ ॥

॥ इति परिग्रहोपरि दृष्टान्तः ॥

एवं दिग्व्रतजोगोपजोगानर्थदण्डसाम्यदेशावकाशकपौषधातिथिसंविभागव्रतानि सातिचाराणि सदृष्टान्तान्यन्यूनानि स्वयमुदारधीभिरित्यर्थः ॥

अथ पञ्चविषयाणामुपरि पृथक् पृथक् पञ्च काव्यानि सदृष्टान्तानि प्रपञ्चयन्नाह । तेष्वाद्यं काव्यमाह—

सद्दं सुणित्ता महुरं अणिट्ठं, करिज्ज चित्तं न हु तुट्ठरुट्ठं ।

रसम्मि गीयस्स सया सरंगो, अकालमच्चुं लहई कुरंगो ॥ ४७ ॥

व्याख्या—शब्दं रवं श्रुत्वा निशम्य मधुरं मिष्टं तथा अनिष्टं कर्णकटुकं कुर्वीत चित्तं मनः सुमनाः, नेति निषेधे, हुरित्यवधारणे, तुष्टं च रुष्टं च तुष्टरुष्टं, एतावता शब्दं मधुरमथ कटुकं वा श्रुत्वा तुष्टमथवा रुष्टं मनो न कुर्यादिति

तत्त्वं, साम्यावस्थया स्थेयं रागद्वेषौ भवनिबन्धनौ तौ वर्जयेदिति । पदद्वयेन दृष्टान्तमाह—गीतस्य रसे सदा सरङ्गः सहर्षः कुरङ्गो मृगः स वराकः स्फुटमकालेऽसमये एव मृत्युं पञ्चत्वं लभते, यदि तस्य मृगस्य तादृग्विधः शब्दसमाकर्णनरसो न स्यात्तर्ह्यकालमृत्युं कथमेष आसादयेत् ? परं श्रोत्रेन्द्रियं दुर्निवारप्रसरं स्यादिति भावार्थः ॥ अथ श्रोत्रेन्द्रियदोषोपरि दृष्टान्तमाह—

अत्रैव वसन्तपुरे परैः परैरप्यनाप्तविनिवेशे । यत्र वसन्ति वसन्ताः[१] सन्तः प्रसरन्महामोदाः ॥ १ ॥ तत्रास्ते भनिरस्तेऽर्थिलोककोकप्रमोदसन्दोहः । रविरिव विकसद्धामा नश्यच्छ्यामास्यताश्यामः ॥२॥ धनद इव यः समृद्ध्या धनदो धनदोऽर्थिनामिहात्यर्थम् । भार्या तस्य सुभद्रा स्वकीयपत्युः स्फुरद्भद्रा ॥ ३ ॥ वाणिज्यार्थं देशान्तरं प्रतस्थेऽन्यदा स धनदाख्यः । लात्वाऽगण्यं पण्यप्राग्भारं भूरिलाभकृते ॥ ४ ॥ अथ तत्रैव कुतोऽप्यागाद्रागानुकृतकिन्नरप्रकरः । यः पुष्पशालनाम्ना प्रसिद्धिभाग्गायनप्रवरः ॥ ५ ॥ तद्गीतगानपानप्रवणाः प्रगुणा बभूवुरिह लोकाः । यन्मधुरध्वनिपुरतः पिकोऽपि को रागभृच्चञ्चुः ॥ ६ ॥ गुरुरिव माधुर्यरसात् प्रजाभिरिव मक्षिकाभिराकीर्णः । स कदाचिद्गीतज्ञो गायन् गीतानि राजपथे ॥७॥ ददृशेऽथ सुभद्रायाश्चेटीभिश्चटुलवाक्यपेटीभिः । तन्मधुरध्वनिलुब्धाः कुरङ्ग्य इव तस्थुरेकाग्राः ॥ ८ ॥ वेलाव्यतिक्रमे सति महति गतास्ताः स्वमोक ईश्वर्या । निर्भर्त्सितास्ततस्ताः परुषाक्षरया गिरा बाढम् ॥ ९ ॥ ऊचे ताभिः स्वामिनि मैवं कुरु रोषपोषमस्मासु । स्थितमेतावत्कालं श्रोत्रपुटापेयगेयरसिकतया ॥ १० ॥ यद्येवं तद्गेयं तदा मदीयश्रुतिद्वयातिथि-

१ वसन्तर्तवः.

वाम् । नेतव्य युष्मानिर्यथा तथा तस्य सांनिध्यात् ॥ ११ ॥ प्रतिपेदेऽवसानिस्ततोऽन्यदा देवतामहार्चेत्ये । यात्रो-
त्सवे प्रवृत्ते मिलिते नारीनरप्रकरे ॥ १२ ॥ प्रारब्धे मधुरध्वनिगाने पानेऽमृतस्य कर्णपुटे । तस्मिन्नेव सुजन्त्रा सभासा
तं विलोकयितुम् ॥ १३ ॥ तायजीतसमाप्तौ स पुष्पशाखः सुखेन सुष्वाप । सद्यो विसृष्टलोकः प्रपद्य चैत्यस्य पृष्ठ-
तटम् ॥ १४ ॥ दासीनिरदर्शि दृशा तस्या यस्यातिकुत्सितं रूपम् । तज्जीवितमपि धिगिदं धाविन्या भूत्कृतं प्रति
सम् ॥ १५ ॥ गीतिरपि निन्दनीया दन्तुरवदनस्य कृष्णवपुषश्च । रूपविमुखेन हि किं क्रियते गुणगौरवेणास्य ॥ १६ ॥
इति निन्दन्ती सुदती जगाम धाम स्वकीयमाश्वेपा । सौजन्दीयं विलसितमस्मै केनापि किल कथितम् ॥ १७ ॥ रुष्टोऽथ
पुष्पशाखः कथं निकृष्टा तथाऽपि पापिष्ठा । मामिति निन्दति निर्हेतुका हि मद्वैरिणी जज्ञे ॥ १८ ॥ न हि मर्मज्ञं वन्दि-
नमथो कर्यं शस्त्रपाणिन चापि । वैद्यं च सूपकारं प्रकोपयेज्ज्ञानवान् स्वगुरुम् ॥ १९ ॥ कस्मादपि तदुपायादपायमस्याः
करोमि वृद्धाऽपि । देशान्तरसंप्रस्थितमेयेत्य तस्या वियोद्धारम् ॥ २० ॥ तत्सन्नासप्रमसायसौमनस्याउपेत्य सामर्थैः ।
स यथा हि सार्थवाहश्चचाल विषयान्तरं निलयात् ॥ २१ ॥ धनमर्जित मप्राप्तं यथाऽऽप पृथ्वीपतेश्च सन्मानम् । प्रस्थाय
ततः कुशलेनात्मीयोद्दामधामायात् ॥ २२ ॥ इत्यादि सकलमेतच्चरित मविकल्पितस्वगीतगतम् । निर्माय रजनिसमये
सगो मद्दामञ्जुलध्वनिना ॥ २३ ॥ कलगीतमनेन तथा गीतं स्फीतं यथा सुजन्त्रायाः । विरहानलः प्रकामं सर्वाङ्गे
दीप्ततां प्रापत् ॥ २४ ॥ मोटयति निजं देहं क्षिपे चापत्यमाकलय्याशु । रागोरगविषलहरीव्याप्ता प्रासाऽतितिपमद-
शाम् ॥ २५ ॥ सौधोपरिस्थमप्यात्मान न्यूवर्तिनं हि सा मेने । कः कलयति वैकल्यं न कलावानपि हि कामार्तः ॥ २६ ॥

गेये रसप्रकर्षायाते ज्ञाते स्वकान्तवृत्तान्ते । साऽऽकारो निजपादं दत्वा भूमौ पपात रयात् ॥ २७ ॥ तस्मात्महारमूर्ध्नो-वशान्मनोजन्मरागज्वरविवशा । मरणं शरणीचक्रे वक्रे दैवे कुतः सौख्यम् ॥ २८ ॥ कृत्वेति वैरनिर्यातनं घनं पुष्पशालको मुमुदे । अन्यत्र जगाम पुरे निर्वाहं गीतिभी रचयन् ॥ २९ ॥ इत्थं श्रोत्रेन्द्रियवशगता सा सुभद्राऽऽस्तभद्रा, संप्राप्ताऽस्तं धनपरिजनप्राणनाथप्रमुक्ता । दुःखिन्यासीदिह परभवेऽप्युग्रकष्टैकपात्रं, भाविन्येवं श्रवणजरसः प्राणिनां निग्रहार्हः ॥ ३० ॥

॥ इति श्रोत्रेन्द्रियानिग्रहे सुभद्राकथा ॥

पासित्तु रूवं रमणीण रम्मं, मणम्मि कुज्जा न कयाऽवि पिम्मं ।
पईवमज्झे पडई पयंगो, रूवाणुरत्तो हवई अणंगो ॥ ४८ ॥

व्याख्या—दृष्ट्वा रमणीनां रूपं रम्यं मनसि कुर्यात् न कदाऽपि प्रेम रागसम्बन्धं । दृष्टान्तं स्पष्टयति—प्रदीपमध्ये पतति पतङ्गः, स च रूपानुरक्तः सन् दृष्टिदोषेण भवत्यनङ्गः पतङ्गः स्वकीयकायं वह्नौ जुहोति यथा तथैव कामुकश्चक्षुर्विषयाक्रान्तः प्राणानपि तृणीकुरुते ॥ अत्रार्थे ज्ञातमुच्यते—

आस्तेऽत्र काञ्चनपुरं यत्काञ्चनभूषणान्वितजनौघम् । कांचन[1] शोभां धत्ते, तामसमा ( मां ) यातिनिर्वचना ॥ १ ॥ श्वेतोद्यद्विदृश्यमानकलशं सन्नालीकमलं प्रफुल्लकमलं सद्राजहंसाश्रितम्, सचक्रप्रियकारकं समकरं प्रोद्यल्लताविद्रुमम् ।

१ काञ्चित्

तूष्णाञ्जनैः संकुल, यद्वत्ते सरसस्तुलामनुकर्तुं चिन्ते अभा ( था ) सक्ति नो ॥ २ ॥ तत्र श्रीनिलयाख्यः श्रेष्ठी देवोऽपि तद्गृहे कान्ता । धरिधर्ति यशोभद्रा निद्रानिर्मुक्तपद्माक्षी ॥ ३ ॥ समजनि तयोः सविनयस्तनयः कुनयप्रवृत्तिरिक्तमनाः । सप्तलक्षणलक्षितवतनुरवनुरिषोद्दामरूपश्रीः ॥ ४ ॥ दक्षणविज्ञैः भोषे स्त्रीलोलः प्रायशः शिशुर्जनिता । सोऽपि हि पश्यति वनिता या यासासु मत्तारिवदग् ॥ ५ ॥ लोकैर्लोलाक्षोऽयं तस्मादाख्यायि दुर्धरा जनगीः । यो यादृक्स्य कुरुते कर्म तथा प्राप्नुयाभाम ॥ ६ ॥ सङ्क्रान्तस्तारुण्यं दृष्ट्वा यौवनवतीः सुरूपवतीः । स्वीयोचितस्वाऽऽलिङ्गति विगोपयत्यपि विस्मयति ॥ ७ ॥ पितृदत्तामिति शिक्षामेष विषानुकृतिधारिणीं मनुते । कुरुते लोलाक्षत्वं सत्यं सत्यं त्यजन् दूरे ॥ ८ ॥ दुष्टाचरितैरेतैरेष जनोपेन ताड्यते पशुवत् । चत्रुस्यतेऽतिनिविषैर्निगडैर्विनियम्यते मनुशः ॥ ९ ॥ पितृदाक्षिण्यान्मुमुचे तथापि दुर्लक्ष्यं क्षणं नोग्गत् । न हि शिक्षितोऽपि मार्दं कपिर्वपुष्पफलत्तां त्यजति ॥ १० ॥ नटविटगोष्ठ्यां विषमश्रीपीन्मगधदेशजा नारीः । रूपरमाणिर्वर्याः सोऽभूत्तासां विहारवान् ॥ ११ ॥ याभिज्यस्य छलतः प्रज्वलमावाय पैतृकं द्रविणम् । सोऽचालीत् प्रति मगधं लात्वा तत्रापर्यं तस्थौ ॥ १२ ॥ व्यवसाये वसति मतिर्न हि वसुमध्यमधीः परिस्फुरति । ध्यायति मनसि सुरूपामेकां सीमन्तिनीमेव ॥ १३ ॥ दृष्टाऽन्यदा समदनामुद्दामवयोऽभिरामरुचिरात्रम् । पस्पर्श करेण मत्ताद्योलात्वेन लोलाक्षः ॥ १४ ॥ दृष्टो दुष्टोऽयमिति क्षितिपतिपुरुषैः क्षणेन बद्धोऽसौ । अगृहे सकलं द्रव्यं कव्यमिव स्वरितमेव खगैः ॥ १५ ॥ पुरतोऽथ नीयमानः क्षितीशितुस्तस्य जनकमित्रेण । कुमनामश्रेष्ठिवरेणासाबुपलक्ष्याश्वके ॥ १६ ॥ पुष्कलधनं च दत्त्वा व्यमोचि तत्रिग्रहात्त्वयात्तेन । धर्मेणेव हि जन्तुर्दुर्वारापारपापजपात् ॥ १७ ॥

आनिन्ये निजसद्मनि कियन्तमपि कालमेष तत्रास्थात् । लोलाक्षतया लुब्धस्तत्पत्न्यां धनवतीनाम्न्याम् ॥ १८ ॥
दुग्धेनापि हि धौतः किं काकः श्वेततां धत्ते ॥ १९ ॥ यस्य किल वस्त्रग्रन्थिनिरुद्धः कथञ्चिदङ्गारकोऽपि किं तिष्ठेत् । दुग्धेनापि हि धौतः किं काकः श्वेततां धत्ते ॥ १९ ॥ यस्य किल
यः स्वभावः स हि तं प्राणात्ययेऽपि न त्यजति । हितमहितमपि न वेत्ति च पिहितः पापैः पुराचरितैः ॥ २० ॥ तद्व्य-
तिकरमवगत्य श्रेष्ठी वैराग्यमाप निष्पापः । सर्वमपास्य गृहस्वं स्वकीयमस्वीयमिव तरसा ॥ २१ ॥ कदलीचक्रे दीक्षाम-
क्षामस्थामवान् क्रियातपसोः । तद्गृहगृहिणीभोक्ता लोलाक्षः समजनि प्रायः ॥ २२ ॥ सुरसुन्दरीति राज्ञी दृष्टा दृग्भ्या-
मनेन रूपवती । तस्यामनुरक्तमना मनाग् न लेभे रतिं क्वापि ॥ २३ ॥ श्यामे श्यामासमये प्रसृते भुवि विस्तृते तमः-
पूरे । राज्ञीसद्म प्रविशन् विवशः स दुराशयः स्वैरम् ॥ २४ ॥ विद्यासाधकपुंसा केनापि ततोऽन्तराल एव धृतः ।
अशरण्येऽरण्येऽसावनायि न हि रागिणां सौख्यम् ॥ २५ ॥ देवीबलिदानकृते तदीयदेहामिषं स चिच्छेद । नारकतुल्यं
दुःखं समन्वभूत्तत्र लोलाक्षः ॥ २६ ॥ विद्यासाधकपुरुषं परुषं प्रत्याह मम समाध्यर्थम् । भो दर्शयैकवारं भार्यां भूमी-
पतेर्वर्याम् ॥ २७ ॥ पश्चादपहर जीवितमपि दृष्टे दृष्टिसौख्यदे रूपे । इत्यादिवपुर्मानसदुःखार्त्तः कालमनयदसौ ॥ २८ ॥
तावत्कश्चित्काञ्चनपुराधिवासी पितुस्तदीयस्य । शैशवमित्रं भुवनोत्तमसार्थेशः समायातः ॥ २९ ॥ कृत्वा वाणिज्यमयं
विनिवृत्तस्तत्प्रदेशभूभागे । विश्राम्यन् दैववशाल्लोलाक्षमवेदय निःसितवान् ॥ ३० ॥ समभूनिर्भय एष स्वकीयवृत्ता-
न्तमाख्यदेतस्य । तेनापि वपुःसारा स्फाराऽस्य हि कारयामासे ॥ ३१ ॥ सज्जीकृत्य व्यमुचत्सुहृदः खलु कस्य नो हिताय
स्युः । भूयोऽपि भूपपत्नीरागादागान्नृपावासम् ॥ ३२ ॥ नवले विलक्ष्यवदनस्तद्दर्शनमलभमान एवायम् । निजधाम काम-

मोहितमतिर्न्यगादीति धनधस्या ॥ ३३ ॥ पलायन्ति दिनानि क स्थितमेषोऽपि कूटमाचष्ट । वस्तुव्यवसायवशादेयम्य
त्वेजियानस्मि ॥ ३४ ॥ निःपुण्य इव निधान रतिसुन्दर्याः स दर्शनं लेभे । संप्राप्य राजभुवनं कथमपि जाग्यान्धुव-
यवशात् ॥ ३५ ॥ उन्मत्त इवेतो प्रति धावन् धार्ष्ट्येन सुष्ठु दुष्टमनाः । विधृतो राजन्यजनैर्नृपाज्ञया च धिक्कृत्ययाञ्चक्रे ॥ ३६ ॥
रोषारुणेक्षणेन नृपेण च्चमिन्तुजा समादिष्टम् । उदलम्बयत बहिर्वटशाखायां स्तेनवेदयमिमम् ॥ ३७ ॥ तैरपि तथैव चक्रे
मृत इति मत्वाऽथ तैः परित्यक्तः । त्रुटितोरुकण्ठपाशः पुण्यवशात्प्राप चैतन्यम् ॥ ३८ ॥ प्रपलाय्य जवादगमञ्-
नवत्याः सद्म पद्ममिव मधुकृत् । सञ्चीचक्रे स तया तदागासकथिततया ॥ ३९ ॥ केयलिनमन्यदाऽऽगतमयेत्य नृपोऽ
नियन्दितुमथागात् । पौरैः सहसा सा किल लोलाक्षोऽप्येष तत्रागात् ॥ ४० ॥ ॥ चटुलाक्षत्वात् पश्यन् प्रफुल्लदृष्ट्या
मुखं नृपतिपत्न्याः । क्षणमप्यायुपपदसौ राज्ञा निःसारयाञ्चक्रे ॥ ४१ ॥ निर्गत्याथ काश्चित्कमनीया कामिनी स्पृशन्
सधघाम् । पत्या शक्त्या प्रहतः पञ्चत्व प्राप्य पापमनाः ॥ ४२ ॥ रौद्रध्यानान्नरके तृतीयके नारकः प्रकृष्टायुः । समजनि
ततोऽप्यनन्तं भवं भ्रमिष्यत्यकृतपुण्य ॥ ४३ ॥ केवलिना तद्वृत्ते स्पर्शनविषये निवेदिते राज्ञः । वैराग्यादग्राहि क्षितिपेन
जिनोदिता दीक्षा ॥ ४४ ॥ कृतकर्मक्षय एष प्राप्तोऽज्ज्वलकेवलः शिवमवाप । इत्थं चक्षुर्दोषः कस्य न दुःखस्य पोषाय ॥ ४५ ॥

॥ इति चक्षुर्दोषविषये लोलाक्षकथा ॥

अथ रसनेन्द्रियव्याप्तिस्त्याज्येत्यत्रार्थे काव्यमाह—

---

१ आर सगाम

जलम्मि मीणो रसणारसेणं, विमोहिउं नो गहिउं जणेणं ।
पावाउ पावेइ स तालुवेहं, रसाणुराउं इय दुरकगेहं ॥ ४ए ॥

व्याख्या— जले सलिले मीनो मकरो रसनारसेन जिह्वारसेन विमोहितो रञ्जितमनस्कः, नो गृहीतो जनेन, एतावता निर्जयः पापात् पातकतो रसज्ञादोषोद्भवात् आप्नोति स तालुनो वेधस्तालुवेधस्तं रसस्य रसे वाऽनुरागः स्नेहः कृतः सन् इत्यमुना प्रकारेण दुःखगृहमसातहेतुः स्यात् । एतावता रसनेन्द्रियं रसलोलुप्तं न विधातव्यमिति काव्यार्थः ॥ अत्रार्थेऽप्युदाहरणमुच्यते—

अतिपृथुला मिथिलाख्या नगरी शिथिलाऽस्ति या न दौस्थ्येन । तस्यां बभूव राजा विमलयशाश्चन्द्रविमलयशाः ॥ १ ॥ तत्परिसरप्रदेशोद्याने ध्याने निविष्टशिष्टमनाः । समवसृतः केवलभृगणभृगणपरिकरेण सह ॥ २ ॥ तत्पदकमलप्रणतिप्रह्वमना नृधनाग्रिमः प्रययौ । नत्वा स्थित्वा पुरतस्तत्कदितं धर्ममश्रौषीत् ॥ ३ ॥ अक्षाणां रसनं हि दुर्जयमथो दुष्कर्मणामष्टके, दुष्टं मोहनमोहनीयमुदितं ब्रह्मव्रतेषु व्रतम् । गुप्तिष्वादिमगुप्तिरेव विषमा जेतुं जगद्देहिनां, चत्वारोऽपि हि दुर्जया निगदिता एते जिनस्वामिना ॥ ४ ॥ ऊचे च महीमघवा भगवन् शेषेन्द्रियेभ्य एतेभ्यः । कस्माद्दुर्जयमुक्तं युक्तं विनिवेदयाम इदम् ॥ ५ ॥ क्षुत्परिपीडितजन्तोर्न मधुरगेयानि नापि रूपाणि । न मनोमोहनमोहनमपि चेतस्तोषपोषकृते ॥ ६ ॥ न हि चन्दनप्रलेपनमङ्गे तुष्टे स्थितिं न चावासे । किञ्चित्सुखायते खलु न हि क्षुधार्त्तस्य सद्वस्तु ॥ ७ ॥ मूले यथाम्बुसिक्तस्तरुः फलत्यतुलपुष्पसंभारः । मूले शुष्यति शुष्यत्फलप्रसूनः स एव स्यात् ॥ ८ ॥ यतः—जहा दवग्गी

पञ्चरिंधवे षणे, समारुहं नोषसमं उवेइ । पविंदियग्गी विपगामजोइष्णो, न बंजयारिस्स हियाय कस्सई ॥ ९ ॥ एव-
मिन्द्रियतरुरपि रसने सरसाऽशनैस्वरां ( षडु ) प्रीते । बहुनिर्विकारकुसुमैः पुष्पति पापैः फलत्यपि च ॥ १० ॥
तस्मादजय्यमिदमेव हि देहे देहिनां रसननाम । अस्मिन् विजिते शेषाण्यप्यक्षाणीह विजितानि ॥ ११ ॥ अत्रोदा-
हरणं शृणु सद्यः कृत्याऽवधानमवनीश । नृपक्षयनाम्नि नगरे नृपतिरभूनिष्ठ शित्रकर्मा ॥ १२ ॥ द्वे पत्न्यौ तस्य स्वः
सुजसुन्दर्यसुजसुन्दरीनाम्न्यौ । नामोचितपरिणामे अजाते द्वौ सुतावनयोः ॥ १३ ॥ प्रथमाङ्गजोऽस्ति विबुधः सुधीश्च
सरलः कृतज्ञतोपेतः । अन्यस्याश्चाङ्गरुहो जडो देवाऽपि मतिविकलः ॥ १४ ॥ स च समभूद्रसलोलः खाद्याखाद्या-
दिजक्षणमग्नः । पेयापेयं गणयति न हि चाहिरटति मद्युग्धश्च ॥ १५ ॥ अत्यन्तं रसगार्ध्याद्विषमामयजालजं वपुरमुष्य ।
वीक्ष्याशुराव वैद्यानेकजानकः क्ष्माधीशः । ॥ १६ ॥ इत्यावक्शुर्भिषजः करोति यद्येष लङ्घनानि तदा । रोगोद्वेगः सक-
लस्तूर्णं भवयं प्रयात्येव ॥ १७ ॥ रसलोलुपतादोषादाकल्पोऽनस्य एष संपन्नः । रसलोल इति ख्यातिर्लोककृता सत्यतां
नीता ॥ १८ ॥ इत्युक्तेऽपि हि वैद्यैर्न विधत्ते लङ्घनानि चैष पुनः । वपृधे महोपतापस्तृष्णाज्वर इव निदाघर्तौ ॥ १९ ॥
प्रातुर्वचसाऽन्येद्युर्निरन्न एवैष लङ्घनायास्थात् । तं प्रेक्ष्य सपरुखाद्यकमोदककूरादि भुञ्जानम् ॥ २० ॥ चिन्तयति धिग्धि-
गेनं स्वकीयजठरमपूरणव्यग्रम् । यो दुष्टनिकृष्टात्मा ज्वोपकारं नापरं सहते ॥ २१ ॥ जानाति स्वयमेव हि भुङ्क्ते मधु-
राश्चमोदकाद्यपि च । परमेष सपत्नीजो भ्राता हितकारणं न हि मे ॥ २२ ॥ निश्चित्यैवं चेतसि दुष्टमनाः पिष्ट झटिति
रसलोलः । रे मामनार्य चोभ्यान्निवार्य मिष्टान्नमत्सीह ॥ २३ ॥ क्रोधविरोधेनान्धीभूतः प्रेतावतारमिव लब्ध्वा ।

इत्युक्त्वा स दधाने शस्त्रकरस्तस्य हननार्थम् ॥ २४ ॥ तस्मैव तत्प्रहारादपसृत्य सुरेन संस्थितो जीवन् । विबुधो विबुधो धर्मे वैराग्यात्संयममधत्त ॥ २५ ॥ चरणाचरणात् क्षीणाखिलकुकर्मा शमामृताधारः । सोऽहमवाप्तोज्ज्वलतरकेवलबोधः समेतोऽस्मि ॥ २६ ॥ विमलयशःक्षितिपतिना पृष्टा स्वच्छाशयादयो निदधे । भगवन् विकलोरुधिया विकलेन किमतः परं प्रापि ॥ २७ ॥ गुरुराह धवलदन्तद्युत्या श्वेता दिशस्तदा कुर्वन् । राजसर्गं स्वयं भुञ्जन् धर्त्ताऽभूतेरभवत् ॥ २८ ॥ स्निग्धमधुराशनोक्ता रसलाम्पट्यादसौ निकृष्टात्मा । वनदव इव न निर्मोक्ता कस्याप्यश्नाति मांसमपि ॥ २९ ॥ विहिते पलस्य पाकेऽन्यदा मुदा तस्य सूपकारेण । मार्जार्याऽपार्थतया सकलं जंगलं व्यधायि गले ॥ ३० ॥ भीतेनं तेनाश्रो क्वापि परासोः शिशोः पलमलायि । संस्कृत्य भुक्तिसमये परिवेषितमवनिनाथस्य ॥ ३१ ॥ तद्रसनात् क्षणात् स क्रूराध्यवसायवासितः समभूत् । प्रतिदिनमेकैकं शिशुमशनस्थानीयमसृजदसौ ॥ ३२ ॥ एतदकार्याचरणादुपद्रुतस्तेन पूर्जनः सकलः । मन्त्रिण आलोच्य मिथः क्षितिपं बद्ध्वा वनान्तरं निन्युः ॥ ३३ ॥ असावधुरनुजोऽथ क्षितीशभावे नियोजयाञ्चक्रे । मांसाशनतृष्णाजागन्यो रक्षोवदाचरति ॥ ३४ ॥ भुङ्क्ते मनुष्यपललं न कलङ्कं गणयति स्वकीयकुले । स कदाचिन्निक्षार्जकलुब्धः खलु चंक्रमीति वने ॥ ३५ ॥ केनापि किरातेन क्रुद्धेनाकर्णकृष्टबाणेन । भिन्नो मर्मणि मरणं शरणं चक्रेऽतिगुरुकर्मा ॥ ३६ ॥ मृत्वा सप्तमनरकावन्यामशानकारकः सुतराम् । गत्वा भवं भ्रमिष्यति दुरन्तमालान्तिकमनन्तम् ॥ ३७ ॥ इत्याकर्ण्य सकर्णः केवलिमुखकमलनिर्गतां वाणीम् । विमलयशाः प्रव्रज्य प्राप्तज्ञानो जगाम शिवम् ॥ ३८ ॥

॥ इति रसनेन्द्रियानिग्रहे रसलोलकथानकम् ॥

अथ तुर्यविषयसेवनप्रतिषेधकाव्यमाह—

गईदकुंजरथगधलुद्धो, इंदिंदिरो घाणरसेण गिद्धो ।
हहा मुहा मच्चुमुहं उवेई, को गधगिद्धिं हियए वहेई ॥ ५० ॥

व्याख्या—गजेन्द्रस्य कुम्भस्थले तस्य गन्धस्तत्र लुब्धः इन्दिन्दिरो भ्रमरो घ्राणरसेन नासिकया गन्धाघ्राणरसेन गृद्ध सन् हहा इति खेदे मुधा वृथैव मृत्युमुखं मरणमुखमुपैति प्राप्नोति, एतच्छ्रुत्वा कः सकर्णः पुमान् गन्धगार्ध्यं सुरभिगन्धगार्ध्यं सद्गन्धलोलुपत्वं हृदये वहेदिति काव्यार्थः ॥

अथतदाघ्राणे यो दोषस्तमुद्दिश्य निदर्शनमाह—

अत्रैव वसन्तपुरे नरसिंहाख्यः क्षितीश्वरः समभूत् । तस्य ज्येष्ठगुणाढ्यस्तनयो ज्येष्ठोऽस्ति नरवर्मा ॥ १ ॥ परिमलमाप्य[1] मनोज्ञं स पैकवारं हि जिघ्रति प्रसभम् । न हि वारितोऽपि तिष्ठति स मातृपित्रादिभिरपीतः ॥ २ ॥ नान्येषां विषयाणां व्यासक्तिस्तस्यास्ति तादृशी यधिका । यादृग्नासायाः सौरभ्यलोलाधिकत्वमहो ॥ ३ ॥ तस्यान्यदा सपत्नी माता निजतनयराज्यतृष्णार्ता । मञ्जूषायामुज्ज्वलविषपुटिकामक्षिपत् कुधिया ॥ ४ ॥ तस्यान्यदा निदाघे नदीजले दीव्यतः प्रमोदार्थम् । उपरितनेऽम्भःपूरे दूरे गत्वा व्यमुच्यदसौ ॥ ५ ॥ तत्रायया तरन्ती यत्रास्ते राजनन्दनः स तरन् । नृतनयस्तन्निमज्ज्य कुतुकात्तेनाम सा जगृहे ॥ ६ ॥ दृष्ट्वा हृष्टेन हृदा तामुन्मुद्रैव गन्धमादत्ते । तस्याघ्राणवशेन दर्पेण

1 माप्येति प्रयोगश्चिन्त्यः गन्धं आप्येति साधु

मुक्तस्ततः प्राणैः॥ ७॥ तुष्टा हृदये दुष्टा पापिष्ठा सा सपत्निका जननी। निजनन्दनराजपदप्राप्त्या व्याप्ता सुखश्रेण्या ॥ ८ ॥ स यथा गन्धाघ्राणप्रबलघ्राणः परासुरत्रासीत्। तद्वदिहान्योऽपि जनो मुत्कलनासेन्द्रियोऽत्यसुखभाक् स्यात् ॥ ९ ॥ एवमवेत्य जना भो घ्राणेन्द्रियनिग्रहं कुरुत येन। स्यादत्र परत्रापि हि सर्वत्र च शर्मसंचारः ॥ १० ॥

॥ इति घ्राणदोषे नरवर्मकथा ॥

अथ स्पर्शनेन्द्रियव्याप्तिदोषमाह—

फासिंदियं जो न हु निग्गहेई, सो बंधणं मुद्धमई लहेई।
दप्पुद्धरंगो जह सो करिंदो, खिवेइ अप्पं वसणम्मि मंदो ॥ ५१ ॥

व्याख्या—स्पर्शनोपलक्षितमिन्द्रियं स्पर्शनेन्द्रियं निजं वपुः यः पुमान्न निगृह्णीयात् हुरित्यवधारणे स बन्धनं मुग्धमतिर्लभेत। दृष्टान्तमाह—दर्पेणोद्धुरमङ्गं यस्य स तादृक् सन् यथा करीन्द्रो हस्ती क्षिपति आत्मानं व्यसने महासङ्कटे मन्दो विज्ञानविकलः स्पर्शनेन्द्रियस्य यो निग्रहं न कुर्वीत स स्तम्बेरमवत् आत्मानं दुर्गरोधबन्धनादिदुःखे पातयतीति काव्यार्थः ॥

अथैतदर्थसमर्थकं दृष्टान्तमाह—

अस्तीह स्वस्तीहापरनरनारीसहस्ररमणीयम्। नृमणीयन्ते यत्रानेके सहिता विवेकेन ॥ १ ॥ तत्र श्रीजितशत्रुः शत्रु-

१ कल्याणेच्छातत्परनरनारीणां सहस्रै रमणीयम्. २ रमणीयं नाम नगरम्.

प्रमथानिमानवनवह्निः । वसुधाधीशः प्राज्यं राज्यं कुरुते सुखेनैव ॥ २ ॥ सत्कुसुममालिकाधरसुकुमारा शशधरार्ध-
वदनाख्या । सुकुमारिकेति राज्ञी तस्यासीद्रूपसंपन्ना ॥ ३ ॥ रमयेव रमारमणः स्मर इव रत्या शचीवरः शच्या । सार्धं
स्वकीयपत्न्या विलास सुखान्यसङ्ख्यानि ॥ ४ ॥ सर्वातिशायिनीच्छा तस्याः सुकुमारदेहसंस्पर्शे । तन्तुरज्जुवद्गाढं गाढं
प्रेमानुबन्धेन ॥ ५ ॥ क्षणमपि तया विनाऽसौ स्थातुं शक्नोति न बहिरन्तर्वा । किं क्वापि जलविहीनो मीनो मुदमाव-
हेद्दिवसे ॥ ६ ॥ अत्यन्ततदासक्त्या मुक्ता चिन्ता ह्यनेन राज्यस्य । कस्य न विषयव्यासक्तिर्मतिवैकल्याय जायेत ॥ ७ ॥
सचिवैरेकत्र कृतालोचैरौचित्यवस्तुनिष्णातैः । सवधूकः पृथिवीशः पार्श्वेषु ह्यमोचि वने ॥ ८ ॥ तत्तनयाय सकला
राज्यसमृद्धिः प्रमोदतः प्रददे । निजसन्ततिमिव मोदात् प्रतिपादयति प्रजां सोऽपि ॥ ९ ॥ अटवीविकटाटव्यामनयो-
रनयोदयेन दुःखितयोः । क्वापि नं सुखसामग्री मिलति स्वस्थानविच्युतयोः ॥ १० ॥ पथि गच्छन्ती व्यथया व्याप्ता
तृषिता भवत्व नृपपत्नी । गन्तुं शशाक पुरतः पतिर्न सासेकिका मुक्त्वा ॥ ११ ॥ एकत्र क्वापि वने स निर्जने स्वं कल-
त्रमवमुच्य । बभ्राम जलं पश्यन्न पुनर्लेभे यथा घनं दुःस्थः ॥ १२ ॥ तृष्णातुरा वराकी मैषा योषा म्रियेत जलहीना ।
तत्प्रेमापूर्णमनाः स्वकरच्छुरिकाप्रहारयघात् ॥ १३ ॥ निष्कास्य बाहुशोणितमेतद्विक्षेप पत्रपुटिकायाम् । क्षेपेस मूर्छिकायाः
स्वच्छं कृत्वा स पाययति ॥ १४ ॥ अशनायिता ततोऽभूत्प्रेयसी भोग्याद्यलाभवैगुण्यात् । तच्चिन्तातुरचेता नार्थं प्रवि-
लोकयन् प्राप ॥ १५ ॥ तच्चावेऽथ निजोर्वोरामिषमाछिद्य सद्य एवासौ । सरोहिण्यौषध्या प्रसभमौजाममासूत्र्य ॥ १६ ॥
पक्त्वा दवाग्निना तच्छामिषं देवदित्युदित्वैनाम् । भोजयति स्म महीशस्तद्वशवर्ती दृढा मोहः ॥ १७ ॥ स्थाने स्थाने

भ्राम्यन्नेवं गङ्गापगातटस्थायि। किञ्चिन्नगरं भेजे सह देव्या सपदि नरदेवः ॥ १८ ॥ विक्रीयाभरणानि स्वर्णमयानि स्वकीयगेहिन्याः । वाणिज्यं कुरुतेऽसावन्यस्यन् सन् वणिग्वृत्तिम् ॥ १९ ॥ प्राहान्यदाऽस्य देवी स्वामिन् पूर्वं सखीजनान्तःस्था । गीतविनोदकथाभिर्गतमपि नो कालमविदमहम् ॥ २० ॥ साम्प्रतमेकाकिन्याः प्रयात्यनेहा अतीवकष्टेन । तत्कमपि मानुषं मे प्रयच्छ सद्यः सखायमहो ॥ २१ ॥ आकर्ण्यैतद्वचनं गीतकलावानवेत्य पङ्गुनरः । सद्मन्यरक्षि निजके पत्नीमनसः प्रमोदकृते ॥ २२ ॥ न पुनरिदं विज्ञातं न निरालम्बा वनेषु वल्ल्योऽपि । आश्रित्यासन्नस्थं निम्बमथाम्रं च तिष्ठन्ति ॥ २३ एवं वामाः कामानुरूपमथवा विरूपमत्यन्तम् । आसन्नमेव पुरुषं स्मरार्दिताः खलु निषेवन्ते ॥ २४ ॥ विकलयति कलाकुशलं, हसति शुचिं पण्डितं विडम्बयति । अधरयति धीरपुरुषं, क्षणेन मकरध्वजो देवः ॥ २५ ॥ पङ्गोः सङ्गममात्रादमात्रगीतादिमोहिता राज्ञी । तेनैव समं भोगान् बुभुजे रागो हि दुर्जेयः ॥ २६ ॥ अत्रान्तरे विनोदाजगाम गङ्गाविलोकनार्थमसौ । संप्रेर्य सलिलमध्येऽक्षिपत्तथा स्वं नरकगर्ते ॥ २७ ॥ पुण्यात् क्वापि विलग्नस्तटे स्फुटेनात्मनीनभाग्येन । श्रान्तः सुष्वाप तरोश्छायायामेष निश्चिन्तः ॥ २८ ॥ अपसरति नैव वृक्षच्छाया माया यथाऽङ्गनाकायात् । तस्याश्रयप्रभावादचिन्त्यशक्तीह यत्पुण्यम् ॥ २९ ॥ तत्पुरपतिरस्तगतः सुतहीनस्तदनु मन्त्रिभिर्दिव्यैः । अधिवासितैः स राज्ञः पदवीमारोपयाञ्चक्रे ॥ ३० ॥ सुकुमालिकाऽथ तेनामा कामाननुभवन्त्यपास्तधना । चोह्लकमध्ये क्षिप्त्वा भिक्षार्थं भ्रमति दीनास्या ॥३१॥ पङ्गुर्मधुरध्वनिनाऽध्वन्यानपि मोहयन् प्रतिग्रामम् । गीतानि गायति स्म प्रमोदिनः स्युर्यतो लोकाः ॥ ३२ ॥ जितशत्रुनृपतिनगरे दैववशादागता गतानन्दा । दृष्टा कष्टापन्ना वातायनवर्तिना राज्ञा ॥ ३३ ॥

आकार्याकार्यपरा पृष्टा स्पष्टाक्षरेण मृदुवचसा । भूस्थायिन्याऽथ तया न्यगादि नीचैःकृताननया ॥ ३४ ॥ पितृदैवऋषिदेवैः प्रसद्य पतिरेव एव मे प्रददे । शीर्षं प्रपातयन्ती पतिमताऽहं भ्रमन्त्यसि ॥ ३५ ॥ आचख्यौ शोणितविर्षाह्णो रुधिरं प्रपीतमुर्योश्च । पलमशितमारमजर्ता गङ्गापूरे प्रयाव्याम्भेः ॥ ३६ ॥ साधु पतिव्रतके त्वं किं भूमोऽत्वः परं जय, चरितम् । मद्गृहेरपसर लघु प्रोच्येति चकार निर्विषयाम् ॥ ३७ ॥ एवं स्पर्शनमिन्द्रियं ह्यनिगृहीतं स्यात्पदं व्यापदायत्तस्य नरेश्वरस्य तदनु प्राणप्रियाया भृशम् । मत्वैतत्किल तात्त्विकं सुयचन जय्या जयाङ्गीरुकाः, कुर्वीध्वं यशवर्त्ति नृत्यति यथा कीर्तिर्युतः प्राङ्गणे ॥ ३८ ॥

॥ इति स्पर्शनेन्द्रियनिग्रहे सुकुमारिकाज्ञातम् ॥

अथैतद्विपाकमेवाह—

इक्को वि इक्को विसओ उविन्नो, दुक्खं असंखं दलई पवन्नो ।
जे सव्वहा पचसु तेसु लुद्धा, मुद्धाण तेसिं सुगई निसिद्धा ॥ ५२ ॥

व्याख्या—एकोऽप्येको विषयः शब्दादिरुदीर्णं उदयं प्राप्तः सन् दुःखमसातमसंख्यं संख्यातीतं ददाति प्रपन्नः स्वात्मनि निश्रां गतः सन् । अथ च ये सर्वथा सर्वप्रकारेण पञ्चसु तेषु शब्दादिविषयेषु लुब्धा लाम्पट्यभाजः स्युः, मुग्धानां तेषां सुगतिर्निषिद्धा प्रतिषिद्धैव सर्वशास्त्रेष्विति काव्यार्थः ॥ ५२ ॥

अथ तेषामेव दुर्जयत्वमाह—

अईव दुठा विसया विसाउ, पढा जवे जेहिं महाविसाउं ।
जेहिं पया हुंति परव्वसाउ, न सेवणिज्जा खलु ते रसाउ ॥ ५३ ॥

व्याख्या—अतीवाधिक्येन दुष्टा दुःखकर्तारः विषयाः विषादपि पूर्वं सेव्यमानाः अतीव सुखदाः पश्चात्सेवनानन्तरं जवेत् यैर्महान् विषादश्चित्तविप्लवः । अथ च यैर्विषयासेवनैः प्रजा लोका जवन्ति परवशाः पारवश्यज्ञाजः अतो हेतोर्न सेवनीयाः, खल्विति निश्चयेन ते रसतो मनोरङ्गेनेति काव्यार्थः ॥ ५३ ॥

अथ ये सार्वज्ञानामेतद्वचो मन्यन्ते त एव धन्या वर्ण्यन्ते—

तित्थंकराणं निउणा पमाणं, कुणंति जे उज्झिय चित्तमाणं ।
सव्वं पि तेसिं किरियाविहाणं, संजायई दुक्खसहस्सताणं ॥ ५४ ॥

व्याख्या—तीर्थङ्कराणामाज्ञा निर्देशस्तीर्थकराज्ञा तां विषयासेवात्यागरूपां निपुणाः प्राज्ञाः प्रपद्य प्रमाणं कुर्वन्ति तथैव प्रपद्यन्ते ये, किं कृत्वा ? त्यक्त्वा चेतोऽहङ्कृतिं, तेषां किं फलं स्यादित्याह—सर्वमपि तेषां क्रियाविधानं कष्टानुष्ठानादि संजायते दुःखसहस्रत्राणं दुःखसहस्ररक्षकं तत्कृतं क्रियाकलापादि दुःखेज्यो रक्षकं स्यात् सर्वं तत्कृतं सफलं स्यादिति काव्यार्थः॥

॥ १०१ ॥

अथ ये संसाराद्भीरुकास्तेषां संसारः सुतर एव, एतदुपरि काव्यमाह—

अच्चंतपावोदयसंभवाओ, जे भीरुणो भवगणा भवाओ ।
तेसिं सुहाणं सुलहो उवाओ, नो संभविज्जा भवसंनिवाओ ॥ ५५ ॥

व्याख्या—अत्यन्तं सर्वाधिक्येन यः पापोदयस्तस्य संभवो जन्म यस्मादिति तथा तस्मात् इत्यंभूताद्भवाद्ये भीरवो भव्यगणाः पापोदयकारणात्संसारात्सदा भीरव एव भवन्ति तेषां भव्यानां सुखानां सुलभ एवोपायः, नो भवेत्संपद्येत भवे संनिपतनं भवसंनिपातः संसारगर्त्तान्तर्न पतत्येव प्रायः पुमान् पापभीरुरिति॥ अत्रार्थे विमलकथाऽस्योदाहरणमुत्कीर्त्यते—

अत्रैव भारते वर्षे सोरकर्षे सौख्यसंपदा । आस्ते कुशस्थलपुरं कुशस्थलजलोज्ज्वलम् ॥ १ ॥ नित्यं कुवलयानन्दी मन्दीकृततमोबलः । आसीत् कुवलयचन्द्रः श्रेष्ठी श्रेष्ठगुणोच्चयः ॥ २ ॥ दिवानिशमलंकश्री राजते यद्यशःशशी । विपक्षतापसूर्येण यत्प्रकाशो न हीयते ॥ ३ ॥ सदानन्दश्रियोपेताऽऽनन्दश्रीरिति तत्प्रिया । दूरोज्झितसमस्ताश्रीः श्रीरिवाम्बुसद्मनि ॥ ४ ॥ विमलः सहदेवश्च जज्ञाते तत्सुतद्वयम् । प्रथमः पापभीरुर्विपर्यस्तो द्वितीयकः ॥ ५ ॥ अगातां तावथोद्याने कदाचित्क्रीडितुं मुदा । अपश्यतां मुनिं तत्र साक्षात् पुण्यमिवोदितम् ॥ ६ ॥ नेमतुस्तमुपागत्य तत्यजभक्तिसमन्वितौ । धर्मलाभाशिषा साधुरभ्यनन्ददिमौ मुदा ॥ ७ ॥ उपविष्टौ पुरस्तुष्टौ वीक्ष्य नेत्रसुखं सुगम् । मुनिर्दिदेश सद्धर्मम शर्मभरभेदकम् ॥ ८ ॥ देवः सेव्यः सदैवार्हन् श्रयणीयो गुरुः शुभः । धर्मः सर्वविदोद्दिष्ट एतत्तत्त्वत्रयं स्मृतम् ॥ ९ ॥ गृहस्थोचितमादाय धर्मं सम्यक् सहोदरौ । तौ तु द्वादशधा शुद्धं स्वं धाम समुपागतौ ॥ १० ॥ आर-

प्यसि विसंशयम् ॥ २७ ॥ इत्युक्ते सति सोऽप्योचत् माथाः सत्वरगत्वराः । कस्तत्कृते स्वनियममसत्पयमनमाचरेत् ॥ २८ ॥
चक्रवेनिश्चलस्यापि समग्रैर्यदि निर्मलः । प्राणैर्धर्मः समर्ज्येत किं न प्राप्तं सदाङ्गिभिः ॥ २९ ॥ यत्नोचते जवत्विसे
तदाचर त्वयान्मयि । नाहं निःस्वार्थमत्यर्थमेतत्पाप सृजाम्यहो ॥ ३० ॥ ततः सहस्य तद्रूपमुपश्लोकयति स तम् ।
धिमखारमाऽसि धिमख श्लाघ्योऽसि त्वं महीतले ॥ ३१ ॥ त्वं सपुण्यः सकारुण्यस्त्वं च पुण्यास्पदं परम् । जवतः पाप-
भीरुस्त्वं शक्रोऽपि स्तौति यस्त्वयम् ॥ ३२ ॥ प्रतिपन्नस्वनियमप्रतिपालनतत्पर । अहो वृणु वरं तूर्णं यथा संपादयेऽ-
खिलम् ॥ ३३ धिमखेन ततोऽभाणि दर्शनं ददता निजम् । किं न दत्तमहो मह्यमसमप्रभुजविक्रम ॥ ३४ ॥ अर्हद्धर्मे
यथाऽऽयाते दुर्लभे जयकोटिभिः । समस्तमपि नो लब्धमतः परमिह त्वया ॥ ३५ ॥ नियेन्त्यं स्वमनो धर्मे निर्जरोत्तम
धर्मिणि । साहाय्य सर्वदा कार्यं यार्यं विघ्नकदम्बकम् ॥ ३६ ॥ तस्मिन्प्रतिनिरीहेऽसौ विपत्तृविपनाशकम् । मर्णि चेला-
ञ्चले वद्ध्वा सुरः स्वधाम जग्मिवान् ॥ ३७ ॥ सहदेयादयः सार्थाचेनापृच्छन्त तेऽन्नसा । पान्थव्यतिकरः सर्वस्तत्पुरस्ता-
न्निवेदितः ॥ ३८ ॥ तैरप्येष स्तुतः प्रीत्या ततो भ्रातृद्वयं स्वयम् । मुक्त्वाऽर्दपुरुसप्रामस्मृतिपूर्वमगात् पुरम् ॥ ३९ ॥
यावत्पुरं प्रविष्टौ तौ हृष्टौ तुष्टौ स्वमानसे । विसस्मृतौ वणिग्वर्गैः स्वापणश्रेणिमारमनः ॥ ४० ॥ विवधानस्त्वरा दृष्ट-
स्ताभ्यां भीरुकमानसः । नश्यन्नितस्ततश्चापि कान्तारे मृगयूथवत् ॥ ४१ ॥ पिधीयन्ते प्रतोलीनां द्वाराणि सुदृढार्गलम् ।
यंत्रमीति चमूचक्रं सर्वतः समरोन्मुखम् ॥ ४२ ॥ विहस्ते नगरं प्रेक्ष्य पृष्टः कोऽपि नरस्तत्तः । ताभ्यां जाद किमीदृशं
व्याकुलं सकलं पुरम् ॥ ४३ ॥ कर्णाभ्यर्णमुपागत्य सोऽभणत् पुरुपोत्तमः । पुरुषोत्तमवत्राजाऽत्रास्ते गोपालशेखरः ॥४४॥

एक एव हि तस्याङ्गजन्मा सन्मानभूरभूत् । अरिमल्लाह्वयोऽन्वर्थनामा कामात्ररूपभाक् ॥ ४५ ॥ सुखशय्याप्रसुप्तः सन् सोऽद्यैव मदिनाऽहिना । दष्टो दुष्टात्मना रात्रौ दुर्जनेनेव सज्जनः ॥ ४६ ॥ तावत्प्रणयिनी तस्य पूचक्रे करुणस्वरम् । मिमिले स्वजनः सर्वः प्रणनाश भुजङ्गमः ॥ ४७ ॥ न दृष्टः किल केनापि सर्वत्राप्येष वीक्षितः । तत्रागादवनीपालः परासुमवलोक्य तम् ॥ ४८ ॥ हा यत्न वत्स मे वाक्यमित्येष विललाप च । मूर्छया न्यपतद्भूमौ शोकशङ्कासमाकुलः ॥४९॥ प्रकम्पनेन शीतेन स व्यधायि सचेतनः । तद्विषोत्तारणस्यार्थे क्रियन्ते विविधाः क्रियाः ॥ ५० ॥ न विशेषो मनाकश्चित्तस्याजनि तनूरुहः । ततोऽमात्यानुवाचेशः सुतस्याङ्गमेव चेत् ॥ ५१ ॥ तदाऽवश्यं मया प्राणास्तृणीकार्या हविर्भुजि । तदवेत्य परीवारः समग्रोऽपि रुदत्यसौ ॥ ५२ ॥ विखिन्ना मन्त्रिसामन्ता हा कथं भाव्यदः पुरम् । निराधारं महीभर्त्रा विना कृतमतः परम् ॥ ५३ ॥ नृपाज्ञयाऽथ नगरे वादितः पटहः पटुः । राज्यार्धं दीयते तस्मै कुमारं योऽत्र जीवयेत् ॥ ५४ ॥ एवमुद्घोषणापूर्वमहंपूर्विकया जनः । कुतूहली मिलन्नस्ति कुर्वन् कोलाहलं किल ॥ ५५ ॥ एतन्निशम्य वृत्तान्तं विमलं प्रत्यभाषत । भ्रातः कुरूपकारं भोः समयो वर्त्ततेऽधुना ॥ ५६ ॥ मणिना जलमास्पृश्य क्षिप्रमाछोटय त्वकम् । यथोत्तिष्ठति दष्टोऽसौ सुप्तवत्प्राप्तचेतनः ॥ ५७ ॥ कः कुर्याद्राज्यलुब्धः सन् पापाधिकरणं परम् । विमले वादिनीत्येष भूयो भ्रातरमूचिवान् ॥ ५८ ॥ जीवयित्वा कुमारं भो दारिद्र्यं दूरतः कुरु । कदाचिज्जीवितो ह्येष धर्माराधकतां व्रजेत् ॥ ५९ ॥ एवं द्विधाऽपि ते भ्रातः संपद्येतास्त्यसंशयम् । इत्यूचुषि स यावत्तं विमलो वक्ति किञ्चन ॥ ६० ॥ पोतप्रान्तात्स सहसा साहसी मणिमात्तवान् । पस्पर्श पटहं गत्वा तत्त्वाध्वनो बहिर्गतः ॥ ६१ ॥ संप्राप्तः

कुमारोपान्तमायातः पौरपूरुषैः । धारिणा मणिमिश्रेण वेष्टितः सन् कुमारकः ॥ ६२ ॥ कश्चासौ धवमात्रेण फल्गुः स्यात्
किमु देवगीः । पप्रच्छ पृथिवीपालस्सुप्रसन्नोच्चलाम्बुजः ॥ ६३ ॥ पुमान् समीपगः कोऽसौ किमस्यान्तःपुरं च किम् । सर्व-
मेतच्च मिलितं भूपस्तस्मै न्यवेदयत् ॥ ६४ ॥ अनेन जीवितोऽसि त्वं विपद्द्विपघूर्णितः । किमस्य प्रोच्यते वत्स परा-
र्थ्यव्यसनं धनम् ॥ ६५ ॥ इत्यात्मनाऽवनीशेन सहदेवोऽथ मानितः । निमन्त्रितश्च राज्यार्धदानेन सदयाशयः ॥ ६६ ॥
सेनोऽर्ध स मम भ्राता ज्येष्ठोऽसि विमलाशयः । यस्मज्जातान्मया स्वामिन् जीवितस्तव नन्दनः ॥ ६७ ॥ साम्प्रतं सपरी-
वारः श्रीपथान्तः स वर्तते । इहानीय मयातव्यं राज्यार्धं मानपूर्वकम् ॥ ६८ ॥ ततस्तत्र चचालोर्वीपाल आरुह्य हस्ति-
नम् । सहसा सहदेवेन कृतप्रत्युपकारधीः ॥ ६९ ॥ उत्तीर्णस्तूर्णमेवास्य दर्शने राजकुञ्जरात् । विनयोऽस्य नयश्चापि
सतामेवाग्रसङ्गतः ॥ ७० ॥ सन्मुखायातमालिङ्ग्य विमलं विमलं हृदि । अथावादीन्मेदिनीजानिर्दन्तद्युद्योतिताधरः ॥ ७१ ॥
अहो महात्मन् जयता जयताऽतिदयालुना । सुतजिह्वा ममादायि मायानिर्मुक्तमेधसा ॥ ७२ ॥ त्वं कृती सुकृती विश्वे
त्वन्मखेर्महिमाऽधिकः । यत्सूनोश्चिरजीवित्वं त्वत्प्रसादाद्विजृम्भितम् ॥ ७३ ॥ प्रसद्यायाहि मद्गेहमस्तुतोऽसीह यद्यपि ।
त्वत्समाना जना विश्वे विरलाः सरलाशयाः ॥ ७४ ॥ यथा यथाऽवनीनेता जजल्पेति मुहुर्मुहुः । तथा तथा नम्रशिरा
जिह्राय विमलो हृदि ॥ ७५ ॥ वर्धिताधिकृतिर्गुर्वी सौदर्येणामुना हहा । शल्ययत्साऽविलुप्तसोढा हृदि दुःखायते भृशम्
॥ ७६ ॥ इति ध्यात्वा तमावक्त्यौ क्षितिवासव संशृणु । सहदेवकृतं सर्वमिदं तदुचितं कुरु ॥ ७७ ॥ ततो हस्तिनमारोप्य
समानिन्ये निजौकसि । सबान्धवः स भूपेन दर्पोत्कर्षमुपेयुषा ॥ ७८ ॥ अहो गृहाण राज्यार्धमित्युक्ते भूभुजा स्वयम् ।

विमलः प्रोचिवान् राजन्नलं मे नृपतिश्रिया ॥ ७९ ॥ खरकर्मसमारम्भः श्राद्धैर्दूरेण वर्जितः । यतः परिग्रहाधिक्यं तेन राज्येन मे सृतम् ॥ ८० ॥ सहदेवं भृशोल्लासं प्राज्यराज्यरमाश्रये । ददावभ्यर्थ्य राज्यार्धमस्मै भूवल्लभस्ततः ॥ ८१ ॥ शुभ्रं सद्म समर्प्याथ सरोवत्कमलाकुलम् । स्थापितो विमलः श्रेष्ठिपदेऽनिच्छन्नपि स्फुटम् ॥ ८२ ॥ परिच्छदः समानीतस्ताभ्यामात्मीयकोऽखिलः । आरराध विशुद्धात्मा विमलो धर्ममार्हतम् ॥ ८३ ॥ अतुच्छराज्यमूर्छालः सहदेवोऽभवद्भृशम् । खरं करभरं चक्रेऽथादण्ड्यानप्यदण्डयत् ॥ ८४ ॥ पापोपदेशानददान्निर्दयः सुतरां हृदि । निघ्नन्रिपुग्रामान् कर्मादानान्युपार्जयत् ॥ ८५ ॥ व्रतं विराधयामास निर्भयः पापकर्मणः । अन्यदा विमलेनासावनुशिष्टः प्रियाक्षरैः ॥ ८६ ॥ करिकर्णतडिद्दण्डचलपत्रच्छदास्थिरे । राज्यलक्ष्मीभरे भ्रातः किमेवं लालसोऽस्यहो ॥ ८७ ॥ अनन्तशः श्रियो भुक्ता देवमानवजन्मसु । तृष्णां निवर्तय क्षिप्रं मा हारय मुधा भवम् ॥ ८८ ॥ कथं विरतिमासाद्य प्रमादमनुतिष्ठसि । इत्यादि विमलोक्तानि शृण्वन् सोऽमर्षतामधात् ॥ ८९ ॥ प्रतिपेदे न तद्वाक्यं श्यामीकृत्यास्यमाश्वसौ । विज्ञाय तदभिप्रायं विमलो मौनमादधे ॥ ९० ॥ योग्यः सदुपदेशानां नैष विद्वेषभाक् पुमान् । मधुरा इक्षुदण्डाः स्युः करभस्य न तुष्टये ॥ ९१ ॥ ततः संत्यक्तसम्यक्त्ववासनोऽनर्थदण्डकृत् । सहदेवः स पापात्मा केनचित् पूर्ववैरिणा ॥ ९२ ॥ सुखनिद्राप्रसुप्तः सन् हतः शस्त्रप्रहारतः । कदाचिच्छलमासाद्य प्राप प्रथमदुर्गतिम् ॥ ९३ ॥ ततो गुरुभवाम्भोधिदुःखकल्लोलमालया । व्याहतः सन् घनं कालं स प्रयाताऽक्षयं पदम् ॥ ९४ ॥ भवभूरिभवारम्भदम्भनिर्मुक्तमानसः । विमलो विमलस्वान्तसङ्क्रान्तार्हतसन्मतः ॥ ९५ ॥ भीरुर्भवोरुपापेभ्यो न्यायवृत्तिमुपाश्रयन् । गृहस्थधर्ममाराध्य संप्राप त्रिदशालयम् ॥ ९६ ॥

देत्रे महाविदेहाख्ये सुकुलोत्पत्तिमाप्य सः। आत्तव्रतः शिवं याता सातानन्त्यमनोहरम् ॥ ८९ ॥ पातकध्नीत्वमिति प्रज्ञाय न्यायमार्गनिपुणस्य। विमलस्य भव्यलोकाः सुशङ्कमाना भजत भजतः ॥ ९० ॥

॥ इति विमलदृष्टान्तः ॥

अथ संसारास्थिरत्वमाह—

धणं च धन्न रयण सुवन्न, तारुण्णरूवाइ जमित्थ अन्नं।
विज्जु व्व सव्वं चवलं खु एयं, धरेह जणा हियए विवेयं ॥ ५६ ॥
पुत्ता कलत्ताणि य बंधुमित्ता, कुडुंबिणो चेव इहेगचित्ता।
आउक्खए पाववसा समेए, न रक्खणत्थं पभवंति एए ॥ ५७ ॥

व्याख्या—धनं च पुनर्धान्यं रत्न सुवर्णं, अत्र जातावेकवचनं, तारुण्यरूपादि यदत्रान्यदप्यस्ति, विद्युद्वत्सर्वं चपलं खु निश्चितं भव्या धरत भो जना हृदये विवेकं हेयोपादेयमिति काव्यार्थः ॥ पुत्राः कलत्राणि च बन्धवो भ्रातरो मित्राणि सुहृदः कुटुम्बिनश्चापि इहैकचित्ताः सन्तः आयुषः पर्यन्ते पापवशात्समेते प्राप्ते न रक्षार्थं प्रभवन्त्येते समर्थीभवन्तीति काव्यार्थः ॥

एतदर्थं श्रीमहानिर्ग्रन्थस्वरूपमुच्यते—

भक्त्या नमस्कृत्य समग्रसिद्धान्, साधूंश्च चारित्रगुणोपविद्धान्। निवेद्यते धर्मपथानुशिष्टिः, कर्मारिवारोन्नतिविघ्नविष्टिः ॥ १ ॥ गुणाढ्यमुक्तामणिनीरनाथः, श्रीश्रेणिकोऽभून्मगधाधिनाथः । स मण्डकुक्ष्याह्वयभव्यचैत्यं, निरीक्षितुं प्राप बहिः ससैन्यम् ॥ २ ॥ प्रभूतवृक्षव्रजवल्लिसन्ध्यन्तर्यायिसत्पुष्पफलैरवन्ध्यम्। तत्काननं नन्दनवद्विभाति, प्रीतिर्न यद्दर्शनतोऽपि माति ॥ ३ ॥ श्रीश्रेणिकस्तत्र मुनीन्द्रमेकं, मैक्षिष्ट शान्तं सरसीव भेकम्। वृक्षस्य मूले मृदुले निषिष्णं, दृष्ट्वाऽथ तं भूमिभुजेति विन्नम् ॥ ४ रम्याऽस्त्यहो अस्य वपुर्विभूषा, रम्यं वयो रम्यतमा मयूखाः । निःसङ्गता क्षान्तिरहो विमुक्तिः, सद्रूपमार्यस्य भवाद्विरक्तिः ॥ ५ ॥ तद्रूपसंप्रेक्षणजातचित्रः, सविस्मयोऽभूत् क्षितिपः स तत्र। प्रदक्षिणीकृत्य यतिं त्रिवेलं, ननाम पत्पङ्कजमुर्वृतेलम् ॥ ६ ॥ न दूरवर्ती न नृपस्तथाऽऽसन्नासन्नवर्ती धृतधर्मवासः। कृताञ्जलिः सद्विनयः पुरःस्थः, पप्रच्छ हर्षेण गुणैरतुःस्थः ॥ ७ ॥ यद्यौवने प्रव्रजितः किल त्वं, भो भोगकालेऽस्ति तदुत्तमत्वम्। इत्येवमुक्ते स्वमुखेन भव्यासारेण सोऽप्याह सदर्चिरम्भाः ॥ ८ ॥ भूमीपते भो अहमस्म्यनाथः, प्रवर्तते नो मम कोऽपि नाथः। यत्केनचिन्मे न कृताऽनुकम्पा, त्यक्ता मरालेन यथाऽत्र पम्पा ॥ ९ ॥ एवं ब्रुवाणस्य मुनीश्वरस्य, श्रीश्रेणिकः प्राह पुनः प्रहस्य। सद्रूपवर्णादिमहर्द्धिभाजः, कथं न नाथोऽस्ति तवर्षिराज ॥ १० ॥ नाथस्तव त्राणमहं भवामि, त्वं भुङ्क्ष्व भोगादि मनोऽनुगामि। आस्ते तवाढ्यं परिवारवत्त्वं, दुष्प्रापमस्तीह पुनर्नरत्वम् ॥ ११ ॥ ऊचे मुनिरत्वं प्रथमं

१ विचारितम्. २ उद्धृता इला पृथ्वी जगज्जीवा इति यावत् येन तत्. ३ सदर्चिरेव जलं यस्मिन्सः. ४ सरोविशेषः.

स्वनाथः, प्रवर्तसे नो मगधाधिनाथ । कथं स्वयं सन् सुतरामनाथः, संपद्यसे त्वं परकीयनाथः ॥ १२ ॥ श्रुत्वेति साधोः समज्ञुपाख्यं, सविस्मयो वा कुतुकेन साधः । जीमूतधारीव नयः पुंवाक्यविद्वतो मुदाप्यश्रुतपूर्ववाक्यम् ॥ १३ ॥ नृपोऽवदन्मे करिणः सदश्वाः, पुराणि चान्तःपुरमस्ति दिव्या । ऐश्वर्यमाज्ञा वसुधा च भोगा, भद्रोत्कटा भूरितराः पुरोगाः ॥ १४ ॥ ईदृग्यथास्ते कमलाप्रकर्षे, प्रशान्ततृष्णामितवस्तुवर्गे । तथाप्यनाथोऽत्र कथं नृपाऽवस्य भाषसे हे श्रमणार्थ्यपाद ॥ १५ ॥ अनाथशब्दस्य न हि त्वयार्थः, प्रबुध्यसे शौर्यजितोरुपार्थ । एष जगादर्षिरनु क्षितीशं, स्तुत्युत्सुकः शैव इव प्रतीशम् ॥ १६ ॥ शृणुष्व्यमानं मनसा त्वमव्याक्षिप्तेन यथ्मीदमहं स्वगम्या । यथा त्वनाथो भव-तीति भूप, मतो यथैतच्च नृप प्रवृत्तम् ॥ १७ ॥ कौशाम्ब्यनेन्तायनितोरुधैर्यादितेयपुर्या सदृशी वरेण्या । आस्ते पुरी तत्र पिता ममासीत्प्रदामसंपत्समुदायराशी ॥ १८ ॥ दृग्वेदना मे परमा वयस्यादिमेऽजवरकर्मअपारयश्यात् । दुःखाय याऽरण्यगतो वराहः, सर्वेषु चाङ्गेषु बभूव दाहः ॥ १९ ॥ दृशोऽङ्गरन्ध्रे रिपुणा निखाते, शस्त्रे यथा पीडनकार्यसातम् । व्यथा तथाऽत्रेऽजनि भूयसी मे, पश्चात्स्वजीर्णा गहनेऽतिभीमे ॥ २० ॥ कटिप्रदेशे हृदयोत्तमाङ्गे, पीडाऽजवन्मेऽपि परत्र चाङ्गे । सवज्रनेत्राशनिघाततुल्या, कुम्भीतिपानीयकदम्बकुल्या ॥ २१ ॥ व्याधिप्रतीकारकरा मनुष्या, आकारिता मान्त्रिकवैद्यमुख्याः । कुर्वन्नमायातमितश्चिकित्सां, शास्त्रं वदन्तो वदने स्वकीयम् ॥ २२ ॥ तैर्मे कथञ्चिन्न तदा यदस्सा-

१ इवार्थे वा शब्दः. २ पुन्नागी वृक्षविशेषः ३ प्रशान्तः तृष्णामितवस्तुसर्वे तृष्णा यस्मात् सः तस्मिन्. ४ शौर्येण जिता महतो राजानो येन तत्संबुद्धौ ५ पृथ्वीयनितोरुवेणी ६ असात दुःखम्

वद्भिः कृता काऽपि मनाक् चिकित्सा । ते मोचयन्ति स्म न मामसातादनाथतैषा मम भूप जाता ॥ २३ ॥ समाधिहेतो-र्मम सर्वसारं, वैद्येषु दत्ते स्म पिताऽनिवारम् । ते मोचयन्ति स्म न मामसातादनाथतैषा मम भूप जाता ॥ २४ ॥ माता ममासीत्सुतशोकसंतापिता सती वर्द्धितचित्तचिन्ता । सा मोचयामास न मामसातादनाथतैषा मम भूप जाता ॥२५॥पति-व्रता भूप मदीययोषा, शोकेन विच्छायमुखीव दोषा । भूपीठमिन्दुस्तमने चकोरस्त्रीवाश्रुभिः सिक्तवती ममोरः ॥ २६ ॥ विलेपनस्नानशुभान्नपानप्रोद्दाममाल्यादिकवस्तु सा न । ज्ञातं मयाऽज्ञातमथाऽत्र भुङ्क्ते, वाला स्वकार्ये न मनाक् प्रयुङ्क्ते ॥ २७ ॥ ज्येष्ठाः कनिष्ठाः सहजाः सगीनाः, स्निग्धाः स्वसारो मदुपान्तलीनाः । ते मोचयन्ति स्म न मामसाता-दनाथतैषा मम भूप जाता ॥ २८ ॥ तदाऽहमूचेऽत्र भवे मदीष्टं, पुनः पुनः सोढुमलं न कष्टम् । दीक्षां ग्रहीष्यामि तदाऽखिलायाः, सकृद्विमुक्तो यदि वेदनायाः ॥ २९ ॥ नीचोक्तवाक्यप्रसरं सहिष्ये, दान्तेन्द्रियः क्षान्तिगुणं वहिष्ये । अहं निरारम्भतया चरिष्ये, भूस्पृग्जनुः प्राप्तफलं करिष्ये ॥ ३० चित्तेऽवधार्यैवमहं प्रसुप्तस्तत्रैव यावन्निशि कष्टलुप्तः । पीडा मदङ्गस्य तदैव भम्भासारानशङ्कीतहतेव रम्भा ॥ ३१ ॥ प्रातः समापृच्छ्य ततः स्वगोत्रान्, संलग्नमत्प्रव्रजनोक्ति-तोत्रान् । जातोऽस्म्यहं भाववशान्मुमुक्षुः, श्रेयोऽङ्गनासङ्गसुखं बुभुक्षुः ॥ ३२ ॥ ततः परं स्वस्य पुनः परस्य, क्षणाद-भूवं जगदाश्रितस्य । नाथस्त्वहं भूतकदम्बकस्य, त्रसस्य च स्थावरजङ्गमस्य ॥ ३३ ॥ आत्मैव मे वैतरणी हृदिन्यात्मा शाल्मलिर्मूलमिवार्त्तिवन्याः । आत्मा ममास्त्युत्तमकामधेनुः, स नन्दनं च प्रमदागमे तु ॥ ३४ ॥ आत्मैव मेऽसौ सुख-दुःखकर्त्ता, ममास्ति चात्मा सुखदुःखहर्त्ता । आत्मैव मेऽसौ प्रविभात्यमित्रः, प्रोद्दाममात्मैव च मित्रमत्र ॥ ३५ ॥ अना-

प्रताऽप्याऽपि च वर्तते या, साऽपि स्वचित्ते स्वयका निधेया । निर्ग्रन्थधर्मे समवाप्य केऽपि, भ्रष्टा जयन्ति प्रवसङ्ग-
मेऽपि ॥ ३६ ॥ प्रव्रज्य यो नैव महाव्रतानि, स्पृशत्यमेधाः सुखदायकानि । गृद्धो रसे चानिगृहीतजीवश्छिन्द्यान्न रागं स
गिरिं करीव ॥ ३७ ॥ नाऽऽयुक्तता यस्य गवेषणायां, स्याद्यस्य नेर्यासमितौ शुभायाम् । आदाननिक्षेपविधिप्रजारो, मोक्ष
स नाप्नोति जये ह्यनादौ ॥ ३८ ॥ आस्वाद्य शीतारसरूक्षसाद्यं, क्लेशं चिरं प्राप्य च लोचनाद्यम् । भ्रष्टो व्रताद्यैस्तपसा च
कामी, मुनिः स न स्याद्भवपारगामी ॥ ३९ ॥ कूटेव कार्षापणराजिराराच्चाज्या च मुष्टिः शुषिरा ह्यसारा । यथार्थवैडूर्य-
समप्रकाशास्त्याज्यो जयेत् काचमणिर्हताशः ॥ ४० ॥ धर्मध्वजं पापिसखेऽपि धृत्वा, पार्श्वस्थयेयं जनुषीह कृत्वा । असं-
यतः स्वस्य च संयतत्वं, वदञ्जुषैत्युत्कटनारकत्वम् ॥ ४१ ॥ नरं यथा हन्ति विषं निपीतं, शस्त्रं यथा जेति च दुर्गृही-
तम् । धर्मस्तथासौ सन् विषयोपपन्नः, हणोति वेताल इवाप्रसन्नः ॥ ४२ ॥ यो लक्षणं स्वप्नमथो निमित्तं, कुतूहलं मन्त्रम-
घमपूर्वम् । प्रकाशयन् जीवितमातनोति, प्रान्ते न किञ्चिच्छरणं चिनोति ॥ ४३ ॥ विराधनावानधिकं कुशीलः, स ऋच्य-
साधुः स तमोऽभिकीर्णः । अतत्त्वजुर्दुर्गतिदुःखजारं, धातीव तत्रा निशितं कुठारम् ॥ ४४ ॥ औद्देशिकं क्रीतमनेषणीयं,
यो न त्यजेत् किञ्चिदसेवनीयम् । स सर्वभक्षीव हिरण्यरेता, इतश्च्युतो दुर्गतिमेत्यनेता ॥ ४५ ॥ तत्कण्ठहृत्तस्य करोति
नारिः, स्वकृष्टताऽरातिर्यदार्त्तिकारी । स्वयं यतो ज्ञास्यति मुक्तकृत्यो, गतो हरेर्या मुखमेव मृत्योः ॥ ४६ ॥ स्याद्यस्य चा-
रित्ररुचिर्निरर्था, प्रान्ते न धीर्यस्य हृपे समर्था । नायं परोऽप्यस्ति च तस्य लोकः, किंतूभयभ्रष्टतयास्ति शोकः ॥ ४७ ॥

१ व्रतस्थः. २ कंठहृत् अरिः यस तत् न करोति यत् स्वदुष्टात्मापि अर्तिम् करोति. ३ पर्मे

एवं यथाछन्दमहाकुशीला, विराध्य जैनं मतमाप्तहीलाः । भोगादिगृध्राः परितापजुष्टाः, स्युर्दुःखिनोऽनीशतयेव मुष्टाः ॥ ४८ ॥ शिक्षां मयोक्तां तु निशम्य धीमां, भो बुद्धिमन् ज्ञानगुणैरसीमाम् । कुशीलमार्गं सममेव हित्वा, निर्ग्रन्थमार्गे चर कर्म जित्वा ॥ ४९ ॥ ज्ञानोपयुक्तः सुचरित्रराजी, गुणाश्रितो जात्य इवात्र वाजी । निराश्रवः पुण्यपथादरेण, व्रजेन्मुनिर्मोक्षपथं क्रमेण ॥ ५० ॥ दान्तः कुकर्मारिहरो मनस्वी, दृढव्रतोऽदभ्रयशास्तपस्वी । निर्ग्रन्थयोग्यायनमेतदाख्यद्व्यासेन राज्ञे मुनिरुच्चिताख्यः ॥ ५१ ॥ राजा ततो धर्मकृतावबुद्धः, कृताञ्जलिः प्राह कलाभिरिद्धः । सत्यं त्वनाथत्वमिहोपदिष्टं, त्वया यथाभूतमिदं वरिष्ठम् ॥ ५२ ॥ तवास्ति मानुष्यमिदं सुलब्धं, सद्रूपवर्णादि च ते सुदब्धम् । सबान्धवस्त्वं त्वमृषे सनाथः, स्थितोऽसि जैनेऽध्वनि यत्सदार्थः ॥ ५३ ॥ नाथत्वमुक्ते त्वमहो महर्षे, नाथोऽसि भूतप्रकरेऽत्र वर्षे । प्राप्यानुशिष्टिं क्षमयाम्यवन्तं, जीवान् समायोज्य करौ भवन्तम् ॥ ५४ ॥ पृष्टेति ते यो मयकाऽत्र विघ्नः, कृतः शुभध्यानविधौ गुणघ्नः । निमन्त्रितो भोगसुखाय चापि, क्षन्तव्यमेतत्सकलं त्वयाऽपि ॥ ५५ ॥ स्तुत्वेति भक्त्या स नरेन्द्रसिंहस्तं साधुसिंहं दक्षयन् स्वमंहः । श्रीश्रेणिकः सस्वजनश्च सान्तःपुरोऽभवद्धर्मरतः प्रशान्तः ॥ ५६ ॥ प्रोद्भूतरोमाञ्चतयाऽभिनन्द्य, प्रदक्षिणीकृत्य मुदाऽभिवन्द्य । स्वां राजधानीं नृपतिः प्रयातः, पुण्यप्रभावोर्जितसुप्रभातः ॥ ५७ ॥ त्रिगुप्तिगुप्तः स मुनिस्त्रिदण्डप्रमुक्त उन्मूलितपापखण्डः । चरन् वयोवद्भुवि विप्रमुक्तः, प्रान्तेऽभवत्सज्ञतिभाग्विरक्तः॥५८॥

॥ इति महानिर्ग्रन्थसम्बन्धः ॥

---

१ विस्तरेण. २ अथः इत्यव्ययं अथार्थे. ३ पक्षिवत्.

अथ निकृष्टकर्मणामुपरि उपदेशमाह—

जेसिं मणे पावमई निविठ्ठा, निव्वाहवित्ती पुण संकिलिठ्ठा ।
कयाऽवि ते हुंति न हिठ्ठतुठ्ठा, सव्वत्थ पावंति दुहाइ दुठ्ठा ॥ ५० ॥

व्याख्या—येषां जीवानां मनसि पापमतिर्निविष्टा प्रविष्टाऽस्ति निर्वाहस्य वृत्तिः निर्वाहवृत्तिः वर्त्तनं वृत्तिः उपजीविका संक्लिष्टाऽस्ति क्लेशकर्मजनितोदकजारघट्टनार्थेर्जायमानाऽस्ति, कदाचित्ते सत्त्वाः न हर्षतोषपन्नाजः स्युः, किं तु सर्वत्रापि प्राप्नुयन्ति दुःखान्येव दुष्टाः । इति काव्यार्थः ॥

अथैतदुपरि दृष्टान्तः सूच्यते—

सुरगिरिसमधीरह अइगहिरगंभीरह सिरिवीरहपय अणुसरिय । वेरग्गहकारण दुरियनिवारण भणिसु मियापुत्तह चरिय ॥ १ ॥ मिगनाम अत्थ इह नयरि गाम जिहिं सोहइ घणवणमणभिराम । तिहिं विजयनाम नरवइ पसिद्ध हयगयरहनरगयपवरसमिद्ध ॥ २ ॥ तसु घरणि रमणि छइ मिगादेवि रइरंभरायवियरूपिदेवि । लच्छामच्छायसुसीलदेह जिणि सोहइ सोहण रायगेह ॥ ३ ॥ तिहिं अन्नदिवसि सिरिवीरसामि जसु सुक्कयवड्ढि पव्वयइ नामि । अह समवसरिय सुरनयपाय सोवन्नवन्न करसत्तकाय ॥ ४ ॥ आगमण सुणवि अह विजयराय पत्तउ पहुवदण पणयपाय । उवविठ्ठ तुठ्ठ सामिनत्ति वक्खाण सुणइ सो एक्कचित्ति ॥ ५ ॥ जच्चंध कोइ इत्थंतरम्मि संपत्त समवसरणम्मि रम्मि । मइयाउ जेम मच्छिय उवरुल भणहणह पासि जसु तणु अदच्छ ॥ ६ ॥ जइ जुन्न सडियचीवरह खंड वेयण विसईतउ अइपयंड । जाणे

करि पावइ तणउ दंम पाविउ इह लोयहिं सो अखंम ॥ ७ ॥ करचरणनह अंगुलि सम्मिय जास कहमि जिम गल्लिय बुड्डुनास । अइघरहरसद महारउद्द रूविहिं वीहावइं लोयखुद्द ॥ ८ ॥ नरमुक्कर मुक्कर कहइं तासु करि कक्कर खंमग-हंवि जासु । अह दिट्ठउ दिट्ठिहिं सयललोइ सिरिवीरपासि आवंत सोइ ॥ ए ॥ घत्त—एरिस तं पिक्खिय गोयमि पुच्छिय वीरनाहमह आइसहु । इणि केरिस किद्धउ पावविरुद्धउ जेणि सहइ एरिसउ मुह ॥ १० ॥ नासअह सामिय अरकइ महु-रवाणि तं किं पि करइ जिय रुद्दझाणि । घणघोरकम्म करुणाविमुक्क निस्संकपणइ बहुपावढुक्क ॥ ११ ॥ जिणि एरिस मुक्कह पंजरम्मि निवसंत सयावि अ जज्जरम्मि । तो पुच्छइ गोयम पुणवि वीर मह कहउ नाह गंभीरधीर ॥ १२॥ एया-रिस अंधनराउ कोवि अवरोऽवि अत्थि मुक्किउ जणोऽवि । जं पिक्खि विरच्चइं कामिणोऽवि संसारविसयसुक्काउ तेऽवि ॥ १३ ॥ पहु वागरेइ इत्थेव गामि नरनाहु अत्थि जो विजयनामि । तसु रमणि मिगानंदण अईव मुक्कियजण चूडामणि सदीव ॥ १४ ॥ नहु नयणवयणकरचरण तासु नहु दीसइ नासा कन्न जासु । नहु सीसमुह अह रुंडमुंडि अइसइ कुरूववीभच्छवम्मि ॥ १५ ॥ पगईए बहिर अंधससरूव कियकम्मि नपुंसग मुक्करूव । आगारमित्त पंचिंदियाण तसु अत्थि देहु मुक्किकगाण ॥ १६ ॥ अम्मनाम्मि तस्स गम्भंतरेऽवि अम्भिंतरबाहिणि तह अमेवि । बाहिरपबहाउ तहेव अट्ठ अम्मनाम्मि पूइए वहंति सुहु ॥ १७ ॥ सोणिय वहंति अम्मनाडियाउ तह कन्नधमणिनासंतराउ । मुन्निय मुन्निय नामीउ वहंति सोणिय तह पूइउ अइमुरंत ॥ १८ ॥ अग्गिउ तसु वायु सयावि अंगि गम्भेऽवि हु पावन्भरप्पसंगि । पकुणइ सो लोमाहारमेव अइमुरभिगंध मुव्वर तहेव ॥ १९ ॥ एरिस असुरकम्भर अणुहवेइ नारय जिम काल अइक-

मेइ। पहुवयण सुणेवि इय गोयमेण पभणिय विलसउ कोउगेण ॥ २० ॥ घत्त—अणुमइ तुम्ह पामिय पिक्खउं सामिय
मियापुत्त नियलोयणिहिं। आइच्छ वीरिहिं चरमसरीरिहिं चलिय सो हरिसियमणिहिं ॥ २१ ॥ जास—मियगामह
मज्झिहिं पत्तउ सिरिगोयम नियजवणिहिं पत्तउं। मुत्तिमंत किरि एह सुरदुम अह चिंतामणि अतुलपरक्कम ॥ २२ ॥
देवि मियावइ पिक्खिय नयणिहिं आगच्छइ जंपइ पुण वयणिहिं। आसण मिल्हिवि तक्खणि छडिय अमियमेहबुट्ठिहिं
किरि पुट्ठिय ॥ २३ ॥ सामिय अम्ह अणुग्गह किज्जउं नियपयकमलरयहिं जं दिज्जउं। अम्ह मणोरह सयलु वि सि-
द्धउ अज्ज अमियरसघुंटिहिं पिद्धउ ॥ २४ ॥ कज्ज किंपि मह आइस दिज्जउ असणपाण रुच्चइ तं लिज्जउ। गोयम-
सामी तो पजंपेइ मियादेवि तं कज्ज सुणेई ॥ २५ ॥ इत्थ अम्ह तुम्ह सुयपिक्खणि तक्खणि सं निसुणेवि वियक्खणि।
लहुयपुत्तचउरो सिंगारिय आणवि गोयम अग्गइ धारिय ॥ २६ ॥ सुहगुरुचरणिहिं रंगि नमावइ धम्मलाभ अप्पिय
सुहावइ। एह वि कहि नहु अम्हि इहागय पढम जाय जो अत्थि तुहंगय ॥ २७ ॥ जासु रुय सिवपुत्तह तुमउ सयह
मिज्झिहिं तइ लहु परिक्खउ। धम्मसीलि वहंसवकारउ मिगा जणइ तो पहु अवधारउ ॥ २८ ॥ जयवं तं नहु कोऽवि
वियाणइ सामि कहं पुण तं नरकाणइ। तो गोयमगणहरु तं भासइ छज्जवदंतकंति उल्लासइ ॥ २९ ॥ तिहुयणगुरुसिरि-
वीरि पयासिय तस्सरुवि मरमणा छज्जासिय। जइ पर्व ता सामि पिदंसह लाण इक इत्थ वि घरिय अणुग्गह ॥ ३० ॥
इय मियदेविवयणा आइसिय गोयम गुरु संठिय पहुमज्झिय। भोयणसमय तस्स जा पत्तउ तो सज्जणवि वेस निवत्तउं
॥ ३१ ॥ सगमीम च्यारारिहिं तो पूरिय भोयण विहि सगुणि किरि चूरिय। संकरवबंधणि सा आगरिसिय गिहदुवार

जा आविय हरसिय ॥ ३२ ॥ नियमुहवंधवि सत्तवरंचलि तो मियदेवि नणइ करि अंजलि । तुम्ह वि मुहपत्तीय मुह ढंकहु आगछंतचित्तिमासंकहु ॥ ३३ ॥ तो नीमहर वारुग्घारुइ तरकणि डुरहिगंध मुह सारुइ । सप्पमरूय गोमरूय सरिछठ जो पसरंत होइ नहु पिछठ ॥ ३४ ॥ अन्नगंध उध्दरस लहेविण सलवलेइ अवसर जाणे विण । दीसइ अंगआहारिहिं पीणठ नयण वयणनासा परिहीणठ ॥ ३५ ॥ परिकत्तपत्तमन्नम्मि सोय तडुहरिहिं नुज्ञ परिकविय तोय । सो लुलइ चलइ आहारसन्न लुध्दठ रसगिध्दठ अकयपुन्न ॥ ३६ ॥ घत्तसो तत्थ लुलंतठ कम्मिरुलंतठ लोमाहार करेइ लहु । पुणरवि नीहारिय रोगिहि नारिय पूइत्तणि देहाठ नहु ॥ ३७ ॥ नास—एरिस पेरकेविण तस्सरूव गोयम गणनायग विस्सरूव । वेरग्ग अनंगुर धरइ चित्ति चिंतइय अचिंतिय कम्मसत्ति ॥ ३८ ॥ मियदेवि अणुन्ना लहिवि हेव सिरिगोयम चलीयठ अह तहेव । संपत्तठ पहुपयजुय नमेइ करकमल जोमि इय विन्नवेइ ॥ ३ए ॥ तुम्हाण आण पहु सिरि धरित्तु हउं विजयरायनवणम्मि पत्त । जह कहिय.तुम्हि तह चेव दिठ मइं लोढरूव नंदण अणिठ ॥ ४० ॥ आइसह नाह मह तच्चरित्त एयारिस सो हुअ किंनिमित्त । कम्माणि तेण कह अज्जियाइं अइतिरकाणि य जिणि सज्जियाइं ॥ ४१ ॥ इय पुछिय सत्थमणेण तेण पहु वज्जरेइ महुरस्सरेण । इत्थेव अत्थि पुर सयडुवार तिहि राय आसि धणवइ उदार ॥ ४२ ॥ तस्सेह विजयवध्दणऽनिहाण वरखेरूय धन्नधणोहगाण । जसु केरूइ पंचसयाइं गाम नाणाविहधणवणमणनिराम ॥ ४३ ॥ इक्काईतिहिं रछउरू आसि जसु डुम्मइ चित्तिहिं वसइ वासि । जो पारूइ सज्जाणलोयपासि बहुकूरू करेवि निग्घणमहासि ॥ ४४ ॥ चिंताहिगार गामाण तस्स अप्पिय निवेण निग्घणमणस्स । गामीण लोय डुस्सह

करेण सो पीडइ अइकूरचेण ॥ ४५ ॥ नहु तिरकखुक्क खोयरइ गलेइ विसची कम्मिहिं नहु सुसेइ । निसुणंतु वि असु-
यंतो न होइ अइदुब्भररोस समुप्पदेइ ॥ ४६ ॥ आरज्जइ दंजमहापयंध गिणहइ नियहत्थिहिं छग्ग खंच । खोयरइ संतावइ
घार धार नहु कुत्थिय सरयइ कुणइ सार ॥ ४७ ॥ ताडइ तह तासइ निठुरेहिं दढखेड्डुमुट्ठिकसमुग्गरेहिं । कविगुत्तिहिं
बंधइ संकलेहिं छबंधइ रुंधइ अग्गलेहिं ॥ ४८ ॥ न कयावि दयापरया इमस्स खोयाणमुवरि कयनिग्गहस्स । अइदु-
ज्झयझनिद्धंधसस्स नहु धम्म वसइ खलु चित्ति तस्स ॥ ४९ ॥ नहु लज्जइ सज्जइ पावकम्म अज्जइ अकज्ज पयडेइ मम्म ।
इच्चाई माई गमइ काल पयारिस चिर कुचिठय कालु ॥ ५० ॥ उप्पन्न अकयपुन्नस्स तस्स जवि तम्मि रोग सोलस
अयस्स । जरखाससास तह कुच्छिसूल अइदुस्सह दुक्कइ कन्नसूल ॥ ५१ ॥ तह अरिस जलंदर दिट्ठिसुट्ठि सुट्ठसय तणु
परिसमियकुट्ठि । तणुदाह जलोदर सोसपोस इच्चाइ सुदुस्सह कम्मदोस ॥ ५२ ॥ अणुहवइ रयइ अइहीणदीण आम-
ययसि नरीयठ दुक्करीण । तो हंसिय अगयंकारयाण तप्परियरि बहुगुणकारयाण ॥ ५३ ॥ तेहि वि परिचत्तउ सो
अघत्त जिम हंसिहिं छिल्लरनीरसुन्न । तो अट्टरुद्द झाणिहिं मरिवि पढमम्मि नरइ इक्काइ पत्त ॥ ५४ ॥ तिहिं सहिय
दुक्ख उद्धरिय सो य मियपिजयरायअगय सोय । संपच नपुंसयदेहगेह दुरकाण अभंगह पढमरेह ॥ ५५ ॥ सिरिवी-
रनाहि अह गोयमस्स मियपुत्तचरिय पजंपिय असस्स । तह जंबू अगगइ सुहमसामि अरकाय विवागसुयंगठामि ॥५६॥
तह मइ निदंसिय लेसमित्त जं इत्थ जाय मह पय असुत्त । मिच्छादुक्कड त सधे समंतु सिद्धतमग्गि मुणि अजिरमंतु

॥ ५७ ॥ घत्तञ्य मियसुय संधीय गुणअणुरुंधिय गाहावंधिहिं मइं कहिय । नियमणि परिजावइं ते सुह पावइं मणवेयग्गिहि गहगहिय ॥ ५८ ॥

॥ इति मृगापुत्रसन्धिः ॥

अथ जिनगुणोत्कीर्तनेन वोधिस्तद्विपरीतत्वेनावोधिः, एतदर्थोज्ञापकं काव्यमाह—

**वन्नं वयंता जिणचेइयाणं, संघस्स धम्मायरियाइयाणं ।**

**कुणंति जव्वा सुलहं सुवोहिं, अवन्नवाएण पुणो अवोहिं ॥ ५९ ॥**

व्याख्या—वर्णं वर्णवादं कीर्त्तिरूपं वदन्तः प्रजल्पन्तो जव्या मानवाः कुर्वन्ति सुलजां सुवोधिं सम्यग्दर्शनरूपां प्रेत्य धर्मप्राप्तिर्वोधिः, परं केषां वर्णवादमित्याशङ्कापनोदायाह—जिनानां चैत्यानि चेतःप्रसादजनकानि प्रतिमारूपाणि संघस्य चातुर्वर्णस्य श्रमणश्रमणीश्राद्धश्राद्धीलक्षणस्य तथा धर्माचार्यादीनां प्रशंसापराः सुलजवोधयः स्युः, तथैतेषामवर्णवादपराः सत्त्वाः परत्र डुर्लजवोधितामर्जयन्तीति काव्यार्थः ॥ उक्तं च श्रीस्थानाङ्गे—"पंचहिं गणेहिं जीवा सुलजवोहियत्ताए कम्मं पकरंति, तं जहा—अरहंताणं वणं वयमाणे, अरहंतपन्नत्तस्स धम्मस्स वणं वयमाणे, आयरियउवज्झायाणं वणं वयमाणे, चाउवणस्स संघस्स वणं वयमाणे, विविक्कतववंजचेराणं देवाणं वन्नं वयमाणे" इति । तथा—"पंचहिं गणेहिं जीवा डुल्लजवोहियत्ताए कम्मं पकरंति, तं जहा—अरहंताणं अवन्नं वयमाणे, अरहंतपन्नत्तस्स धम्मस्स अवन्नं वयमाणे, आयरियउवज्झायाणं अवणं वयमाणे, विविक्कतववंजचेराणं देवाणं अवन्नं वयमाणे त्ति" ॥

अथात्र श्रीअर्हदादिगुणवर्णवादोपरि श्रीसुबुद्धिमन्त्रिणोदाहरणमाख्यायते—

काश्यामाश्यामितद्वेषिराजवंश्यास्यपङ्कजः[1] । आसीद्दासीकृताराति(र्)विजयी जयभूपतिः ॥ १ ॥ तस्य द्वेधाऽपि सद्बुद्धिर्मन्त्री गम्भीरचारवाद् । राज्यभारस्य सर्वस्य यो विश्वस्यास्ति घस्मरः ॥ २ ॥ सर्वज्ञाज्ञाविधिज्ञात्मा योऽन्यसद्गुरुजनकि-जाक् । श्रीमज्जिनमताम्भोजे लीना यन्मतिषट्पदी ॥ ३ ॥ गुणवर्णनमेवार्हद्गुरूणां गुणधारिणाम् । यः कुर्वन्सततिनैर्मल्यं सम्यक्त्वे कुरुते निजे ॥ ४ ॥ तस्यैवोर्वीभुजो देवपूजाव्यापारसादरः । शिवनामगताशर्मा सोमशर्मा पुरोहितः ॥ ५ ॥ रविचन्द्रप्रकाशेऽपि यदीयस्यान्तर्वेश्मनि । मिथ्यात्वध्वान्तसन्दोहः प्रससार सुदुस्तरः ॥ ६ ॥ अथान्यदा सभासीने राज्ञि मन्त्रिसमन्विते । पुरोहितोऽवदद्भूप किञ्चिज्ज्ञातं त्वया प्रभो ॥ ७ ॥ प्रभुणाऽभाणि किं तत्प्रोक्तस्ततः सोऽप्यूचिवानिदम् । स्वामिन्नहो वणिग्देवा नीरं शीर्षे पुराऽवहन् ॥ ८ ॥ ततः कौतुकिना राज्ञा पृष्टमेतत् कथं भवेत् । शीर्षेऽमीषां यतोऽद्यापि दृश्यते शोभिनी स्फुटम् ॥ ९ ॥ श्रुत्वेत्यमात्यवक्त्राब्जमपश्यन्मेदिनीशिता । यूयमेतद्विजानीथ यावदीति किमेव भोः ॥ १० ॥ शठः प्रतिशठाचाराग्निर्योज्यः खलु निष्ठुरः । वयः प्रतिवचैनैव प्रतिपेष्यः स्फुरद्भिया ॥ ११ ॥ हास्यमस्थानिकं चेतश्च सोढुं शक्यमात्मनि । विमृश्यैतदथाचष्ट मन्त्री शृणुत तात्त्विकम् ॥ १२ ॥ पुरोधाः सत्यगीः किन्तु मूलवार्तां न वेत्त्यसौ । स्वमेवास्त्याहि तत्सत्यमित्युक्ते प्रभुणाऽवदत् ॥१३॥ प्रभो पुरा यदा दैत्याः समुत्पन्ना जनार्दनाः । तदा तदातङ्कवशान्नेशुः सर्वे सुरास्त्वरा ॥ १४ ॥ त्रयस्त्रिंशत्कोटिमिता दैत्यभीत्या प्रकम्पिताः । स्वचतुर्दश रत्नानि

१ आसमंतात् श्यामीकृतानि द्वेषिराजवंश्यानाम् आस्यपङ्कजानि येन सः

वार्धेरन्तरगोपयन् ॥ १५ ॥ लक्ष्मीकौस्तुभदेवद्रुचन्द्रमुख्यानि नीतितः । ततो दैत्यक्षये जाते कार्तिकेयभुजौजसा ॥ १६॥ लेखैरशेषैरारब्धे मथनेऽगाधवारिधेः । मेरुर्मन्थानकीभूतः शेषनागश्च नेत्रकम् ॥ १७ ॥ जज्ञे खाधिकस्थाने सबलात्मा हिमाचलः । सर्वे विलोकितुं लग्ना हर्षमग्ना दिवौकसः ॥ १८ ॥ महारम्भमथो ज्ञात्वा सुरेन्द्रः प्रोचिवान् सुरान् । अनिष्टारिष्टसन्दोहः कश्चिदुत्पत्स्यतेऽत्र भोः ॥ १९ ॥ उत्पातजातनिर्घातसमर्थमवनीतटे । श्रीनेमीशमिहानीयोपवेशयत भोः सुराः ॥ २० ॥ देवाभ्यर्थनया स्वामी कारुण्येन समाययौ । दाक्षिण्यनिधयः प्रायः पदार्थेषु महाधियः ॥ २१ ॥ नैकाकी शोभते स्वामी महादेवस्तदन्तिके । स्थापयामास मघवा जज्ञिरे निर्भयाः सुराः ॥ २२ ॥ रत्नानि जगृहुर्देवाः स्वानि स्वानि यथाक्रमम् । चित्ते मुमुदिरे वाढं गोपितार्थस्य लाभतः ॥ २३ ॥ न किञ्चिदागतं शंभोर्भागे श्रीनेमिसेविनः । पुनर्विलोकयामासुर्वारिधिं विबुधव्रजाः ॥ २४ ॥ तदास्यामो महेशार्थमथ यन्निर्गमिष्यति । इति संतोष्य तं वाचा मेथुः पाथोधिमञ्जसा ॥ २५ ॥ तावत् पातालकुम्भेभ्यः कालकूटः समुत्थितः । स्फुटत्येवातिभरितं चर्वितं बहुपाण्डुरम् ॥ २६॥ विषोग्रलहरीभिस्ते संजज्ञुर्गतसचेतनाः । सहसैव सुपर्वाणः प्रपेतुर्व्याकुला भुवि ॥ २७ ॥ समुत्पेदेऽप्सरःसार्थे हाहाकारः सुनिर्भरम् । मूलक्षितिरियं जज्ञे लाभेऽस्माकमसंशयम् ॥ २८ ॥ जगदङ्घ्रिकृपापात्रं तावत् प्रभुरधावत । पीयूषानयनस्यार्थे कुम्भमादाय मस्तके ॥ २९ ॥ तावद्भम्भुरभापिष्ट मयि सत्यपि सेवके । स्वयं किं गम्यते देहि घटं येन तदानये ॥ ३० ॥ अत्युत्तालतयाऽचालीदीशः कुम्भशिरास्ततः । समानिन्ये सुधां स्वामी तत्पानाद्विविषक्षणम् ॥ ३१ ॥ जीवयामासिवान् वेगात् सुस्थं जज्ञे जगत्त्रयम् । इंभोहिनी स्थिता शीर्षे ततः परमिहार्हतः ॥ ३२ ॥ गलन्ती गर्गरी शम्भोरुपर्यद्यापि वी-

वयते । आस्ते सुरसरित्पूर्वं तृष्णा तदपि भूयसी ॥ ३३ ॥ इत्युक्ते मन्त्रिणा भूपः प्रहस्योचे पुरोधसम् । कीदृगुत्तरमेतेन
दत्ते निर्मलमेधसा ॥ ३४ ॥ विलक्षास्यस्ततः सोऽस्थादस्थानकृतनर्मणा । कर्मणाऽवर्णवादस्य क्षिप्तः पापैकतानधीः ॥ ३५ ॥
वर्णवादेन साधूनामर्हतां चापि धीसखः । सौख्यस्यैकनिधिर्जज्ञेऽमुत्र चापि परत्र सः ॥ ३६ ॥

अथ वर्णवादोपरि दृष्टान्तः—

पाडलिपुत्तम्मि पुरे निवसइ कोसियग वाणिओ आसि । आजम्म दरिद्दोसो दोसो पयडं य मिच्छस्स ॥ १ ॥ तत्थेव वास-
वक्को इब्भो सुस्सावओ वसइ दक्खो । बालवयंसो सो कोसियस्स साहूसु भत्तिरओ ॥ २ ॥ कोसियगो पुण धिज्जाइजत्तओ
तस्स सोमओ नाम । अत्थि दिओ जाइमओम्मत्तमणो समग्गरोसिल्लो ॥ ३ ॥ तप्पाडिवेसिओ कोसिओ य ते दोवि एगगोट्ठिल्ला ।
कारिल्लीए वल्ली किं पुण निंबदुमे चडिया ॥ ४ ॥ अह अभया नयाओ जओ दुण्णो कहिंपि उववित्तो । कोसियपुरओ
विप्पो साहूणमवण्णमुल्लवइ ॥ ५ ॥ निसुणइ नवु पडिसेहइ तुसिणीओ चिट्ठेय कोसियगो । अंधारयम्मि गुलियापडस्स
नणु दुगुंछिया सोहा ॥ ६ ॥ इत्थंतरम्मि तत्थेव आगओ वासवो सुवासिल्लो । आजासिओ य सो सोमएण सुट्ठिओ तुमं
जइ ॥ ७ ॥ तो वासवेण भणियं अइह किं भो कुणंतया तुम्हे । किं हरिसिया व दीसह अतक्किपणाऽम्ह खाणेण ॥ ८ ॥
तो तेणुत्तु नो किं पि तारिसं वासवेण सवत्तं । न तहाभूयं भूयाण साहुनिंदाइ अवरं भो ॥ ९ ॥ परितोसहेउभूयं तुम्हा-
रिसाण एत्थ जए । तो कोसिओ पयंपइ अहो मए किमिह अवरद्धं ॥ १० ॥ उल्लवइ वासवो अह निवारिओ तरसि जइ
न वारयं । तो छडित्ता अवत्थ जासि न कहं तुमं मित्त ॥ ११ ॥ एयाओ विप्पाओ सुसाहुनिंदा अणप्पदप्पाओ । तुममवि

पाविच्चयरो जो सुणसि सयं सकन्नेहिं ॥ १२ ॥ रे जड्ड मोड्ड तुममेत्थ केरिसो दसिसु साहुवग्गं जो । जाउसि सहसजीहो व्व संपयं धिठ्ठ उवविठ्ठो ॥ १३ ॥ ते सोयवज्जिया जो अवन्नवाउं तउं समुल्लविउं । तो अरकइ सिठ्ठिवरो तं सोयं केरिसं कहसु ॥ १४ ॥ धिज्जाइणा पलवियं पुराणवकं सुणेसु अवियकं । भुवयणतज्जणेणं किं तज्जसि गलितुरंगु व्व ॥ १५ ॥ तद्यथा—"एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश । उभयोः सप्त विज्ञेया मृदः शुद्धौ मनीषिभिः ॥ १६ ॥ एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् । त्रिगुणं वानप्रस्थानां यतीनां च चतुर्गुणम् ॥ १७ ॥" तो वासवेण वविथं हंत हउं तुमसि एयवकेण । तुम्हाणदंसणे च्चिय एवं उवदंसियं जम्हा ॥ १८ ॥

सर्वगतो मधुसूदनः । यथा चोक्तम्—

"अहं च पृथिवी पार्थ वाय्वग्निर्जलमप्यहम् । वनस्पतिगतश्चाहं सर्वभूतगतोऽप्यहम् ॥ १९ ॥ यो मां सर्वगतं ज्ञात्वा हनिष्यति कदाचन । तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ २० ॥"

ततो भवतां पृथ्वी वासुदेवः, जलं च वासुदेवः, शौचं च ताभ्यामेव क्रियते, ततो देवेनाधोद्वारधावनमसंगतमेव । जं भणसि मुद्धा साहुणो तत्थ—

"तिलमात्रप्रमाणां तु भूमिं कर्षति यो द्विजः । इह जन्मनि शूद्रत्वं मृतश्च नरकं व्रजेत् ॥ २१ ॥"

ता जुत्तं हलं दाविंता सयं पन्निभगा के तुम्हे ता अरे मोड्ड किं मुहा जीहाए दसं लुणसि, अवसर दिठ्ठिपहाउं, एस पुण कोसिउं अम्ह वालवयंसो—

गुरुणो निंदिज्जंते सुणिऊणं हरिसमावहइ उगुणं । पिच्छंताण वि अम्हाण जेण निसिद्धो न मणयम्मि ॥ २२ ॥ सो कोसिउं पन्नासइ किमहं उंकेमि दोयवयणाइं । सिच्चाइ याइणो अणगणा य को मज्झ अवराहो ॥ २३ ॥ इय जाय हक्किया घामपेण साणाय से पच्छाणा वो । वयणं अजंपमाणा माणाथगमा विखक्कमुहा ॥ २४ ॥ पुणरवि धिज्जाम्मा सो तहेव साहूण निंदमायरइ । कोसियगो पुण तप्पुट्ठिपूरउं अग्गीइ याउ व ॥ २५ ॥ विज्जाहरजुयलमहो समुवेय अंबरम्मि परमाणं । जिणसाहुजत्थिरगिसमाणासं धम्मसज्झाए ॥ २६ ॥ विज्जाहरीइ वुत्तं पिच्छसु कहमेस निंदई मुणिणो । ता सिक्खघेहि खहुमेव देयसाहूण परिचत्तं ॥ २७ ॥ विज्जाइसएण तउ सोखस चप्पाइया महारोगा । धिज्जाइणो सरीरे दोण्णि तहा कोसियस्सावि ॥ २८ ॥ सासो जरो य तेहिं रोगायंकेहिं पीडियंगावो । जीविऊण चिरकालं मरिउं पढमं गया नरयं ॥ २९ ॥ जमिही अणंतकालं सोमरुउ गरुयदुक्खविहुरंगो । वयणामयदोसिल्लो साहूणमवण्णवाएण ॥ ३० ॥ इयरो वि जमिय सुचिरं भवभयं खविय दुक्खसंजालं । दुल्लहबोही होही कहं वि किछेण कम्मवसा ॥ ३१ ॥ इय जो मुणीण निंदइ कुणइ तहऽसो सुणेहि किज्जंति । ते दोण्णि वि संसारे सुदुक्खिया हुंति अणंतं ॥ ३२ ॥ केवलमिह जो निसुणइ याग्इ नहु सत्तियाइ सत्तीए । सो कोसिय किर दुल्लहबोहि जायइ न संदेहो ॥ ३३ ॥

॥ इति साधुजनावर्णवादफलसूचकं ज्ञातम् ॥

अथ ये धर्मतत्त्वार्थं नावबुध्यन्ते दुर्धियस्ते दुःखिनः सन्तो भवं पर्यटन्तीत्याह—

**अन्नाणया दोसवसाणुन्नावा, मुणंति तत्तं न हु किं पि पावा ।**
**नवंति ते दुक्खदरिद्ददीणा, परम्मि लोए सुहविप्पहीणा ॥ ६० ॥**

व्याख्या—अज्ञानताया दोषस्तस्य वशस्तस्य अनुन्नावात्तन्माहात्म्यात् मुणंति जानन्ति तत्त्वं परमार्थं न हु इति वाक्यालङ्कारे किमपि पापाः पापकर्तारः, तेषां किं फलं स्यादित्याशङ्कयाह—नवन्ति तेऽज्ञानवशंवदा अत एव अधार्मिणः दुःखदारिद्र्याभ्यां दीनाः अत्र भवे परत्र जन्मनि च सुखैर्विप्रहीणाः स्युः एतत्सर्वमज्ञातृताजृम्भितमिति काव्यार्थः ॥

अत्र वधूचतुष्कज्ञातमाख्यायते—

अत्रैव हि राजगृहे गजवाजिविराजिरम्यराजगृहे । श्रीमगधदेशपेशलमहीमहीयोऽङ्गनाजरणे ॥ १ ॥ तत्रासीद्दासीकृतधनवल्लोकः सदापि गतशोकः । श्रेष्ठी धनो घनोपमदानः सन्मानभूर्नृपतेः ॥ २ ॥ तज्जायाऽजनि जद्रा निर्मितजद्रा कुटुम्बवर्गस्य । अखिला अबलाः स्वकलाविलासरूपाद्यया विजिताः ॥ ३ ॥ चत्वार इव पुमर्था ध्वस्तानर्थास्तथाऽर्जितमहार्थाः । अजनिषत चतुःसङ्ख्याः सङ्ख्यावर्णितास्तदङ्गरुहाः[1] ॥ ४ ॥ धनपालस्तत्राद्यस्ततो द्वितीयो बभूव धनदेवः । धनदस्तृतीयकोऽजनि धनरक्षितनामकस्तुर्यः ॥ ५ ॥ जार्या आर्याचरिता आसन्नेषामथो मिथोऽद्वेषाः । वेषालङ्कृतकाया निर्मायाः प्रविलसच्छायाः ॥ ६ ॥ श्रीराद्या लक्ष्म्याख्या परा तृतीया धना च धन्याख्या । एताः कुटुम्बजारोद्धरणैकधुरं-

१ पण्डितैर्वर्णिताः.

॥ १९३ ।

धराः प्रकृताः ॥ ७ ॥ अथ कतिचिद्दिवसान्ते स्वान्ते श्रेष्ठी विमर्शमित्यकरोत् । तनुजा ननु आत्मैव हि वर्तिष्यन्ते सुखे-
नैते ॥ ८ ॥ काचिद्वधूः सुभूर्यद्गजायै यदि समजायमायद्गति । कौटुम्बव्यापारविषये तदा नवेयुस्तरां सुखिनः ॥ ९ ॥ सा
मुख्या बोद्धव्या नान्याऽनन्याऽथवा नयोपायात् । मम गृहतोऽपि यस्माद्व्रतं हृदि स्फुरति नैश्चिन्त्यम् ॥ १० ॥ तस्माद्धु-
क्रममूषां परीक्षणं स्वजनसाक्षिकममूषाम् । इत्थं विमृश्य मनसि श्रेष्ठी श्रेष्ठीकृतारसवदः ॥ ११ ॥ उद्यमपरूपाख्यमुख-
स्करमारभ्य निजगेहे । स्वज्ञातिजातिजनतामभिरामामन्त्र्य शुक्तिकुले ॥ १२ ॥ तदनन्तरमेव पुनर्नूतनसाम्बूलपुष्पफल-
दानैः । सन्मान्य पौरवर्गं तत्समक्षं स्नुषाः सर्वाः ॥ १३ ॥ आहूय तत्कराब्जे समर्पयामास पञ्च शालिकणान् । परग्रन्थि-
निबद्धान् पृथक् पृथक् व्यक्तमाख्यच्च ॥ १४ ॥ याचे यदाहमेतांस्तदा प्रदेया अवश्यमस्मान्यम् । ताः प्रतिपद्य तथेति
स्वस्थानमगुः सुगौरविताः ॥ १५ ॥ एतत् किमिति वितर्कं कुर्वाणो जनगणोऽगमद्गेहम् । को वेत्ति कस्य चेतस्त्वसंततर्व
विदग्धोऽपि ॥ १६ ॥ मधुराः पुराकरादिषु शालिकणा रक्षणं किमेतेषाम् । श्वशुरस्यैतैरर्थस्तदाहमुपढौकयिष्यामि ॥ १७॥
इत्यालोच्य प्रथमा प्रोज्झाश्रमके निरादरस्त्वेन । न हि गौरवं गुरूणां वचने खलु मन्दबुद्धीनाम् ॥ १८ ॥ निस्तुषतामापा-
द्यात्ता हुतं जग्धिता द्वितीयकया । श्रेयस्कराः कराग्रप्राप्ता एते स्वयं गुरुणा ॥ १९ ॥ उज्ज्वलवेषे वस्त्रा तृतीयवध्वा
महामयत्नेन । भूषणाकरण्डमध्ये प्रगोपितास्तावदस्तवया ॥ २० ॥ स्फुरद्गुरुतरचातुर्या तुर्या धुर्या समस्तकार्येषु । आकार्य बन्धु-
वर्गं पञ्च कणानुत्कणान् प्रददौ ॥ २१ ॥ एते प्रवर्धनीयाः पृथक्तया संविधाय केदारम् । कार्यमिदं विस्मार्यं न हि

१ सततं यथार्थं.

सोदर्यैः सुवासिन्याः ॥ २२ ॥ इत्युक्तास्तेऽथ निजं ग्राममगुः प्रावृषि प्रवृष्टेऽब्दे । लघुकेदारे प्रसरज्जलयोगात् प्रोप्तवन्त-
स्तान् ॥ २३ ॥ उत्खाय ततोऽप्यारोपितवन्तस्ते पृथक्तया क्षेत्रे । प्रथमे वर्षे प्रस्थः शालिकणानामभूत् पूर्णः ॥ २४ ॥
वर्षे ततो द्वितीये शालीनामाढकः समजनिष्ट । खारी तृतीयवर्षे कुम्भः प्रबभूव तुर्येऽथ ॥ २५ ॥ कुम्भसहस्राण्यभवन्
पञ्चमवर्षे धनप्रकर्षेण । इयती वृद्धिर्बुद्धिप्रागल्भ्याद्धन्यया विदधे ॥ २६ ॥ कतिचिद्दिनपर्यन्ते श्रेष्ठी स्वज्ञातिजातिमा-
मीत्य । विश्राण्य भोजनाद्यं वधूचतुष्कं समाकार्य ॥ २७ ॥ प्रार्थितवान् शालिकणान् श्रीरश्रीरिव यतस्ततो लात्वा
तानार्पयत्कराब्जे श्वशुरस्याध्यक्षमन्येषाम् ॥ २८ ॥ श्रेष्ठ्याचष्टेमां प्रति तानुपलक्ष्यातिलब्धलक्ष्यत्वात् । मद्दत्ताः खलु नैते
तत्त्वं वद साऽभ्यधात् स्वामिन् ॥ २९ ॥ ते तूज्झितास्तदैव हि लक्ष्मीराख्यन्मयाऽऽशिताः क्षणतः । ज्ञात्वाऽऽभरणक-
रण्डाङ्कना जनानन्दिनी प्रददौ ॥ ३० ॥ धन्यंमन्या धन्या विज्ञा विज्ञाय समयमादृतम् । पत्राणि सम्प्रपन्नाः स्वामिंस्ते जज्ञिरे
रुचिराः ॥ ३१ ॥ भूगृहकोष्ठागारान्तर्निक्षिप्ता मदीयजनकगृहे । सन्ति ततस्त्वरितममी शकटोष्ट्रखरर्वृषैर्महिषैः ॥ ३२ ॥
आनाय्य गृहं पूरय भूरय दुर्भिक्षपातभीभारम् । तच्चक्रे स तथैव हि तद्गुणसंवीक्षणप्रीतः ॥ ३३ ॥ प्रणिगद्याभिप्रायं
पप्रच्छ श्रेष्ठिराट् स्वजनवर्गम् । किं साम्प्रतमत्रोचितमाह स्म स यूयमेव जानीथ ॥ ३४ ॥ आख्यदथ ख्यातयशाः प्रथ-
मोज्झनधर्मिणीयकोज्झितिका । रक्षाङ्गणोत्सर्जनपरायणा वसतु मद्गेहे ॥ ३५ ॥ शाकान्नपाककणसंशोधनदलनादिभुक्ति-
सामग्री । कार्या हि भोगवत्या रसनापरिभोगसुखवत्या ॥ ३६ ॥ श्रीशालिशालिकणपथ्यकरक्षणसंस्फुरद्विचक्षणता । मणि-
रत्नाद्यमशेषं रक्षतु खलु रक्षिताख्यवधूः ॥ ३७ ॥ आशाकृत्तुर्यायाः शालिकणप्रगुणवृद्धिपर्यायाः । सर्वोऽपि गृहजनः

स्ताद्योदिष्याः सुगुप्सरोदिष्याः ॥ ३८ ॥ कौटुम्बभारमारोप्य श्रेष्ठी स्वस्नुषाचतुष्केऽसौ । स्वयमारराध धर्मं जैनमशर्मापहमसमम् ॥ ३९ ॥ अस्त्वेयमित्युदीर्य प्रययौ स्वं धाम तत्सगीनजनः । मेधाविशिरोरत्नं धन्यं धन्यं हि मन्वानः ॥ ४० ॥ अत्रान्याऽप्युपनयगीः स्पष्टा षष्ठाङ्गमध्यजागेऽस्ति । जम्बूपुरः सुधर्मस्वामिकृता विस्तरेणैवम् ॥ ४१ ॥ धन्यस्तथा गुरुरसौ ज्ञातिजनोपम्यजाक् श्रमणसङ्घः । वध्वस्तथा च भव्या व्रतानि सलु शालिपञ्चकणाः ॥ ४२ ॥ यथोज्झिताऽपास्य कणान् क्षणात्सा, दुःखिन्यभूत्कर्मकरीव दास्यात् । तथैव दुष्कर्मवशेन जन्तुः, पञ्चव्रतीमोज्झनजातमन्तुः ॥ ४३ ॥ अज्ञानतादोषनिरस्ततत्त्वप्रबोधसंजातसमस्तदुःखः । यत्भ्रम्यते दुर्गतिजालमध्ये, सर्वज्ञनिर्देशविहीनचेताः ॥ ४४ ॥

॥ इति वधूचतुष्ककथा ॥

पुण्योदय विना धर्ममार्गो दुर्लभ इत्येतदुपरि काव्यमाह—

पुण्णोदएणं नणु कोइ जीवो, जिसं समुज्जोइयनाणदीवो ।

मोहंधयारप्पसरं दलित्ता, पिच्छेइ निव्वाणपहं पइत्ता ॥ ६१ ॥

व्याख्या—पुण्य धर्मस्तस्योदयः पुण्योदयस्तेन कृत्वा पुनः कोऽपि जीवः पञ्चेन्द्रियलब्धिभाक् जन्यप्राणी स कीदृग् भृशमत्यर्थं समुद्द्योतितः सम्यक् प्रोज्ज्वालितो ज्ञानरूपः प्रबोधरूपो दीपो येन स तथा, मुह्य वैचित्त्ये मोहयति मतिभ्रममापादयतीति मोहः सप्ततिकोटाकोटिसागरप्रमितस्थितिः, सर्वेषां कर्मणां मध्ये मोहस्यैव प्राधान्यख्यापनार्थं तदभिधानं, स एवान्धकारस्तमोभरस्तस्य प्रसरस्तं दलयित्वा प्रेक्षते अवलोकयति निर्वाणपथं मोक्षमार्गं प्रयत्नादिति काव्यार्थः ॥

तत्थंतराया बहवे पसिद्धा, कोहाइणो वेरिगणा विरुद्धा (समिद्धा)।
हरंति ते धम्मधणं छलेणं, को निज्जिणेई णणु ते बलेणं ॥ ६२ ॥

व्याख्या—तत्रापि यदि कदाचित्सम्यग्ज्ञानोद्द्योतबलेन मोहमहातमःसमवायमपाकृत्य कोऽपि प्राणी सिद्ध्यध्वानमीहते तथापि मार्गान्तराले वैरिणः प्रभूता विघ्नव्यूहविधायिनः तदेव व्याकुर्वन्नाह—तत्र मोक्षमार्गप्रस्थायिनां भव्यानामन्तराया बहवः प्रचुराः प्रसिद्धाः सन्ति। के ते इत्याह—क्रोधादयो वैरिगणाः क्रोध आदिर्येषां ते क्रोधमानमायालोभादयः प्रत्येकं ते चतुर्भेदाः संज्वलनप्रत्याख्यानाद्यास्ते जीवस्यान्तर्वासिनः शत्रुरूपा एव सन्ति, परं किंभूताः ? समृद्धा बलिष्ठाः ते हरन्ति धर्म एव धनं धर्मधनं छलेनापि बलेनापि पुण्यरूपं स्वापतेयमपहरन्ति अनेकेऽपि सिद्धिपथप्रवृत्ताः सन्तस्तैश्छलिताः पश्चाद्वालिताश्च श्रीभुवनभानुवत्तथा कश्चित्तानन्तरङ्गविपक्षान्निर्जयति भव्यो मनोबलमाहात्म्यात्तादृगसदृशस्वचेतःप्रागल्भ्यादिति काव्यार्थः ॥

पावाइँ पावा परिसेवमाणा, धम्मं जिणुद्दिठमयाणमाणा।
अन्नाणकठेहिँ कयाभिमाणा, खिवंति अप्पं नरए अयाणा ॥ ६३ ॥

व्याख्या—पापानि महारम्भसंभूतसत्त्वप्रणिपातजातानि पातकानि पापाः पापसेविनः प्राणिनः सेवमाना भजमानाः, किंभूताः सन्तः ? दुर्गतिगर्त्तप्रपातुकजन्तूनुत्तमस्थाने धारयत इति धर्मस्तं धर्मं जिनोद्दिष्टं भगवत्प्रणीतं न जानन्तः अज्ञायमाना अजानाना अज्ञानकष्टैः पञ्चाग्न्यनुसेवनभूमिशयनानुशीलननीरसाशनपरिजनसमुज्झननगरनिवासवर्जनशीतका-

वसुशीतवातान्नःशानमज्जनशीवातपयातायधिसहननायमौनसमुद्वनापतनुकेशौः कृत्वा परं महातपस्याकारिण इति कृताभिमानाः मजताद्धूरारागिनक्षाः सन्तः क्षिपन्ति आत्मानं नरके भवाग्रगतौ अज्ञानादुर्बोधावरुद्धात्मान इत्यर्थः ॥ अत्रार्थे मौपवमाइमरूपितं पूरणास्यानमाख्यायते, तद्यथा—

इत्थेव जंबूदीवे भारहवासे गुणोहआवासे । विंझगिरिपायमूले विउलसिलापट्टजरथूखे ॥ १ ॥ मणहरअणुवेसंमी विभेलनामम्मि सन्निवेसम्मि । सिट्ठी पूरणनामो कंचणधणकोसिअभिरामो ॥ २ ॥ तस्समया कयाई जाए पुव्वावरसकालम्मि । सुहसिज्जाइठियस्स य चित्ते चिंता समुप्पन्ना ॥ ३ ॥ अत्थि पभूअं धणधन्नसंचयं मंदिरम्मि पुत्तयसा । तो मित्तनाइवग्गं आमंतित्ता सुयहुमाणं ॥ ४ ॥ तप्पभरकं नियजिन्नंगय सेगयं गुणगणेहिं । ठविउं कुटुंबभारे सयमेव चउप्पुडं पत्तं ॥ ५ ॥ दारुमयं नियहत्थे करितु परिहरियसयणसंबंधं । गिण्हित्तसमहमयस्सं पारियव्वस्स पवज्जा ॥ ६ ॥ तत्तो तद्देय काउं तं सय पस गिण्हए विरत्तं । छट्ठं छट्ठेण तयोकम्मेण अईव उग्गेणं ॥ ७ ॥ पारणदिवसे हिंडइ भिक्खं नयरम्मि अंतपंतघरे । चउपुडयं पडिग्गहगं गहिय करे पूरणतवस्सी ॥ ८ ॥ जं पडइ पढमपुडए दीणाणाहाण तं समप्पेइ । जं बीए तं सुणयाईणं दाणं कियाठुत्ता ॥ ९ ॥ सा मच्छकच्छभाणं तइए पुडए पडेइ जा भिक्खा । जं पडइ तुरियपुडए आहारइ अप्पणा तं सो ॥ १० ॥ तं पि इगवीसवारा पक्खालित्ता अलेवं अइविरस । असणमसतो सतो गमेइ कालं सुदीहयरं ॥ ११ ॥ अह पज्जंते नाऊण आउणो अप्पणो स पूरणओ । उत्तरपुरच्छिमाए दिसाए गंतुं परिवसइ ॥ १२ ॥ अह आसि अखिंदा चमरचंचनामेण रायहाणी तो । परिपुण्णदुवालसवच्छराई पालित्तु पवज्जं ॥ १३ ॥ मासं सलिहिय

तणुं मरित्तु अणसणविहीइ अन्नाणो । चमरचंचाइ इंदो उववन्नो चमरनामो त्ति ॥ १४ ॥ तयणंतरमेवेसो उहिनाणं
पउंजई निययं । आलोएइ सुहम्मासन्नासमासीणमइगरुयं ॥ १५ ॥ सीहासणोवरिट्ठियमणेगसुरसेणिसेवणिज्जकमं । सक्कं
चउरासियसहस्सतुल्लअमरिंदपरिवरियं ॥ १६ ॥ नियसीसोवरि कयपयमेयमिमो पासिऊण नणु रुट्ठो । जो जो असुरा
वच्चह एयं वारेह धिट्ठयरं ॥ १७ ॥ तो तेहिं समुल्लवियं सामी एसा हिई तिहुयणस्स । विणिवारेउं सक्का न सक्कतिय-
सासुरेहिं पि ॥ १८ ॥ को लोयणाइं अंजइ सुतिक्खखग्गेण केसरकलावं । को केसरिणो गिण्हई करेण निरजीवियाकंखी
॥ १९ ॥ इइ वुत्तोऽवि न चिट्ठइ जा ता सयमेव एस रोसिल्लो । उच्चिय पहरणमालं पविमित्तु खणेण चमरिंदो ॥ २० ॥
फलिहरयणं पगिण्हिय तत्तो एसो विणिग्गओ तुरियं । उड्ढं उप्पइउं नहयलम्मि आइद्धीहरोसतणू ॥ २१ ॥ तत्तो सजी-
विएसी वीरं विन्नाय सुंसुमारपुरे । अट्ठमजत्तियमिगराइणक्किमावन्नमइसत्तं ॥ २२ ॥ वंदित्तु एयमक्खइ निस्साए तुम्ह
देवरायमहं । जिप्पेमि होसु सरणं तओ गओ चमरअसुरिंदो ॥ २३ ॥ करकयमहक्कगयओ निरग्गलो मयगलो व दप्पिल्लो ।
उप्पइओ अंबरपहमसंखदीवोयहिसमूहं ॥ २४ ॥ सिग्घमवक्कममाणो पत्तो सोहम्मकप्पगाइल्लं । सोहम्मयरूमयमह विमाणमा-
गम्मिगपएण ॥ २५ ॥ पउमवरवेइयं अक्कमित्तु वीएण तह सुहम्मसहं । आरुट्ठिय महासद्देण एवमुग्घोसिउं लग्गो
॥ २६ ॥ अहह कहं नणु जो सुरिंद मह मत्थ उवरिं धरंतो । तुह पाए न हु मणयं मणम्मि संकं समुव्वहसि ॥ २७ ॥
अज्ज न होसि फुडं तुममेरिसदुव्वयणमस्सुयं पुव्विं । सक्को निसुणिय रुट्ठो धिट्ठत्तणमहहमेयस्स ॥ २८ ॥ इय चिंतिय
अक्कोसइ तं तारिसममरिसं पवयगाणं । रे अपत्थियपत्थय गओसि नणु अज्ज निव्वज्ज ॥ २९ ॥ इइ जासिरो सुनिग्ग-

मगि य चवरगआवमाखिसं । चमरस्स दूणएरेंठं करेण कुलिसं मुयइ सक्को ॥ ३० ॥ आगमंतं पवा पिछिय जयजीय-माणसो चमरो । पम्रामुक्को पलाणो अहोसिरो उड्ढपाओ य ॥ ३१ ॥ संजगमउरूचिरूयो जीउं जिणासियकत्तयरसारो । नस्सतो सेयजलं परसंतो फरकजालेसुं ॥ ३२ ॥ जयवं जत्थत्थि पहू तत्थागंतूण सरणमल्लीणो । दोपहु पायाण मज्झंतरम्मि कुंथु य स पविठो ॥ ३३ ॥ चिंतइ सोहम्मिंदो सामत्थं कत्थ परिसमिमस्स । जिणजिणनायगचेइयनिस्साए हियस्स चम-रस्स ॥ ३४ ॥ न हु सप्प पइ पसरइ नच्चसो नच्छिं विणा इहिं जम्मियं । मुंजो न मेहुयाय विणा यहइ नणु ससारस ॥ ३५ ॥ सव्वोऽवि एस महिमा हिमंसुतुल्लस्स वीरनाहस्स । अ मज्झुवरि समेउं उड्ढं सोहम्मकप्पम्मि ॥ ३६॥ तो उत्तिणा जिणेमरमाजोऽय अप्पयं स निंदेइ । असहइ अकज्जमपज्जायारायरणे धुवं खगं ॥ ३७ ॥ साहम्मियसम्माणणाणे तन्नि-ग्गमो मए विहिउं । अरिहंतासायणया जाया मे मंदपुमस्स ॥ ३८ ॥ एवं चिंतिसु मणे सक्को वज्जाणुमग्गमागम्म । वहु मंहरिउं वज्जं चउरंगुलपत्तुमसंपत्त ॥ ३९ ॥ निग्गछसु जो चमरा मुक्कोसि जिणेसवीरसरणेण । जयमत्थि ममाहिंतो न हु नणु तुह तुत्तधम्मस्स ॥ ४० ॥ इय वुत्ते सक्केणं सत्तो निफक्खिय तस्स मिक्खिउं सो । दोवि सगाणं पत्ता वंदिय सिरि-वीरजिणपाए ॥ ४१ ॥ चमरिंदत्तं पत्तं विफलं जायं सु हीलसचित्तस्स । अन्नाणकठ्ठसहं जमिही संसारमवि घोरं ॥ ४२॥ जइ पुण कठेण विणाऽवि कुज्जा धम्मो जिणस्स तेण कहं । सो तक्कयकिरियाए साफल्लं नन्नहा किंचि ॥ ४३ ॥ एवं पूर-णचरियं मुणित्तु अन्नाणकठ्ठणुठाण । दूरेण वज्जियव्वं सज्जीवोयवमरिसुपदे ॥ ४४ ॥

॥ इति पूरणाख्यानम् ॥

अथाष्टमदस्युदासोपरि काव्यद्वयमाह—

न जाइगव्वं हिययम्मि कुज्जा, कुलाभिमाणं पुण नो वइज्जा ।
रूवं नवं इस्सरियं अउव्वं, लद्धुं सुबुद्धी न धरिज्ज गव्वं ॥ ६४ ॥
अहं खु लोए बलवं तवस्सी, सुयाहिउ वा अहयं जसंसी ।
लाभेऽवि संते मुइउ न हुज्जा, तहप्पणो उक्करिसं न कुज्जा ॥ ६५ ॥

व्याख्या—नेति निषेधे जातिगर्वं मातृपक्षगर्वं हृदये कुर्वीत, कुलाभिमानं पितृपक्षाहङ्कारं पुनर्नो वदेत्, रूपं च नवं ऐश्वर्यं प्रभुत्वं अपूर्वं चकारोऽनुक्तोऽपि ज्ञेयोऽत्र लब्ध्वा संप्राप्य सुबुद्धिः सुधीः पुमान् नैव धरेत् गर्वं, एतस्मिन् गर्वे कृते परत्र भवे नीचैर्जातिर्नीचैःकुलकुरूपादिकं प्राप्नुयात् नरस्तस्माद्गर्वो हेयः नोपादेयः सतामिति काव्यार्थः । अग्रेतनमदानाह—अहं खु निश्चये लोके जगन्मध्ये बलवान् न मत्परः कश्चित्, अथवाऽहं तपस्वी तपोलब्धिमान् श्रुताधिको विद्वानहं वाऽथवाऽहकं यशस्वी कीर्त्तिमान्, अथ च सत्यपि राज्यसमृद्ध्यादिलाभे मुदितो हृष्टो न भवेत्, तथात्मनः स्वस्य उत्कर्षोऽपि न कार्य इति काव्यार्थः ॥

तत्र जातिमदोपरि विप्रकथानकमाह—

अत्रैव हस्तिनापुर्यामर्यातङ्कोदयच्छिदि । ब्रह्मदेवाह्वयो विप्रः सोमदत्तात्मजोऽभवत् ॥ १ ॥ शैशवादप्यसौ कुर्वन्न-

१ अरिः शत्रुरेवातङ्कस्तस्योदयं छिनत्ति तस्याम्.

॥१९७॥

वर्वं आशिजं भवम् । वार्यतेऽनार्य आचार इत्यचार्यत गोत्रजैः ॥ २ ॥ तथापि धार्ष्वीयां स आसिमन्योत्तमो भवन् ।
अन्यदीयाङ्गसंस्पर्शमप्यपूतं हि मन्यते ॥ ३ ॥ प्रतिषेद्ध सचेर्ध स ज्ञानमज्ञातजोऽजनः । समाचरंस्तथप्रायं गच्छयत्य-
सिद्ध जनम् ॥ ४ ॥ अन्यदैतस्पितुर्मृत्या तस्पाधिम्यातिरोपिणा । जनकस्यास्पदे चक्रे पुरोधा अन्य एव हि ॥ ५ ॥ भक्ष-
वेषोऽथ निरूथ्यीभूय भूपापमानजाकृ । व्यापाररहितैः पौरैर्निःशङ्कमुपहस्यते ॥ ६ ॥ ततः स चिन्तयामास यिन्याधि-
श्वासयासितः । तत्र कुत्रापि यातास्मि यत्र नाशुद्ध ईक्ष्यते ॥ ७ ॥ न भ्राम्यति कश्चिन्मार्गे बुभुक्ष्याभिमुशङ्कितः । निर्ज-
गाम ततोऽटव्यामटत्येकाकिकाश्रित ॥ ८ ॥ अविदन्मार्गमन्येयुर्कुम्भपस्यामुपेयिवान् । भ्रान्तस्तत्रैव तानेव पश्यति स्वय-
दूषितः ॥ ९ ॥ चिरखा चिरखा जो जो येनैवानस्पर्श द्विजः । एवमप्युग्रपन्थं तं स्पृष्टवानन्त्यजो जवात् ॥ १० ॥ शशाप
कुब्धीरेतं निन्दन् कटुकया गिरा । सुष्ठु रुष्टः सं दुष्टात्मा अघोनोद्यास्य शङ्किकाम् ॥ ११ ॥ मृत्वोत्पेदेऽथ तस्याङ्गजस्वे-
नैव दुराशयः । दमनेत्याख्यया जज्ञे काष्ठः कुलश्च लञ्जकः ॥ १२ ॥ छवेअकस्तरां मातृपित्रोरपि स वामनः । प्रवर्धमानः
पापर्द्धिप्रभृतिक्रूरकर्मकृत् ॥ १३ ॥ नूर्यास्येनासि निर्माय मायायान्मृत्युमासदत् । प्रथममश्वभ्रसंयासी समजन्येप नारकः
॥ १४ ॥ ततो मत्स्यजवं प्राप्य पुनर्नैरयिकोऽभवत् । भ्रान्त्वा भूरिभवान् प्रायः श्वभ्रेषु पुनरप्यगात् ॥ १५ ॥ हीनजा-
तिषु सर्वासु समुत्पद्य सुदुर्मनाः । महादुःखान्यसङ्ख्यानि सेहे देहेऽतिपातकैः ॥ १६ ॥ कृत्वा बालतपः कष्टमभूज्ज्योति-
ष्कनिर्जरः । ततोऽत्र भरते पद्मखेटाख्ये प्रकटे पुरे ॥ १७ ॥ कुन्दवन्ताख्यपण्यस्त्रीसनुर्मेदन इत्यभूत् । सुरूपः सकलः

१ चाण्डालपदयाम, २ प्रभवान् प्रभवित् ३ सोऽन्त्यज ४ द्विजमिति कर्माध्याहार

सौम्यः सुभगः शास्त्रवित्तया ॥ १८ ॥ परोपकारकृद्गम्भीरस्तथापि जनोऽवदत् । किमेष गणिकापुत्रः कीर्त्यते ह्यतिरूपवान् ॥ १९ ॥ क्षुधान्तः पतितो मद्यबिन्दुर्भवति क्षूपकः । यादृशं रूपमेतस्य गुणवत्ता च यादृशी ॥ २० ॥ तादृग्विधा यदा जातिस्तदा स्वर्णं हि रत्नयुक् । गुणैरस्थानसंस्थैः किं क्रियते गतगौरवैः ॥ २१ ॥ चम्पकस्रगमेध्यस्था मेध्याऽपि न शिरश्चटेत् । इत्याद्याकर्णयन्कर्णपुटाभ्यां कालकूटवत् ॥ २२ ॥ विप्रश्चिन्तयामास धिग्मे जन्माधमाधमम् । तावत्केवलिनं मत्वाऽऽसन्नोपवनगं मुदा ॥२३॥ गत्वा नत्वा पपौ तस्य देशनामृतमद्भुतम् । दुर्लभं नृभवं लब्ध्वा सुकृतं येन जन्तुना ॥२४॥ न कृतं किं कृतं तेन धराभारानुकारिणा । अजकेशिसुमेनेव निरर्थेनावतारिणा ॥ २५ ॥ तद्देशनासुधास्वादादानन्दाभ्युदयाधिकः । नत्वा ज्ञानिनमप्राक्षीत्स निजाधमजन्मताम् ॥ २६ ॥ धिग्जन्मजन्मारभ्याख्याद्यथावृत्तमन्वभूत् । गणिकात्मजपर्यन्तं केवलज्ञानवान् मुनिः ॥ २७ ॥ उद्भूताभङ्गवैराग्यभावनाभावितात्मना । ययाचे भगवत्पार्श्वे प्रव्रज्यां मोक्षसाधिनीम् ॥ २८ ॥ दीक्षणानर्हदुर्जातिरपि पापपराङ्मुखः । एष आराधको भावीत्यवेत्यारोपितो व्रतम् ॥ २९ ॥ सम्यगाराध्य चारित्रं बहुकालमकल्मषः । पादपोपगमं भेजेऽनशनं स्वायुषः क्षये ॥ ३० ॥ स्वर्गे स्वर्गित्वमाप्तोऽसौ तुर्ये माहेन्द्रनामनि । विदेहे नृभवं प्राप्य सिद्धिसौधमवाप्स्यति ॥ ३१ ॥ जाइमएणिकेण नि पत्तो रुंभत्तणं दियवरो वि । सयमएहि कहं पुण होहिंति न सव्वगुणहीणा ॥ ३२ ॥

॥ इति जातिमदे विप्रकथानकम् ॥

---

१ धिग्जन्मा द्विजः.

## अथ कुलमदे श्रीवीरदृष्टान्तः

श्रीआदिनाथः प्रथमो जिनेन्द्रस्तस्याययोध्यायहिरागतेन्द्रः । जगाम चक्री भरतः प्रकामं, तमुच्चको नन्तुमितासखासम् ॥ १ ॥ जीयो मरुदेव्यनुषा स नत्वा, प्राक्षीस्सजायां नु विना जिन त्वां । कोऽप्यस्ति किं भावुकतीर्थनेताऽवसर्पिणीजूरपरः प्रणेता ॥ २ ॥ कथे प्रभुस्ते तनयोऽसि पारिव्राज्यं दधानोऽयमहो विसारि । भावी मरीचिर्भरते त्रिपृष्ठः, पूर्वो हरिर्वैरिदयाम्बुवृष्टिः ॥ ३ ॥ विदेहमूकाजिपपुर्यचक्री, कृतस्वदृष्टिः प्रियमित्रचक्री । भावी ततः प्राक्तनकाश्यपवीरः, सोऽयं चतुर्विंशजिनोऽपि वीरः ॥ ४ ॥ श्रुत्वेति चक्री भरतोऽपि जात्यास्याति स तस्यान्तिक एव यात्वा । चक्र्यर्धचक्रियमिदं न मन्येऽचितां परिव्राजकतां च वन्दे ॥ ५ ॥ किं तूदितं त्वं जयितेति वेधा, मीतं वचोऽन्त्यो भगवान् स्वपित्रा । आर्हन्त्यमेतत्रिजगत्सु वन्द्यं, वन्दे ततस्त्यामधुनाऽप्यनिन्द्यम् ॥ ६ ॥ प्रदक्षिणीकृत्य सदा त्रिवारं, तर्क नमस्कृत्य सञ्चक्रिजारम् । सम्पदोन्नाजितनव्यकामधन्यादिमः स्वं स जगाम धाम ॥ ७ ॥ एतद्वचःसंश्रवणान्मरीचिः, समुल्लसन् वा मरुताऽब्धिवीचिः । चिक्षोभवर्ति मेऽकु स यावदीति, त्रिपाङ्गमास्फाल्य स घावदीति ॥ ८ ॥ भाव्यस्त्वदं भागमयशादिदेव, प्राग्यो जिनश्चक्र्यपि वासुदेवः । कुलं ममैवोत्तममद्य सारं, स प्राप तन्नीचकुलायवारम् ॥ ९ ॥

॥ इति कुलमदे श्रीवीरदृष्टान्तः ॥

---

१ देवदानवमनुष्याणां मध्ये कोपि जीवः त्वां विनाऽपरोऽस्यामवसर्पिण्यां भावी तीर्थंकरोऽस्ति किम्. २ प्रसन्नमनाः स चक्री ३ अद्य कदाचित्. ४ मन्दमीहित यसा ताम्. ५ आज्ञा. ६ इत्यर्थे वाक्यम्.

अथ रूपमदो यथा सनत्कुमारचक्रिणा चक्रे तथाऽन्यैर्न कार्यः, सनत्कुमारदृष्टान्तस्तु पूर्वं दर्शितोऽस्ति, ततोऽधुना नाविर्भाव्यते । अथ बलमदोपरि वसुभूतिदृष्टान्तः सूच्यते—

नयरम्मि य रायगिहे संजाओ विस्सनंदि नाम निवो । पत्ती तस्स पियंगू विसाहनंदी सुओ जाओ ॥ १ ॥ धारिणिनामेण पिया जुवराओ विसाहभूइ अणुजस्स । तस्सासि विस्सभूई मरीइजीवो वरंगरुहो ॥ २ ॥ अह विस्सभूइ तरुणो पुप्फकरंडगवणम्मि सकलत्तो । विलसइ सुरकुमरो इव नाणासुहसंपइसमग्गो ॥ ३ ॥ अह सो विसाहनंदी दासीवयणा मुणित्तु भोगसुहं । तप्पत्तीलोहवसा कवडं चित्ते चरित्तु फुडं ॥ ४ ॥ बहु उद्दविओ देसो जो जो चरडेण पुरिससीहेण । तज्जयहेउं जामो पयाणभेरिं दयावेइ ॥ ५ ॥ तं सुणिय विस्सभूई सरलो वारित्तु तं सयं चलिओ । ताव पविट्ठो सहसा विसाहनंदी तदवरोधे ॥ ६ ॥ जिच्चा स पुरिससीहं वलिओ जा जाइ पुप्फवणमज्झे । ता रक्खगेहिं वुत्तं विसाहनंदी इहिं अत्थि ॥ ७ ॥ तो विस्सभूइ चिंतइ मायाइ अहं वणाउ किद्ध बहिं । अह किं करेमि एयस्स मज्झ कंतासु लुद्धस्स ॥८॥ इय कुद्धेण कविट्ठं मुट्ठीए आहणित्तु भूमीए । पाडिय फलाण रासिं एवं तस्सेवगा भणिया ॥ ९ ॥ जो जो तुम्ह सिराइं इत्थं पाडेमि भुमिवलयम्मि । जइ मह न हुज्ज भत्ती पत्तिज्जविसाहनंदिम्मि ॥ १० ॥ तो वेरग्गोवगओ भोगेहिं इमेहिं मज्झ पज्जत्तं । इइ भणिउं पवज्जं गिण्हइ संभूइमुणिपासे ॥ ११ ॥ जह विस्सभूइणा नियभुयदंडबलस्स निम्मिओ माणो । न तहा कायव्वो खलु साहसमंतेहिं पुरिसेहिं ॥ १२ ॥

॥ इति बलमदहृष्टान्तः ॥

अथ श्रुतमदोपरि दृष्टान्तः कथ्यते—

जो सुद्ध मए केरि-
सायरचंदेण जहा नयरसमक्खाणकरणस्सीए । गविय मखेण कालिगसूरिपुरो इइ समुल्लवियं ॥ १ ॥ वायण निमित्तं तो समणु कयं जाणसु निउणं मक्खाणं । किमवि तुमं वि य निसुणसु तो सुत्तं कहसु मह धम्मं ॥ २ ॥ जह विन्नाए गओ सागरचंदेण निम्मिउं तह कालिगसूरीहिं सागरिंदुमुणी । तो खग्गो पायसु खामेई दुव्विणीयत्तं ॥ ३ ॥ नो । कायवो सुयगवो सुद्ध वि विन्नाणसव्वया वि ॥ ४ ॥

॥ इति श्रुतमददृष्टान्तः ॥

अथ तपोमदो यथा द्रौपदीजीवेन सुकुमालिकाजन्मे श्रमणीत्वं प्राप्य कृतस्तथाऽन्यैर्न विधातव्यः, ( दृष्टान्तः ) सविस्तरः स्वयमभ्यूह्यः । लाभमदो यथाऽऽषाढभूतिना कृतस्तथा परैर्न कार्यः । ऐश्वर्यमदो यथा रावणेन सीतापहारविधौ कृतस्तथाऽन्यैर्नाधेयः । अन्येऽपि दृष्टान्ता अत्राधिकारे स्वयमवतार्याः ॥ ( अयमत्र सङ्ग्रहः ) श्रीवीरः कुलमानतो बलजराद्युर्योधनो जातितो, मेतार्यः शकलाक्षसूः श्रुतमदादैश्वर्यतो रावणः । रूपाच्चैर्यकमङ्कन्द्रुपदजा देवी तपोगर्विता, लब्ध्याषाढमुनिर्विडम्बित इमे त्याज्यास्ततोऽष्टौ मदाः ॥ १ ॥

वालग्गमित्तोऽवि न सो पएसो, जत्थोवइन्नो भुवणम्मि एसो ।

जीवो समावज्जियपावलेसो, न पाविठं कस्थ य दुक्खलेसो ॥ ६६ ॥

व्याख्या—वालाग्रमात्रोऽपि न हि स प्रदेशोऽस्ति यत्रावतीर्णो नैष जीवश्चतुर्दशरज्ज्वात्मके जीवलोके, किंभूतो जीवः?

सं सम्यगावर्जिता पापलेश्याः षड्विधा येन स तथाभूतः, परं कुत्रापि न प्राप्तः सुखलेशः जीवस्य तत्स्थानं नास्ति यत्र नोत्पन्नः । यदुक्तम्—

"न सा जाइ न सा जोणी, न तं ठाणं न तं कुलं । न जाया न मुआ जथ्थ, सबे जीवा अणंतसो ॥ १ ॥ लोए असंखजोयणमाणे पइजोयणंगुला संखा । पइ तं असंख अंसा पइअंसमसंखया गोला ॥ १ ॥ गोले असंखनिगोऊ सोऽणंतजिऊ जियं पइ पएसो । अस्संख पइपएसं कम्माणं वग्गणाऽणंता ॥ २ ॥ पइवग्गणं अणंता अणू य पइअणु अणंतपजाया । एयं लोगसरूवं जाविज्ज तह त्ति जिणवुत्तं ॥ ३ ॥

तथा लेश्यास्वरूपमिदम्—

मूलं १ साह २ पसाहा ३ गुच्छ ४ फले ५ भूमिपडिय ६ जरकणया । सबं १ माणस २ पुरिसे ३ साउह ४ जुष्झंत ५ धणहरणं ६ ॥ १ ॥ इति लेश्यादृष्टान्ता ज्ञेयाः इति काव्यार्थः ॥

अथ मानुष्यभवदुर्लभत्वमाह—

सुदुल्लहं पाविय माणुसत्तं, कुलं पवित्तं तह अज्जखित्तं ।
तत्तं सुणित्ता सुगुरूहि वुत्तं, तुम्हं पमायायरणं न जुत्तं ॥ ६७ ॥

व्याख्या—सुदुर्लभं प्राप्य मानुषत्वं नरजन्म, ततोऽपि दुर्लभं कुलं पवित्रं उत्तमकुलजन्म, ततोऽप्यार्यक्षेत्रमासाद्य

तत्त्वं श्रुत्वा समाकर्ण्य सुगुरुभिर्गुरुजनैरुक्तं आचार्योपाध्यायसर्वसाधुभिर्निगदितं धर्मस्वरूपं रे जीव तव प्रमादाचरणं कर्तुं नैव युक्तं यद्वस्तु कुर्वन्ने लभ्यते यत्नेन धार्यते तदेव शोभनं, नात्रार्थे प्रमादः कार्यः इति काव्यार्थः ॥

अत्रार्थे दश दृष्टान्तानाह सानुप्रासकाव्यबन्धेन—

अस्तीह काम्पील्यपुरस्य नाथः, श्रीब्रह्मनामा कृतवैरिमाथः । तस्यास्ति जार्या चुलनी तनूजः, श्रीब्रह्मदत्तोऽजनि लब्धपूजः ॥ १ ॥ विवर्तमानेऽथ कुमारतायां, पुत्रे पिता प्राप मृतिं निशायाम् । चुलन्यथो दीर्घनृपे सरागा, संजातवस्तुम्भवविलनागा ॥ २ ॥ नष्टः कुमारो धरधन्वतुल्यस्निग्धोपयुक्तः पटुशक्तिकल्पः । ग्रामपुरक्षे पर्यटनं विधत्ते, रूपेषु नेत्रेषु सुखं प्रदत्ते ॥ ३ ॥ नानाविधापत्सहितास्ववस्थास्वयं स्वयं धीरमनाः समस्थात् । अस्यैकदैकाकितया अटव्यां, पातोऽभिलक्कार्पटिकः पदर्थ्याम् ॥ ४ ॥ स जातवानापदि यत्सहायः, श्रीब्रह्मदत्तस्य कियत्सुखाय । तत्सर्वथा मे परमोपकारमायोग्य पयेत्यविदत् कुमारः ॥ ५ ॥ यतः—दधात्यसौ द्वौ पुरुषौ धरित्री, ताभ्यामथान्या च धृता धरित्री । स्वात्मस्य बुद्धिः परमोपकारे, न हन्ति यश्चोपकृतं विकारे ॥ ६ ॥ त्वयेऽथ तं राज्यधुरानिविष्टं, मां प्रमदत्तं हि निशाम्य रिष्टम् । मदीयपार्श्वे त्वयका समागन्तव्यं समाधाय मनः सरागम् ॥ ७ ॥ श्रीब्रह्मदत्तः कियताऽपि कालेनाजूवयं नृप इवान्तराले । वर्षाण्यभूत् द्वादश तस्य राज्याभिषेकजश्री रचिता नैरन्त्या ॥ ८ ॥ श्रुत्वेति चिरआतिरसीव लोजी, समाययौ सोऽधिकदीनस्यशोजी । नाखापमात्रं लभते नृपाग्रे, स्थानं यपपूर इवाग्रलाग्रे ॥ ९ ॥ तदाऽमुनाऽसौ घिहितो-

१ मार्गे २ शुभम् ३ मनुष्यश्रेण्या.

ऽस्त्युपायः, कूपानहां माव्यतरं विधाय । ध्वजावहैः साकमसौ चचाल, प्रेदयेति पप्रच्छ नराश्वपालः ॥ १० ॥ कस्य ध्वजस्तैर्गदितं न विद्मः, आकारितः स म्लपितास्यपद्मः । ज्ञातोऽवतीर्य द्विपतोऽवगूढः, सस्नेहमीशेन तदातिमूढः ॥ ११ ॥ जातः सखा मेऽत्र सुखासुखावस्थितावसौ यत्सरलस्वभावः । पुनः प्रवृत्तिं कुशलस्य पृष्टः, कृपीवलेनेव घनोऽत्र वृष्टः ॥ १२ ॥ उक्तश्च राज्ञाऽर्थय वाञ्छितानि, श्रुत्वेति हृष्टः शुभभापितानि । भार्यामपृच्छद्गृहमेत्य वर्णज्येष्ठः स इत्थं सहसाधमर्णः ॥ १३ ॥ ममोपरिष्टात् क्षितिपस्तुतोष, प्रियेऽर्थ्यते किं समयार्थकोपः । तया विचिन्त्येत्यसकौ महर्द्धिश्रितो न मामर्चयिताऽमितर्द्धिः ॥ १४ ॥ उक्तोऽखिलेऽस्मिन् भरतान्तराले, त्वं भोज्यमभ्यर्थय रे विशाले । दीनारयुग्मं त्वथ दक्षिणायां श्रुत्वेति सोऽगाद्भूपतेः सभायाम् ॥ १५ ॥ तत्रार्थयामास नृपादथेति, तथा कुरु त्वं मम भोज्यमेति । पूर्वं यथा ते सदने ततस्तु, त्वत्पट्टराज्यादिगृहे तदस्तु ॥ १६ ॥ द्वात्रिंशदुर्वीशसहस्रसद्मस्वथ प्रतीभ्यं प्रतिमन्त्रिसद्म । प्रत्यन्यलोकं प्रतिसन्निवेशं, प्रतिप्रधानं प्रतिसर्वदेशम् ॥ १७ ॥ तेषु प्रपूर्णेष्वथ युष्मदोकस्यहं बुभुक्षुः क्षितिपास्त्यशोकः । विहस्य राजाह विडम्बनायाः, कोऽसावुपायो रचितोऽधमायाः ॥ १८ ॥ किं तुच्छया याचनयाऽनया ते, कुर्वर्थनां देशगजाश्वजाते । द्विपाधिरूढः प्रगुणातपत्रच्छायास्थितः संचर नित्यमत्र ॥ १९ ॥ स प्राह मेऽनेन परिग्रहेण, प्रभो कृतं दर्शितनिग्रहेण । मन्मानसे स्यादियतैव तोषः, शीतोऽपि हर्षाय न हि प्रदोषः ॥ २० ॥ यतः—यो यावतोऽर्थस्य हि भाजनं स्यात्तावद्धनं तस्य करस्थितं स्यात् । द्रोणेऽम्बुनो नीरधरेण वृष्टे, तिष्ठत्यहो नाम्बुलवोऽद्रिपृष्ठे ॥ २१ ॥ ध्यात्वेति वाक्यं

१ कुत्सितोपानहाम्. २ जातः समूहः.

॥ २०१ ॥

प्रतिपन्नमस्य, आपेन यानेन मुदोपविश्य । भुक्तं नृपस्य प्रथमेऽन्नगारे, ततः क्रमात्तन्मकुवेरगारे ॥ २२ ॥ भोक्तुं स दीनारयुगं जनेभ्यः, स तत्र लाति स्म पुरे घनेभ्यः । मद्भ्योऽत्र पुंसां कुलकोट्य आसंस्तदन्तमप्याप न समयासम् ॥ २३ ॥ देवप्रभावाकरतस्य पारं, लब्ध्वा नृपागारमुपैति सारम् । कदाप्यसौ चेन्न पुनर्नरत्वं, समाप्यते घ्रष्टमिदं हि तत्त्वम् ॥२४॥

॥ इति भोजनोपरि कथा ॥

सुवर्णिनीकर्णसुवर्णकुण्डलं, विराजमास्ते ननु गोल्लमण्डलम् । ग्रामस्तदन्तश्चणको विजाति, भाज्योऽस्ति तस्मिंश्चणको द्विजातिः ॥ १ ॥ तस्यैकदा केऽपि गृहेऽनगाराः, स्वैरं स्थिताः सृष्टमहाविदाराः । कदाऽप्यजूस्य सुतः सदादः, स पातितः साधुपदोः श्रिताद्यः ॥ २ ॥ मोचे मुनीन्द्रैर्जयितैव सवादः, माभूद्रलणे वाऽन्युदितोऽत्र नम्रोद्रः । ध्यास्येति मा दुर्गतिमेव गन्ता, घृष्टास्तदानीं जनकेन दन्ताः ॥ ३ ॥ तर्कं गुरुक्षामथ तैर्न्ययेदि, भाव्येव बिम्बान्तरितस्तदेति । जमाद मास्यापगमेऽथ विद्याश्चतुर्दशाप्येव समथपद्याः ॥ ४ ॥ स माघकालेऽपि समाददीत, श्रद्धासुधर्म कलयोपधीतः । लावण्य-शोभावदमाप यौवनं, यथा प्रसूनोपचयं मधौ वनम् ॥ ५ ॥ चतुष्टयं वेदगतं परङ्गी, मीमांसने कर्कशतर्कसङ्गी । श्रीध-र्मशास्त्रं च पुराणविद्या, चतुर्दशैताः प्रजपन्ति विद्याः ॥ ६ ॥ ज्योतिस्तथा व्याकरणं च कल्पश्छन्दश्च शिक्षा समयोऽप्य-नल्पः । निरुक्तयोऽङ्गानि षडन्यमूनि, मोचकानि शास्त्रेषु बुधैः पटूनि ॥ ७ ॥ पित्राऽस्य पाणिग्रहणं व्यधायि, द्विजन्म-पुत्री किल पर्यणायि । प्रातुर्वियाशयसरे स्वमातुः, सा प्रासचस्यावसथेऽन्यदा तु ॥ ८ ॥ लक्ष्मीयतो सखसु तरुणिन्यः,

१ मेष

संजातवत्यः किल सन्ति जन्यः। नानाविधालङ्कृतिदीप्तिमत्यस्तत्राययुक्ता अपि रूपवत्यः॥९॥समं समस्तः स्वजनोऽपि ताभि-र्जेजप्यतेऽप्यादरतोऽखिलाभिः।एकाकिनी साऽप्यवगण्यमानाऽनलङ्कृता तिष्ठति दूयमाना॥१०॥पुंसः प्रसङ्गोऽतिवरं जिघांसोः शून्यप्रदेशस्य च भूरिपांशोः। कृता न गोष्ठी परमत्र निर्धनैः, संपद्यतेऽभीष्टविधायिनी जनैः ॥ ११ ॥ स्वपत्यपि क्षीण-धनं पुमांसं, त्यजेत्पराभूतिमुपेयिवांसम्। विधोरपूर्णस्य किमत्र चोपा, वपुः समस्तं स्पृशतीव योपा ॥ १२ ॥ एवं वचो-ऽनुसरता समेन, स्फुटापमानं स्वजनव्रजेन। सा प्रापिता दौःस्थ्यमवेत्य पत्युर्यज्जीवतोऽप्यस्ति नरस्य मृत्युः ॥ १३ ॥ शेपास्तु ताम्बूलसुमाम्बरश्रिया, शृङ्गारिताः प्राप्तमहत्त्वसंश्रयाः। तिष्ठन्त्यशेषा गृहदेवतासमाः, सुखेन लब्धाधिकदीप्ति-सङ्गमाः ॥ १४ ॥ यदेकमातृत्वपितृत्ववत्यहं, पराभवं प्राप्तवतीत्थमन्वहम्। नैकं धनं तत्प्रविमुच्य वल्लभः, कोऽप्यस्ति कस्यापि महीतटे शुभः ॥ १५ ॥ दानोज्झितः स प्रिय एव दृश्यते, यः संपदा स्वीयगृहे विशिष्यते। सुवर्णशैलं परितो भ्रटाट्यते, शूरः परं तेन न किञ्चिदाप्यते ॥ १६ ॥ दास्यं धनस्यैव च चर्करीति, पुमान् पुमांसं न तु नंनमीति। धनं धनं यो भुवि वावदीति, लोकोऽनु तं वर्त्मनि बंभ्रमीति ॥ १७ ॥ ध्यात्वेति साऽगात्स्वगृहेऽथ चाणाक्येनापि पृष्टा स्वयम-ब्रुवाणा। पुनः पुना रोदिति निःसमाग्रहे, कृतेऽवदज्जर्तृपुरः शुभावहे ॥ १८ ॥ तर्केण च व्याकरणे न किं स्याज्ज्योतिः-पुराणैः प्रगुणैश्च किं स्यात्। तेषां कवित्वैरपि यन्त्रमन्त्रैर्यैरर्जिता नो कमला स्वतन्त्रैः ॥ १९ ॥ संपद्यते नाम नृणामसह्यः, पराभवः स्त्रीविषयः प्रसह्य। धनेश्वरेदेयार्थिमती स्वजायां, बंभ्रम्यते सैष ततः क्षमायाम् ॥ २० ॥ नन्दस्तदा पाटलिपु-

१ नार्यः. २ आङ् पूर्वादीक्षतेः क्यप्.

अग्रः प्रयाणाति द्विजेन्द्रोऽजिनधाः स्ववद्दिशाः । स अग्निमर्त्यास्त्र पुरातनानां, नन्दद्वितीशां च सदाऽखिलानाम् ॥२१॥
संस्थापितानि क्रमतो हि सन्ति, प्रौढानि पीठानि रुचा लसन्ति । कुहूतिथौ कार्त्तिकमासजायां, नन्दात्मिधानस्य विभोः
सभायाम् ॥ २२ ॥ अस्यासनं पश्चिमं निवेशितं, तत्रोपमत्वं स तदा यथेप्सितम् । तस्या समासीन चचाल कोऽपि,
वचसदा सिन्धुसुतोऽपि गोपि ॥ २३ ॥ तत्रैत्य नन्देन समं सवान्वयकायां समाकम्प समां पवाक्षयः । पश्चोत्रियोऽस्त्येष
इहोपविष्टस्तवक दास्या जगदे स धृष्टः ॥ २४ ॥ सिंहान्यपीठे जगधक्षिगध्यायमेवमेवास्त्विति हस्तुधियाः । प्रकाशयमास-
नके द्वितीये, स्वकुपिकां स्थापितवांस्तृतीये ॥ २५ ॥ तुरकं चतुर्थेऽपि च आप्यमालां, स्वयज्ञसूत्रस्य सतामवाखाम् ।
तदप्य हस्तामकसपेन धृष्टः, कृत्स्येति पादोः स निगृह्य धृष्टः ॥ २६ ॥ वरेण्य एव प्रथमो मदीययोः, पदोः प्रवासान्निसृतो
नवीनयोः । कृत्स्येस्यथाऽयं जनतासमक्षं, समुच्चचारेति वचो नचिष्यम् ॥ २७ ॥ पुत्रैर्मित्रैर्भूम्नपास्तोऽपिनोपं, कोशैर्नूत्यैर्व-
न्मूर्द्धं सुरेपम् । तस्यास्येनं नन्वमत्र द्विपामि, स्थूलं मूर्द्धं चातुर्यन्मोदयामि ॥ २८ ॥ रसभीजसंज्ञमपेष एक, सत्केकिनं
मातृपि मा सकेकम् । मैत्रिष्ट निर्गत्य पुरापपत्यं, स्मरन् स्वविम्बान्तरिताधिपत्यम् ॥ २९ ॥ श्रीनन्दनृपस्य मयूरपोषक-
ग्रामे परिभ्राजकवेषतोपकः । चाणाक्य एषोऽथ जगाम सर्वतः, परिभ्रमन् नृपवधं स्वगर्वतः ॥ ३० ॥ ग्रामेऽथ तत्राधि-
पपुत्रिकायाः, शशाङ्कपानाय समुत्सुकायाः । न दोहदं पूरयितुं क्रियार्थे, कश्चिन्महिष्या इव सत्पदार्थम् ॥ ३१ ॥ अपू-
र्यमाणे निजदोहदे सा, संजातचिन्तायमुखप्रदेशा । अजन्यथो क्षीयितकायशोषा, स्थानाङ्गिकेव प्रथमेन्दुरेखा ॥ ३२ ॥

१ मकटम्

परिभ्रमन् नैद्यकृते परिव्राट्, पृष्टो जगादेति महामतिव्राट् । दत्ताङ्गजं मह्यममुं विधास्ये, मनोरथं चन्द्रमसं च पास्ये ॥ ३३ ॥ इत्थं प्रपन्नेऽहनि पूर्णिमास्या, निर्मापितोऽनेन कृते किलास्याः । विस्तीर्ण एकः पटमण्डपोऽरं, मध्ये सरन्ध्रः परिवध्य दोरम् ॥ ३४ ॥ नीत्वाऽर्धरात्रेऽथ मिलद्धविर्ष्यं, स्थालं प्रपूर्णं पयसात्यलक्ष्यम् । सुप्तोत्थितां तत्क्षणतोऽविशेषां, तामाचचक्ष्यौ पुरतः परेषाम् ॥ ३५ ॥ ईक्षस्व हे पुत्रि पिबेममिन्दुं, स्वाती शुचा शुक्तिरिवाम्बुबिन्दुम् । तयाऽऽहृते रन्ध्रमथो कुतश्चिच्छनैः पिधत्ते स्म करेण कश्चित् ॥ ३६ ॥ अथापनीते सति दोहदेऽस्याः, क्रमेण जज्ञेऽङ्गरुहः सुकेश्याः । सुतोऽपि नाम्नेत्यथ चन्द्रगुप्तश्चन्द्रस्य पानादजनिष्ट हृष्टः ॥ ३७ ॥ राज्यानुसार्यासचरित्रलग्नः, सोऽहर्निशं वृद्धिमवाप निम्नः । चाणाक्यविप्रोऽप्यधिकार्थकामः, क्षोणीतटं पर्यटतीव धाम ॥ ३८ ॥ प्रैक्षिष्ट धातून् क्षितिभृद्दरीषु, स्मृत्वेति सेवा किल सुन्दरीषु । संतोष आलस्यजयातुरत्वे, व्याघातदानाय नृणां महत्त्वे ॥ ३९ ॥ स चन्द्रगुप्तोऽन्यदिने कुमारः क्रीडन् शिशुभ्यो ददददस्त्युदारः । ग्रामादि विप्रेण तदैदं तेन, प्रोक्तं किमप्यर्पय मे जवेन ॥ ४० ॥ बालोऽप्यजाणीज्ञत-क्षीरिमा गा, गृहाण रिक्तः स्वगृहाय मा गाः । आख्यद्द्विजः कोऽपि निहन्ति मा मा, जूर्वीरभोग्येत्यवदत्सुधामा ॥ ४१ ॥ ज्ञातं द्विजेनास्य वचोविलासः, कीदृक् शिशुत्वेऽपि शुभाधिवासः । श्रुत्वा परिव्राट् तनयं समायः, स तं स्वकीये हृदि निश्चिकाय ॥ ४२ ॥ पार्श्वे शिशोरेत्य तदाह वत्स, त्वं भोः समागच्छ गुणैरतुच्छ । त्वां भूमिपालं रचयामि कृत्येष्वभो प्रणष्टावुदिते ममत्वे ॥ ४३ ॥ अमीमिलत्सम्यगवक्रमूलः, क्रियाँस्तयोस्तत्र जनोऽनुकूलः । रूढं बलात्पाटलिपुत्रमान्यां,

१ हविष्यं घृतम्. २ विशेपरहितां निर्विकल्पामित्यर्थः. ३ आङ्पूर्वकादीक्षतेर्ल्यप्.

करम्भेण तु कैटपवर्तें, चन्द्रस्य सोऽकारयदिष्टगर्तम् । ग्रामेऽन्यतः क्वापि गतावुभावप्येवं जहास द्विज ईश्वयभावः ॥ ५५ ॥ को ब्रह्महत्यां यदलंभविष्णुर्मदद्विधातुं जगतीह जिष्णुः । किं चक्रमभ्येति न निष्कलङ्के, कुण्ठत्वमात्मीयकुलेऽपि शङ्के ॥ ५६ ॥ निद्राकृतेऽटन्निशि मार्गतान्तश्चाणाक्य आगात्स्थविरीगृहान्तः । स्थाले विशाले परिवेशितायां, तत्रार्भकाणामथ लेपिकायाम् ॥ ५७ ॥ एकेन बालेन तदन्तराले, क्षिप्तः करः प्रोष्णतया कराले । दृष्ट्वा तमूचे स्थविरा रुदन्तं, चाणाक्यवन्मूर्खमवैम्यसन्तम् ॥ ५८ ॥ पृष्टा सती साह तदा च तेन, साध्यानि पार्श्वाणि पुरैव येन । आसाद्य चाणाक्य उपायमिष्टं, ययौ हिमाद्रिं स ततोऽप्यहष्टम् ॥ ५९ ॥ तत्रास्ति यो पार्वतिको नृनाथस्तेनास्य मैत्री प्रबभूव चाथ । इत्याह तं सोऽवसरेऽथ नन्दं, प्रोन्मूलयिष्याम इमं सकन्दम् ॥ ६० ॥ राज्यं च भागद्वयतो विभज्यादास्याम एतस्य वयं धृतज्याः । कृत्वेत्यथो तेऽप्यनुनन्दनिर्गं, चेलुर्महात्मान इवापवर्गम् ॥ ६१ ॥ आभ्यन्तरग्रामपुरेषु शिष्टिं, स्वां स्थापयामासुरवाप्य तुष्टिम् । चितं प्रपक्वप्रकटेष्टकाभिः, सालं दधानं परितः स्फुटाभिः ॥ ६२ ॥ एकत्र चैकं न पुरं पतत्याचीर्णे बलेऽप्युग्रचमूवितत्या । स्वयं परिव्राट् स ततः प्रविश्य, प्रैक्षिष्ट सर्वत्र गृहादितस्य ॥ ६३ ॥ माहात्म्यमेदयेन्द्रकुमारिकाणां, सोऽमंस्त निर्व्यङ्गमिदं नराणाम् । निर्नाशयामास समीपतस्तास्ततोऽतिमायाविधुरः समस्ताः ॥ ६४ ॥ पश्चात् पुरं तच्चरितं गृहीतं, रुद्धं ततो नन्दपुरं धनीतम् । बहिःस्थितान्तःस्थमहाभटानां, रादिः सदासीन्मिथ उत्कटानाम् ॥ ६५ ॥ तैलं कचित् क्षिप्यत एव तप्तं, नृणां क्वचित्संग्रहणाय क्लृप्तम् । ही वावहीति स्म च यन्त्रवृन्दं, पार्श्वाहतं क्वापि कपाटतुन्दम् ॥ ६६ ॥

१ मातभोंजनम्. २ धृतपृथ्वीकाः. ३ निर्गो देशः. ४ प्राकारम्.

विकस्वरं प्रस्तय जायमानं, ददर्श लोकस्य च दृश्यमानम् । पेतुः सुभन्तो अनवानिमग्नमर्ध, यद्वा यमस्येव च शाकयः
लग्नम् ॥ ६७ ॥ प्रोत्तुङ्गजम्भूशिखरोपमानि, पेतुः रुधिरशालशिरांसि तानि । इयाद्धतानि दणिकानि पातैः, समं नराणां
इवयैस्तदा तैः ॥ ६८ ॥ आकर्णमाकृष्टधनुर्नियुक्ता, नाराचराज्योऽप्यपतन् विचित्राः । प्राणापहारं विदधत्य पतयोः,
सस्सैनिकानामुभयोश्च सैन्ययोः ॥ ६९ ॥ पदे पदे दृश्यत एव स्पर्धी, साक्षे पतन्ती त्रिदशीव चपरी । पट्टस्फुरन्मुकुर-
च्छिन्दिपादैः, प्रावर्तताऽसित्वचिजि कराले ॥ ७० ॥ इत्थं प्रयातेषु कतिष्वहस्सु, प्राप्तेषु नन्दध्वजिनीसहस्सु । दिशो
दिशं गामिषु सेवकेषु, भ्रष्टे सरोधारिणि चा यकेषु ॥ ७१ ॥ चिन्तामवाप्तेष्वधिको नरेषु, क्षीणेषु धान्येषु धनोत्करेषु ।
नन्दः पुलमर्गियति स धर्मद्वारं तदैनिर्जक्षित स्वमर्मं ॥ ७२ ॥ एकेन शक्तोपि रथेन यातुं, यद्याहि तत् त्वं सुखतः
प्रयातुम् । नन्दोऽपि यात्वा निरयाय राय, कन्या च जार्याद्वितयीं विमायम् ॥ ७३ ॥ यान्ती कनी साऽथ पुनः पुनस्तं,
श्रीचन्द्रगुप्तं सुरूपशस्तम् । रागप्रयोगेण निरीक्षते स, स्वकं कृतार्थं इति मन्यते स ॥ ७४ ॥ अथक् तदा नन्दनु-
श्रीचन्द्रगुप्तं सुरूपशस्तम् । रागप्रयोगेण निरीक्षते स, स्वकं कृतार्थं इति मन्यते स ॥ ७४ ॥ अथक् तदा नन्दनृ-
पोऽपि याहि, मपापि सा चन्द्ररथ तदा हि । नवारकासरन्ध्रमेव जग्नास्तस्यामितोयां रचनाजिह्माः ॥ ७५ ॥ चन्द्रो-
ऽजवक्रममनोऽनुरागस्तदा त्रिदशप्याद हरैस्तदागः । मा वारयैना हि नृणां युगानि, साम्राज्यमेतमथ तेऽपहानि ॥ ७६ ॥
प्रपद्य चैतसगराज्यरागते, राज्यं द्विधा चक्रमिद तदा च तैः । तत्रास्त्यथो या विषकन्यका सा, दत्तेशितुः शाखसुवः
सुधासाः ॥ ७७ ॥ प्रज्वास्य वह्निं च विरच्यमाने, तयोर्विवाहे धृतगीतमाने । हस्तेन हस्ते मिलिते विषेण, प्रपीडितः प्राह

१ गतायाम्.

नृपः सुखे (वे) णः ॥ ७८ ॥ मित्राधुना न्नो म्रियतेऽथ निष्ठश्चन्द्रश्चिकित्साविधयेऽजनिष्ट । तावत्त्रिदण्मी न्नृकुटिं दधारोपर्यस्य राज्यस्थितिलोपकारोः ॥ ७९ ॥ अस्तीति नीतिर्व्यवसायवन्तं, सामर्थ्यतुल्यं धनसाम्यवन्तम् । यश्चार्धराज्यापहरं न न्नृत्यं, हन्यात्स तैर्हन्यत एव सत्यम् ॥ ८० ॥ तूष्णीं दधौ चन्द्र इतो ममार, द्राक् पर्वतीयः क्षितिपोऽविचारः । चन्द्रोऽपि राज्यद्वितयं चकार, स्वरूपलक्ष्म्या कमनानुकारः ॥ ८१ ॥ पदातिहस्त्यश्वरथानुगम्यं, राज्यं द्विजेनापि यदाप्यनम्यम् । मित्रस्य माहात्म्यमिदं तनुघ्नं, तथापि तस्मिन् धिगहो कृतघ्नम् ॥ ८२ ॥ स्तेयेन जीवन्त्यथ नन्दमानवा, नव्या जनोपप्लवनाय दानवाः । बहिः परिभ्राम्यथ पश्यति स्वतस्तन्मूलनिर्नाशकमर्त्यमग्रतः ॥ ८३ ॥ असौ बहिःस्थं नलदाममीक्ष्याश्वके कुविन्दं कलयन् परीक्षाम् । मर्कोटकेन स्वसुते स दष्टे, क्रुद्धस्तदीयेऽथ बिले ज्वलिष्ठे ॥ ८४ ॥ निखन्य लोहेन पुरा हुताशं, पश्चात्तृणैर्ज्वालयति स्म साशम् । तन्मूलनिर्मूलनतान्निरूपं, द्विजस्तमालोक्य रुपैकपूपम् ॥ ८५ ॥ स निश्चिनोति स्म न निग्रहप्रदश्चौरव्रजस्यान्य इतो वशंवदः । आकार्य सन्मानमवापितो घनां, नृपात् पुरारक्षकतां च शोचनाम् ॥ ८६ ॥ विश्वास्य तेनापि कृतोपचारा, विषान्नभुक्त्या हृतलोकसाराः । व्यापादिता नन्दनराः परस्वं, कृतं पुरं चौर्यनिषेधतः स्वम् ॥ ८७ ॥ आबिभ्रता कार्पटिकस्य दैक्ष्यं, ग्रामेऽमुना यत्र पुराऽपि भैक्ष्यम् । आज्ञां विधित्सुः स निजक्षमेशस्तल्लोकमित्थं द्विज आदिदेश ॥ ८८ ॥ वंशद्रुमाणां सहकारवृक्षैर्वृतिर्विधेया परितो मनुष्यैः । व्यचिन्ति तैरेवमहो न युज्यते, किं तु प्रमादः कथकस्य लक्ष्यते ॥ ८९ ॥ नेदृग् नृपादेश इहेति मत्वा, वंशद्रुमानेव ततश्च छित्त्वा ।

१ करणशीलः कारुः तस्य. २ प्रकृष्टं धनं यत्र तत्.

वृत्तिः कृताऽऽस्तेषु यथोचितस्त्वाग्रामीयवृन्देय गुणं विदित्वा ॥ ९० ॥ आज्ञानिषेधं प्रथिकाम्य तेषु, द्वारेषु रोधं रचयन् प्रमेषु । ग्रामं दुरात्मा स समृद्धपार्श्वं, प्रख्यापयामास तदा विशालम् ॥ ९१ ॥ आः कृतकर्मास्य कटु द्विजस्य, ग्रामस्य गोपिप्रयशाकुलस्य । दाहः स्वदेहे कुशधातुरक्ताम्बरस्थितिर्धिक्कुधिधारमुक्ताम् ॥ ९२ ॥ स्वकोशवृन्द्यर्थमेमा जनेन, धृतोपतेनाथ समानसेन । द्विजोऽप्युपायं सहसाऽवधार्य, प्रधानलोकान्नगरे प्रतार्य ॥ ९३ ॥ निमन्त्र्य भोज्यं शुचि भोजयित्वा, पश्चात्सुरां पाययति स्म विद्वान् । उत्थाय मत्तेष्वथ तेषु सत्सु, स्वयं स चक्रे नटनं स्वमिभुः ॥ ९४ ॥ प्रवृत्त उच्चैर्द्विज एव गातुं, तच्चित्तजाय प्रकटं विधातुम् । मेधाचतुष्काङ्कितहृत्तया च, स्वास्ये स्फुरन्नीतिमिमामुवाच ॥ ॥ ९५ ॥ द्वे वाससी स्तो मम धातुरक्ते, दण्डत्रयी काञ्चनकुण्डयुक्ते । यश्यो नृपो नो धिकसत्कपोला, पार्थैकशाखेन ममात्र होला ॥ ९६ ॥ एतद्वचो नागरिकोऽसहिष्णुः, कोऽप्यग्रवीद्रूप्यजरोन्मदिष्णुः । तथैव गानं नटनं प्रकुर्वन्मुखे ततोऽप्यन्यधिकं हि चर्वन् ॥ ९७ ॥ शास्त्रे यद्वर्कं व्यसनं श्रितस्य, क्रुद्धस्य मत्तस्य तथातुरस्य । रक्तस्य रागे मृतिमागतस्य, स्वाचितजावः प्रकटो नरस्य ॥ ९८ ॥ मत्तेभपोतस्य हि योजनायुतं, मुखे स्थिताद्युत्पतितस्य निश्चितम् । पदे पदे लक्षमहो सैलोला, पार्थैकशाखेन ममापि होला ॥ ९९ ॥ आह्वान्य छत्तस्य तिलाढकस्य, माषस्य निष्पत्तिमतीव तस्य । सर्वं दधे चानुविधं सलोला, पार्थैकशस्तेन ममापि होला ॥ १०० ॥ अन्योऽप्यवद् मामृपि पूरिताया, मया विधेया त्वरितापगायाः । एकाह्निकवत्सणपास्यलोला, पार्थैकशस्तेन ममापि होला ॥ १०१ ॥ अन्यस्तदा प्राह नयोक्तिलेशैरेका-

१ विचारयुक्तो मार्गो विचारयुक्ता वाम् २ मया सह ३ सक्ष्मीका

ह्विकानेककिशोरकेशैः । आच्छादयाम्यत्रमहं सलोला, वाद्यैकशस्तेन ममापि होला ॥ १०२ ॥ मुक्तांशुकस्यास्त्यनृणस्य
कामिनी, सुगन्धदेहस्य ममानुगामिनी । प्रवासिनो नायुतिनः सलोला, वाद्यैकशस्तेन ममापि होला ॥ १०३ ॥ रत्नद्वयं
प्राह परः प्रणुन्नः, शालिस्तु मे रोहति छिन्नछिन्नः । गर्दन्यपूर्वा जनकेलिदोला, वाद्यैकशस्तेन ममापि होला ॥ १०४ ॥
ज्ञात्वेति तेन्यश्रणकाङ्क्षजातः, स्तोकं धनं याचितवान् दयातः । दिनैकजातांस्तुरगानुपाददे, दिनैकजातं नवनीतमाददे
॥ १०५ ॥ तैः शालिभिः पूरितवान् यथोचितं, कोशान् सृजद्भिः स्वकचित्तरोचितम् । पुनः पुनश्छेदनतः प्ररूढैः, प्रच्छ-
न्नमिन्यैश्चिरकालमूढैः ॥ १०६ ॥ अस्मादुपायात् परतो द्विजातिना, स्वपाशकैर्यन्त्रमयैः समाधिना । हृतं विचक्रे धनिभिः
प्रभुत्वात्स्थालं हि दीनारभरेण भृत्वा ॥ १०७ ॥ आहेति मां यो जयतीह रे यदा, स्थालं स्वदीनारभृतं ददे तदा ।
पुनर्यदाऽहं भवतो जयामि, तदैकदीनारमिहाददामि ॥ १०८ ॥ ईदृक्प्रयोगेण जनाद्धुरीकृतं, घनं धनं स्तोकदिनैः समी-
हितम् । केऽप्याहुरित्थं किल देवदत्तास्ते पाशकास्तेन जिताः सवित्ताः ॥ १०९ ॥ न तीर्यते केनचिदेप जेतुं, यथा द्विजो-
ऽप्यत्र तथोपनेतुम् । न शक्यते मर्त्यभवः प्रयातः, सुदुर्लभः पुण्यबलेन जातः ॥ ११० ॥ इत्थं स चन्द्रक्षितिपो भदन्त-
श्राणाख्यनाम्ना कृतराज्यचिन्तः । कालं सुखेनागमयत् कियन्तं, तृणव्रजं वायुरिवोच्छलन्तम् ॥ १११ ॥ गुरूत्तमा निर्मि-
तवृन्दवासाः, संभूतिमुख्या विजयाः प्रकाशाः । तत्र स्थिताः सन्त्यथ तैर्विनेयास्तीरेषु वार्धेः प्रहिता अमेयाः ॥ ११२ ॥
नवीनसंस्थापितसूरिकर्णे, निवेद्यमाने निशि मन्त्रवर्णे । पार्श्वाद्गुरोः शिष्ययुगेन शुश्रुवे, किञ्चित्तु दुर्भिक्षकृतेऽत्युपप्लवे
॥ ११३ ॥ स्थानं यथोक्तं गुरुणा कियन्तः, शिष्या ययुः शिष्ययुगं तदन्तः । क्षणेन पश्चाद्धवले भविष्णुमाचार्यजं नो

विरह सहिष्णु ॥ ११४ ॥ स्वयं गुरुर्भ्राम्यति चैत्यरक्षये, मध्याह्नगेहेऽनवसः क्रियोऽन्वये । लब्ध चर्ने राति मुदा स्वशि-
ष्ययोर्गुरुर्केऽवशिष्टं विरसं पुरस्तयोः ॥ ११५ ॥ असारतुच्छाशनतः कृशो गुरुर्जज्ञे विकाशस्य जयाद्वियोन्दुरः । समीक्ष्य
शिष्यद्वितयं विचिन्तयामासेति नो चारु कृतं यतो मया ॥ ११६ ॥ क्लेशाः समागत्य गुरोर्विनिर्मिताः, स्वच्छकस्युपायः
क्रियते पुरोऽमुतः । व्यलोकयच्चारदर्शनकृच्चपञ्जनं, तेनेष्टकाले सुधियेव सज्जनः ॥ ११७ ॥ शिष्यावनापृच्छ्य गुरु सदञ्जनौ
श्रीचन्द्रगुप्तायसथे ततोऽञ्जनौ । भोज्यदक्षे जग्मतुरेव सस्वरं, विलोकयामास न कोऽपि तौ परम् ॥ ११८ ॥ लघ्वौ च
भोक्तु सह पार्थिवेन, सौहित्यमासौ नृपभोजनेन । तावेयमेव प्रतिवासरमत्तः, क्षामानृत्कशीयानजयन्दिपसः ॥ ११९ ॥
चाणाक्यपृष्टो वदति स चार्यः, केनापि मे गृह्यत एव आर्ये । न्योक्ता परं नैव मयावगम्यते, स स्वोदरे नीरस एव
ज्ञुज्यते ॥ १२० ॥ वितर्कयामास ततो द्विजाती, रौद्रोऽस्ति दुष्काल इहेष्टघाती । स्यालस्थितः कोऽपि तदस्य ठुके,
प्रभुस्ततामञ्जनतः प्रयुङ्क्ते ॥ १२१ ॥ आहारशालाङ्गणके प्रकीर्णं, सूक्ष्मेष्टिकाचूर्णमपो अजीर्णम् । चाणाक्यदृष्टौ पतितौ
च क्षुधितोर्जातौ पदौ तत्र तदोजयोस्तयोः ॥ १२२ ॥ वायभरः कोऽपि न चेतियान् दृशि, द्वारे निरोधो रचितोऽररे-
स्पृशि । धूमस्तदाऽकारि च वाष्पवाहककलेनाजनिष्टाशिषा ऊरस्मवाहकः ॥ १२३ ॥ तत्कालसुस्तीर्णदृगञ्जनौ तौ, दृष्टौ मणी
वाऽम्बुजलेन धौतौ । स्वोपाश्रये शीतद्वाऽय संप्रेषितावमात्येन ततोऽप्यकम्पे ॥ १२४ ॥ अह स्यमून्यामपवित्रतामयापितो
नृजर्तेति शुशोच चार्मधान् । त्रिदविरूना तायदद्यापि चीर्णता, ललाटपट्टे भ्रुकुटिं च बिभ्रता ॥ १२५ ॥ कृतार्थमन्माय

१ प्रतिवासरं भक्षयतः २ मक्षक . ३ कपाटसन्धि ४ कोपवान्

नृप त्वमाशिषे, विशुद्धवंशप्रभवस्तथा सखे । आबालकालं विधृतव्रताभ्यां, भुक्तं त्वया भाग्यवता यदाभ्याम् ॥ १२६ ॥
गुरोरुपालम्भमुपेत्य संनिधौ स दत्तवानन्तिपदोः कृते विधौ । ऊचे तदानीं गुरुणा विमृश्य, त्वयि प्रवृत्ते जिनशास-
नस्य ॥ १२७ ॥ प्रपालके भूरितरक्षुधातुरौ, मर्यादयेमौ रहितौ गुणाकरौ । शिष्यावभूतां स तवापराधः, सुश्रावका-
न्यस्य न बुध्यगाध ॥ १२८ ॥ श्रुत्वेति पूज्यक्रमयोर्लगित्वा, चाणाक्य ऊचे विधिनाऽर्चयित्वा । क्षम्यं ममाकृत्यमतः-
प्रभृत्यासे तीर्थचिन्ताकृदहं प्रकृत्या ॥ १२९ ॥ चमत्कृतिश्चाथ कदापि हृद्यासीदस्य मन्त्रिप्रवरस्य हृद्या । सवैरिणश्चन्द्र-
धराधवस्य, मा कोऽपि दद्याद्विषमुन्नतस्य ॥ १३० ॥ लग्नस्ततो लक्षितमार्गवेदी, चन्द्रं विषैर्भावयितुं सभेदी । क्षुधप्रवृत्ता
न पराभवन्ति, द्वेष्या यतोऽङ्गं भुवि किं त्ववन्ति ॥ १३१ ॥ पार्श्वस्थितो भोजयति स पिच्छलं, स तस्य मन्त्री विविधं
हलाहलम् । अथान्यदा मन्त्रिणि दूरगेऽस्ति, स गर्भभृद्राज्ञ्यमुना न वेत्ति ॥ १३२ ॥ ग्रासाभिलाषं विपुलं वहन्त्या,
अज्ञाततत्त्वो नृपतिर्लसन्त्याः । स्वस्थालतोऽस्याः कवलं ददिः स्वं, भजन्महामीतिपरं किल स्वम् ॥ १३३ ॥ विषाभ्युद्-
क्त्याऽधिकपारवश्यं, यावद्दधौ सा स्ववपुष्यवश्यम् । ज्ञात्वाऽऽशु चाणाक्य उपाय दध्यावस्या न शुक्तं वमनं प्रसिध्या
॥ १३४ ॥ यतोऽस्त्यसौ गर्भवतीति कृत्वा, शस्त्रं सुतीक्ष्णं स्वकरे हि धृत्वा । विदार्य तस्या उदरं समुद्यतः, कार्येषु पूर्णं
गर्भं कलाभृतः ॥ १३५ ॥ लात्वा कराभ्यां रुतं आज्यपूरिते, चिक्षेप देहोपचयं क्रमादिते । तस्मिन्नकार्पासितस्तु बिन्दु-
साराभिधानमुर्वीप्रथितं विचारात् ॥ १३६ ॥ यद्गर्भसंस्थस्य शिरस्यमुष्य, प्रपेतिवान् बिन्दुरिहासहद्भः । रोमोद्गमस्तत्र

१ चित्ते. २ रक्षन्ति. ३ ददाती ददिः ४ आत्मानम्. ५ गर्भम्. ६ कार्पासिकं.

न जातु जातमान्, कालेन बन्धोऽपि मृतिं स यातवान् ॥ १३७ ॥ तदा नृपः सोऽजनि बिन्दुसारः, मोक्षिमनन्येश्वर-
मन्त्रसुसारः । सुबन्धुनामा तदमात्यवर्य, मार्हत्कदैकान्त इतं प्रसद्य ॥ १३८ ॥ प्रसादपात्रं न कदापि यद्यप्यहं तव क्षाप-
गिराऽप्यगद्य । किञ्चिद्विरं यस्मि तथापि तुभ्यं, प्रियङ्करं कर्णयुगस्य सन्त्यम् ॥ १३९ । त्रिदशिना त्वजननी निपा-
तिता, विदारयित्वा जठरं कथञ्चिता । मित्रीकृतः सोऽपि किमत्र मान्यते, त्वया सपत्नादधिकः शुनाकृते ॥ १४० ॥
श्रुत्वेति रुष्टेन नृपेण धात्री, पृष्टा स्वकीया प्रमदप्रदात्री । तथैव सर्वं हि तयाऽप्यवाचि, पश्चात्समीपत्पुनरप्यपाचि
॥ १४१ ॥ चाणाक्य आगात्समये स दीनं, दृष्ट्वा भृकुट्याप तदामन्त्रीमम् । स्त्रीरागिसारिक्षधिपाश्रयन्ति, ठेका यथा
तेऽपि तथा पठन्ति ॥ १४२ ॥ तस्मिंश्चिदपरी विमुखे व्यचिन्तयत्कात्तृविरोधीव क्रिमथ राति यत् । इर्हि ममोपर्यस्य
जातजीतिः, सद्यः स्वके वेश्मनि जक्रमीति ॥ १४३ ॥ स्वपुत्रपौत्रस्वजनादिकेभ्यः, सर्वं च दत्त्वा गृहसारमेभ्यः । इत्थं
स्वयं भक्षयति स मेधया, केनापि मन्त्राभिपदाशयेच्छया ॥ १४४ ॥ खलेन धर्मिष्ठवर्यं प्रतारितः, कुर्वे तथा तर्हि मृतेन
मारितः । स स्याधया जीवति मातिदुःखितभिरं स्वदुष्कर्मफलोपलक्षितः ॥ १४५ ॥ ततः स्फुरज्जन्धमनोज्ञवासा युक्तिप्रयो-
गेण कृताः प्रयासात् । दिशाश्च नीत्वान्तरमी समुद्गकं, मूर्जे व्यधेलीति च तत्र कुशाकम् ॥ १४६ ॥ आघ्राय योऽमून्
परवासवायान्मनोहपीकेष्वनुकूलतामयान् । नाभ्युपसो ही विषयस्य सेवने, गन्ताऽस्ति सद्यः स यमालये जने ॥ १४७ ॥
चीनांशुकालङ्कृतिसद्विलेपनाधिवृद्धिकासौरजिपुष्पसेवनाः (नं) । शृङ्गारवर्ग मज्जनमङ्गोपयन्, कर्ता स गन्ता यमालयोप-

१ स्त्री च रागी च सारिणी नदी चाभिपश्य तान्

णम् ॥ १४८ ॥ वासस्वरूपस्य निरूपणे पटुः, प्रक्षिप्य वासान्तरवासधीर्वद्धः । तद्भूर्जपत्रं तु समुद्गमापितं, मञ्जूषया मध्य-
गतं व्यधाच्च तम् ॥ १४९ ॥ पेटाऽपि सा तेन हि कीलिकाभिर्वाढं जटित्वा त्वयसो घनाभिः । सद्वारयन्त्रेण नियन्त्र्य
गर्भागारान्तरेऽमोचि सुगन्धगर्भा ॥ १५० ॥ द्वारे प्रदत्तः सुदृढः कपाटस्तत्कोटिमूल्यो रचितो वराटः । वन्धूञ्जिजान्
क्षामितवान्नियोज्य, श्रीजैनधर्मे वसु मुक्तभोज्यः ॥ १५१ ॥ त्रिदण्डचरण्येऽस्ति स गोकुलास्पदे, गत्वेङ्गिनीमृत्युकृदभ्य-
संपदे । ज्ञात्वा पुनस्तं परमार्थमेतया, ध्यात्वा नृपोऽवाच्यहितं कृतं त्वया ॥ १५२ ॥ पित्रा कृतस्ते यदसौ सगौरवस्त्वया
कथं केसरिणेव कौरवः । अवापितो भूरितरं पराभवं, मन्मातृहन्तेत्यवदत्स लाघवम् ॥ १५३ ॥ धात्र्याह माता यदि
मारिता नो, स्यात्तेऽमुना धीरिमरत्नसानोः । तदाऽभविष्यत्तव संभवः कुतः, साम्वा स्वयं ते विषभोज्यसङ्गतः ॥ १५४ ॥
पुरः पितुस्ते मृतिमाप भाविता, विषेण तस्याः क्षयमेक्ष्य धावता । विदारयित्वोदरमाश्वनेन भो, निष्कासितस्त्वं धृतजी-
वितः प्रभो ॥ १५५ ॥ विनिर्गतस्याप्युदराद्बहिर्यकः, संलग्न आसीद्विषविन्दुरुग्रकः । शीर्षे मषीवर्णमयो निगद्यसे, त्वं
विन्दुसारस्तदिहारितैर्वसे ॥ १५६ ॥ राजैतदाकर्ण्य विषण्णहृद्भसाढ्यया विभूत्याऽथ समाश्रितोऽञ्जसा । चाणाक्यपार्श्वे
गतवान्निरीक्षितः, स्थितोऽपसङ्गः स करीषमध्यतः ॥ १५७ ॥ पुनः पुनः क्षामित आदरेण, श्रीकामवासेन नरेश्वरेण ।
उत्कं समागच्छ च राज्यचिन्तनं, विधेहि सर्वं स उवाच भूधनम् ॥ १५८ ॥ अहं गृहीतानशनश्च सङ्गत्यक्तः शुभध्यान-
धरान्तरङ्गः, । सुवन्धुदुश्चेष्टितमाह नो परं, ज्ञात्वाऽप्यसौ भूपपुरस्तदोद्धुरम् ॥ १५९ ॥ स्मृत्वा विपाके कटु चाप्रि-

१ वराटकः. २ अरय एव तरवस्तत्रासिरिवासिः तस्यामन्त्रणम्.

यंकरं, वैशुल्यमेवक्कुलस्समन्दिरम् । न्यासस्यधारोपितसत्करेण, सुबन्धुनोचे नृपतिः परेण ॥ १६० ॥ करोमि नर्फि न्नपतामनुज्ञया, चाणाक्यनाम्नः स्वहितैकलिप्सया । तस्या ह्यनुज्ञामगमत् क्षितीश्वरः, क्रुद्धः सुबन्धुः कलुषीप धीवरः ॥ १६१ ॥ धूपं प्रदद्याद्दिपदन्तरक्षारकं करीषस्य कुक्षुद्भिसङ्गात् । नृपादिलोके भगते ससेदे, देहे करीषाग्निरसुं प्रपेदे ॥ १६२ ॥ चिशुद्धलेश्यो गिरिनिष्पकम्पः, सध्यानतो नैव मनाक् चकम्प । स्वं निर्मिमीते स च पापगर्हणं, पुण्यानुमोदं प्रविनष्टदर्पणम् ॥ १६३ ॥ दध्यौ ज्वलन् सन् प्रसरत्करीषजकृशानुनाशोपघनेषु नीरजः । धन्यास्तके ये विवसन्ति निर्वृतौ, यत्कर्मबन्धस्य न कारणं क्षितौ ॥ १६४ ॥ अस्मादृशाः पापकृतो दुराशया, स्वकीयदेहस्य महासुखाशया । आरम्भजाजोऽसुमतामुपद्रवं, विधाय जीवन्ति मुधैव वै ध्रुवम् ॥ १६५ ॥ मनस्यधन्यस्य जिनेन्द्रशासनप्रवर्तनयोगससापिपासिना । ममेदृशः कर्ममलीमसस्य, मौढ्याद्यजाद्यान्जमनुष्यरूपस्य ॥ १६६ ॥ ज्ञातोत्तमार्हद्वचनप्रजस्य, स्वामोदशल्याकुलितान्तरस्य । इहान्जयन्मे परलोकश्च सद, कीदृग्विरुद्धं चरितं दृशोन्मदम् ॥ १६७ ॥ दध्यौ सुबन्धावपि यः प्रवर्तनं, चर्मेऽपशुध्यै मम पुण्यसत्यजनम् । कृत्वा निजं तस्य न चेत्क्षमामदं, कुर्यां न मत् कोऽप्यधमस्तदान्यहम् ॥१६८॥ प्रेत्येह ये केऽपि हि जन्तुसञ्चया, दुःखीकृता जन्मनि दुर्धिया मया । क्षमन्तु मह्यं जगतीह ते क्षमाम्यपेक्ष्याहं चेतसि सवहन् समाः ॥ १६९ ॥ पापाधिकृत्यावलिरर्दकेन, स्वराज्यकार्येषु मयोत्सुकेन । या मीलिता पापविशारदेन, त्यक्ता त्रिधा साऽप्यधुना दयेन ॥ १७० ॥ यथा यथा क्रूरकरीषवह्निना, दंदह्यते सैव तनौ महामनाः । स्मृत्वापि कर्माणि

१ मज्ञापयवेषु २ पापाधिकृतयः पापोपकरणानि तेषां आवलि

यपुस्तथा तथा, क्षयं दधीनीव घटान्तरे मथा ॥ १७१ ॥ सद्भावनात्नावितहृन्नमस्कृतिं, स्मरन् प्रकुर्वन्निजपापधिक्कृतिम् ।
प्राप्तः समाधिं समजायताशु, ध्यानस्थितः प्रीतिपरः परासुः ॥ १७२ ॥ उत्पन्न उद्दामवपुर्महर्द्धिकः, स्वर्गे सुपर्वोज्ज्वल-
कीर्तिवर्धकः । सुबन्धुमन्त्र्यप्यथ तस्य मृत्युना, नन्दं प्रपन्नोऽग इवोत्तमर्तुना ॥ १७३ ॥ नरेश्वराज्याश्रितलोकविश्रुतत्रिद-
शैकगेहे स जगाम वेगतः । प्रक्षिप्ट वासौकसि चैकमुन्नटं, दृढं कपाटं स्फुटतालकोत्कटम् ॥ १७४ ॥ अस्तीह चाणाक्य-
रमोत्करस्थितिर्ध्यात्वेत्ययःपर्शुकृताररक्षतिः। निष्कास्य पेटां स तदन्तरालगान्, जिघ्राय वासान् धृतगन्धसौरभान्॥१७५॥
ददर्श भूर्जे लिखितं च तत्फलं, बुबोध वासस्य गुणं ततः कलम् । जिघ्रापितो वासमनेन सेवकस्तत्प्रत्ययप्राप्तिकृते तदै-
ककः ॥ १७६ ॥ समीरितः सद्विपयस्य सेवने, स श्राद्धदेवस्य ययौ निकेतने । सर्वेषु शेषेष्वपि शस्तवस्तुषु, प्राप्तोऽमुना
प्रत्यय उक्तयुक्तिषु ॥ १७७ ॥ हा हा मृतेनापि च मारितोऽस्म्यहं, तेनेति दुःखार्दितहृद्गतस्पृहम् । तस्थौ वराकः स
यतीव सर्वदा, स्वजीवितायोज्झितभोगसम्पदा ॥ १७८ ॥

॥ इति समूलश्चाणाक्यदृष्टान्तः ॥

गोधूमशालियवकोद्रवकङ्गुमाषा, व्रीहिः कुलत्थतुवरीतिलराजमाषाः । वल्लः शणत्रिपुटकेक्षुमसूरमुद्गा, रालातसी च-
णकचीनकराजमुद्गाः ॥ १ ॥ धान्यं चतुःसहितविंशतिभेदभाजि, स्याद्यावदत्र भरतान्तरितं विराजि । कृत्वैकतस्तदपि

१ नन्दराजमानन्दमिति वा पदच्छेदः, वृक्षपक्षे आनन्दं प्रफुल्लत्वम्. २ क्रियाविशेषणम्.

कोऽप्यखिलं स्वनिश्र, मस्थेन सर्षपत्रुतेन करोति मिश्रम् ॥ २ ॥ शूर्पं विधाय जरती स्वकरेऽथ काऽपि, प्रस्थं पुनः सृजति सर्षपजं कदापि । धान्यात्ततः पृथगिमं किल पूर्वरीत्या, नो हारितं पुनरुपैति नृजन्म नीत्या ॥ ३ ॥

॥ इति धान्यदृष्टान्तः ॥

अष्टोत्तरस्तम्भसहस्रयुक्ता, कस्यापि भूपस्य सभाऽस्ति युक्ता । तत्राष्टयुक्तशतं समानां, स्तम्भा पुनर्मित्रति कोण-कानाम् ॥ १ ॥ तथानिश तिष्ठति मेदिनीपस्तत्राज्यकाङ्क्ष्यस्ति सुतः प्रतीपः । वृध्दो स भूर्द्ध जनकं निहत्यादास्यामि राज्यं सहसा जगत्याः ॥ २ ॥ आखोषने ज्ञातमिदं तदीयं, केनाप्यमात्येन न शोभनीयम् । तेनापि गत्या क्षितिपस्य शिष्टं, ध्यातं नृपेणापि तदा हृदिष्टम् ॥ ३ ॥ लोभग्रहग्रस्तमनोऽन्तराणां, नैवास्त्यकर्तव्यमहो नराणाम् । किञ्चित्त्वपि-निर्दयताधराणां, परोपघातप्रथितादराणाम् ॥ ४ ॥ कुर्याच्चतो नो कुलजात्यपेक्षां, हृत्येम नो नापि कुकीर्त्युपेक्षाम् । लुब्धः करोत्येव महावकार्यं, हन्त्याप्यस्यं स्वजनं तथार्यम् ॥ ५ ॥ स्मृत्वेति राज्ञा कथितं सुताय, दत्त्वा न नो राज्य-मिदं हृदा यः । द्यूतं स पित्रा विरचय्य जेता, यदा तदा राज्यमिहोपनेता ॥ ६ ॥ जयस्य रीतिं शृणु नोः क्रमागतां, दायस्त्वेको महघो ममासताम् । यदैककं पुत्र जयस्यहो त्वकं, पृथक् पृथक् स्तम्भसहस्रकोणकम् ॥ ७ ॥ एकेन चैव स्वकदायकेन, अष्टोत्तर वारशतं कृतेन । राज्यं तदा भावि तवाविवेयावेवजयेशो नृजनिः सुखेया ॥ ८ ॥

॥ इति द्यूतदृष्टान्तः ॥

एको वणिक् काञ्चनवसुराशः, सद्रत्नराशिं परिरक्षमाणः । कोटीध्वजं तत्र निशार्धमन्ये, मग्नन्ति गेहे वणिजस्तदन्ये

॥ १ ॥ बध्नाति नो स स्वगृहेऽथ तस्मिन्, वृद्धे गते क्वापि पुरे परस्मिन् । विक्रीणितान्यन्यपदोद्भवेभ्यः, पुत्रैर्वसून्यस्य तदा जनेभ्यः ॥ २ ॥ कोटिध्वजोऽस्माभिरपि प्रबध्यते, तदा कुशोभा स्वगृहान्निषिध्यते । कृत्वेत्यथैते वणिजोऽगुरागतं, वृद्धं विना स्वस्वपदे यथागतम् ॥ ३ ॥ सद्मागयौ स स्थविरोऽपि मण्यावलीप्रणाशं श्रुतवानपुण्यात् । कृत्वेति मद्गल-लताऽर्पणीया, निर्वासितास्तेन सुताः स्वकीयाः ॥ ४ ॥ पुत्राः सृजन्ति स्म परिभ्रमन्ते, सर्वत्र रत्नानि तु नो लभन्ते । साऽप्याप्यते रत्नलता सुरेभ्यः, पुंजन्म यातं न लभेन्महेभ्यः ॥ ५ ॥

॥ इति रत्नदृष्टान्तः ॥

स्वप्ने पुरा कार्पटिकेन केनचिद्ग्रस्तं हि दृष्टं शशिमण्डलं क्वचित् । ऊचे स्वकानां सहचारिणां पुरस्तदा परेषां स भव-न्मुदाङ्कुरः ॥ १ ॥ तैर्निर्विचारैः कथितं कदुत्तरं, त्वं लप्स्यसे मण्डकमेकमुत्तरम् । लब्धो गृहस्थादनिकोत्सवेऽमुना, क्वचित्सखण्डः स कुबुद्धिकेतुना ॥ २ ॥ स्वप्नं तमेवैक्षत मूलदेवस्तत्रैव तस्यां निशि चारुदेवः । सुबुद्धिमाँश्चिन्तितवान-मायी, स्वप्नो न मे मण्डकमात्रदायी ॥ ३ ॥ व्याख्याविशेषादिव नूनमेतादृग्जातमेतस्य फलं सुचेताः । दध्यौ स कस्यापि पुरोऽस्मि वक्ता, स्वप्नं निजं स्वप्नविदोऽरिपक्ता ॥ ४ ॥ प्रसूनताम्बूलफलैः सपर्यामाधाय युक्तः शुभबुद्धितर्या । स्नात्वा ततः श्वेतपटं वसानः, प्रोचे पुरः स्वप्नविदोऽपमानः ॥ ५ ॥ तदग्रतः स्वप्नविदाह ससमे, साम्राज्यलाभोऽस्ति तवाह्नि निःसमे । पुरेऽथ तस्मिन्नृपतिर्विपन्नः, सुतोज्झितः सारबलप्रपन्नः ॥ ६ ॥ निर्पद्विपछत्रतुरङ्गचामरादिपञ्चदिव्यानि नरा

१ निपः कलशः.

महत्तराः । मुक्ता तदा तत्र पुरेऽध्यवासयन्, ह्यदीप्सितं स्वीयममी असाधयन् ॥ ७ ॥ तैः पञ्चसत्कैरपि मूलदेवः, कृतः स दिव्यैः सहसा नृदेवः । पूर्वोदितः कार्पटिको व्यचिन्तयन्निशम्य तद्भाग्यकथामथेति यत् ॥ ८ ॥ यदीदृशं स्वप्नमपो विलोकमान्यहो कदाभिन्निजभाग्यवत्तया । व्याख्याप्य विद्वन्य वपेमि निर्भ्रमं, साम्राज्यमुत्थांस्तु तदा हृतक्रमम् ॥ ९ ॥ ततः मद्गृहयुग्मदगोकुलानि, दध्यासये भ्राम्यति सोऽखिलानि । स्वाप्ने शुभस्वप्नविलोकने पुनस्तत्पानतो हीति कदाप्युपावित्तः ॥ १० ॥ न दैवयोगात्कममप्यवाप, स्वप्नं हि तादृक्समसौ सपापः । तथा नरत्वं चिगतं न लभ्यते, स्वारेलयसुखे-जमत्र सन्मतेः ॥ ११ ॥

॥ इति सङ्क्षेपतो मूलदेवराजपुत्रस्वप्नफलकथानकम् ॥

पुरं विजावीन्द्रपुरं महत्तम, धनेन धान्येन जनेन सत्तमम् । तत्रेन्द्रदत्तः समभून्महीपतिः, सुपर्वशालीव नयः शचीपतिः ॥ १ ॥ जाता वरेण्या वशवर्तिनीनां, द्वाविंशतिस्तस्य सुता जनीनाम् । एके जगन्स्येकयशा प्रसूतास्ते जज्ञिरे साधुजिरमणताः ॥ २ ॥ अथेन्द्रदत्तेन नियोगिपुत्री, धरावतीर्णेव सुरेन्द्रपुत्री । कदा विवाहावसरे परं सा, दृष्टा ततोऽमोध्यमुना रिरंसा ॥ ३ ॥ अथाऽतुल्यानवती सती सा, कदापि दृष्टा स्वदृशा महीशा । रत्या समाऽमात्यगृहोपरिष्टात्ततोऽनुगाः कस्य सुतेति पृष्टाः ॥ ४ ॥ तैरुक्तमेषा युवती महीनाकृतादरा राजति तावकीना । एकां तया साकमथेन्दुकान्तां, ततः स भूपोऽप्युषितोऽवतो ताम् ॥ ५ ॥ तदोदरेऽस्या उदियाय गर्भः, प्रापुष्टणोऽरण्यमुखीव दर्भः । नियोगिनाऽऽ-

१ चिन्तामणि रत्नवत् २ हे पृथ्वीपते

ख्याथि पुरेति तस्या, ज्ञाप्या त्वया गर्भनवा समस्या ॥ ६ ॥ तया मुहूर्त्ते च दिनं स्वपित्रे, न्यवेदि तेनेदमलेखि पत्रे । नृपोक्त्यभिज्ञानमुखं रहस्यं, मेधाविना तत्र च दुर्निरस्यम् ॥ ७ ॥ दिनेषु पूर्णेषु सुतोऽपि जज्ञे, चत्वार आसँस्तनयास्तदन्ये । दासोद्भवाः पर्वतकोऽग्निकश्चान्यः सागरो बाहुलकश्च पश्चात् ॥ ८ ॥ नाम्ना सुतोऽभूत्स सुरेन्द्रदत्तः, प्राप्ताष्टवर्षो गुरुभक्तिचित्तः । पित्रा कलाचार्यमथोपनीतः, कलोच्चयं शिक्षितवान् विनीतः ॥ ९ ॥ आर्यो यदा शिक्षयति स्म गानादेख्यादिकाः सद्गणितप्रधानाः । कला अमूस्तर्हि नरेन्द्रपुत्रास्तस्यैव विघ्नं प्रथयन्त्यमित्राः ॥ १० ॥ न मन्यते तत्कृतमन्तरायं, स मन्त्रिसूः स्वं त्वधिकृत्य कायम् । कथं कथञ्चित्स्वगुरुप्रणीताः, सद्बुद्धिना तेन कला गृहीताः ॥ ११ ॥ द्वाविंशतिर्भूपसुताः कलोहं, ते ग्राह्यमाणा इव दुग्धदोहम् । गुरुं कुवाक्यैरपि तर्जयन्ति, देहे[1] प्रहारन्व्यथितं सृजन्ति ॥ १२ ॥ गुरुर्यदा ताँस्तुदति व्यलीकानेत्य प्रसून्यः कथयन्त्यभीकाः । आर्य तदैतास्तु पराभवन्ति, स्त्रीणां न पुत्राः सुलभा भवन्ति ॥ १३ ॥ अमूदृशास्तेऽपि च तस्थिवांसो, जाड्याश्रिता वा किरणाः सुधांशोः । काचित्कला तत्र न शिक्षिता तैरुरीकृतोद्दामविवेकघातैः ॥ १४ ॥ इतोऽस्ति राजा मथुरानगर्यां, जिताद्यशत्रुर्जितदेवपुर्याम् । नाम्नाऽभवन्निर्वृतिरस्य पुत्री, सालङ्कृती रूपरमाधरित्री ॥ १५ ॥ गताऽन्यदा सा पितृपर्षदन्ता[2], राज्ञा न्यगादीति तदा समन्तात् । वरः सुते यो हृदि रोचतेऽद्य, त्वया स मह्यं सहसा निवेद्यः ॥ १६ ॥ तयाऽन्यधायीति तदात्यसूयापरो रिपौ यः सुभटश्च भूयात् । वामेऽक्षिण यो विध्यति तात राधां, भर्ता स शोभां विदधात्यगाधाम् ॥ १७ ॥ वाक्यात्पितुः साऽथ समग्रसामग्रीतश्च-

१ देहे. २ पितृसभान्तः.

चाखेन्द्रपुराय नाम । श्रुत्वेन्द्रदत्तक्षितिपस्य दारकान्, चापस्वरानद्भुतरूपधारकान् ॥ १८ ॥ वृत्तं विदित्वेदमथेन्द्रदत्त, रूपेण दध्यौ स न कोऽपि मत्तः । राजाऽपरो यत्तरोऽस्त्ययेनं, स्वयंवरा मत्पुरमाप येन ॥ १९ ॥ आकारितास्तेन समभ्रूपास्तदा स्वशोजामततायनूंपाः । महाविभूत्या समुपेयिवांसः, पुराद्बहिस्तेऽप्यथ तस्थिवांसः ॥ २० ॥ चक्रे पुरं तेन चखरथार्कं, यन यथा कुशखसतताकम् । रङ्गादिमो मण्डप एक उच्चैः, कृतो बहिर्निर्मितचित्तमुख ॥ २१ ॥ कृताष्टचक्रोपरि तत्र धीतुल्यकैकतोऽधोऽद्भुतदायिनी तु । येध्येपुणा वामकनीनिकायां, साऽधोमुखैर्धन्विजनैः सजायाम् ॥ २२ ॥ संनद्ध सार्कं स्वसुतैः स निर्ययौ, नृपो यदी राजसुताऽप्युपाययौ । स्वयंवराखण्डलिसङ्गसाङ्गी, वरेण्यखायस्यमयी कृशाङ्गी ॥२३॥ स्वस्वासदेऽस्थात् क्षितिभृत्कलापस्तथाऽन्यथोपकोऽपि मनस्सपापः । स्वयंवरस्तादृगजनुत्तमुख्या, यादृग्वनौ द्रौपदिकाम-ह्वित्या ॥ २४ ॥ श्रीमाखिनामा प्रथमोऽङ्गभासः, प्रोक्तस्तदा भूमिभुजा कृपातः । जित्वाद्य वेधप्रविविम्बितामिमां, पाञ्चालिका धाहि सुतां सराज्यमाम् ॥ २५ ॥ ततोऽकृतान्यासविधिः कखादौ, सोऽप्युत्थितः स्वायवनाम्य पादौ । धनुर्धरीतुं न परं शशाक, द्विजो यथा हंसगतं यथाकः ॥ २६ ॥ श्रार्च करे तत्कथमप्यनेन, यतस्ततो यास्थिति कम्पितेन । व्यमोचि याणः फखजारजुषः, शासीव नभः स च मक्ष्मः ॥ २७ ॥ त्रिद्व्येकसङ्ख्यान्यरकान्तराणि, स्पृष्ट्वा शरास्तत्र सहस्रराणि । नृणामजय्यस्य यदि च केषांचित्क्षिपतन्ति स्म ततः परेषाम् ॥ २८ ॥ ततो व्यधात्सोऽधृतिमेवमुर्वीपतिर्यदेजिर्दपितोऽसि गर्वी । आख्याप्यमात्येन किमादधासि, स्वामिन्मुखे श्यामखतामिवासिः ॥ २९ ॥ राजाऽऽह पुत्रैरधम-

१ वेगेन २ मेषा . ३ निर्मिता चित्तस मुद् हर्षो सेन स ४ सह राज्येन मा लक्ष्मी सराज्यमा ताम् .

प्रधानः, कुतोऽहमेतै रचितापमानः । मन्त्र्यन्यधान्मामकपुत्रिकान्नूः, सुतोऽस्ति तेऽन्योऽपि लसत्कलान्नूः ॥ ३० ॥
सोऽस्ति क्षमो वेधविधेर्विधाने, राज्ञोऽप्यभिज्ञानमवाचि जानेः । आकारितो मङ्क्षु सुरेन्द्रदत्तः, क्ष्मापेण हृष्टेन तदाऽब्ज-
चित्तः ॥ ३१ ॥ आश्लिष्य चोक्तं सुत पुत्रिकाद्दग्भिदाऽष्टचक्राण्यवभिद्य तादृक् । स्वयंवराराज्यरमाऽप्यजेया, त्वयाऽ-
धुनाऽऽत्मीयकरेऽभ्युपेया ॥ ३२ ॥ वचस्तथेति प्रतिपद्य नेतुः स्वरूपनिर्जितसितमत्स्यकेतुः । ततः कुमारः स्वकरे निनाय,
स्थाने स्थिरीभूय धनुर्जयाय ॥ ३३ ॥ चत्वार एतत्सविधे च चेटकाः, स्थिताश्चतुर्दिक्षु सखड्गखेटकाः । तत्पार्श्वयोरप्यु-
भयोः स्वपाणौ, स्थितौ भटौ द्वौ भयकृत्कृपाणौ ॥ ३४ ॥ भ्रष्टः क्वचिद्यद्यधिकृत्य लक्ष्यं, छेद्यं तदा त्वच्छिर एव दक्षम् ।
वदन्नुपाध्याय इति स्ववक्त्रे, भयं कुमाराय ददर्श वक्रे ॥ ३५ ॥ द्वाविंशतिस्तेऽपि तदा कुमारा, उद्भ्रान्तवाचः स वद-
न्त्यसाराः । विध्यत्वसौ मेति वलाद्वदन्तः, कुर्वन्ति विघ्नं च मिथो हसन्तः ॥ ३६ ॥ भटद्वयं तद्धृतिभुक् चतुष्टयं,
द्वाविंशतिं क्ष्मापतनूरुहामयम् । कुमार एवागणयंश्च जानन्नथाष्टचक्रान्तरमेकतानः ॥ ३७ ॥ तस्मिन् शरव्ये विनिवि-
ष्टदृष्टिः, स्थानेऽन्यतश्चाकृततत्त्वदृष्टिः । पाञ्चालिकां वामदृशि प्रवीणः, क्षणाज्ज्ञानान्तर्विभिदेऽत्यरीणः ॥३८॥ उत्कृष्टशब्दैः
किल साधुकारं, चक्रुर्जनास्तस्य तदाऽनिवारम्। कन्यां स धन्यां विधिनोपयेमे, सार्धं तया भोगसुखैश्च रेमे ॥३९॥ कर्तुं यथा
दुष्कर एष राधावेधो वुधस्यावगणय्य वाधाः । स जातु सिद्धिं लभते सुरेभ्यः, पुंजन्म भूयो न लभेन्मदेभ्यः ॥ ४० ॥

॥ इति सुरेन्द्रदत्तकथानकम् ॥

१ अत्यनाकुलः.

ह्रदोऽस्ति साहस्रिकयोजनाश्रितः, प्रपञ्चवान् शैवलमालिकावृतः । छिद्रं बभूवैकमथान्तरस्य, ग्रीवा ममौ यत्र च कच्छपस्य ॥ १ ॥ स कच्छपो वर्षशते व्यतीते, प्रसारयेत्स्वां धर्मर्नि प्रतीते । प्रसारिता तेन निजा शिरोधिश्छिद्रे नभोधिष्ण्यदशाऽप्यबोधि ॥ २ ॥ तां पुण्यमालामिव चन्द्रिकायाः, दृष्ट्वा गतो गोत्रजमालिकायाः । आकारणार्थं सहितस्तयाऽयं, प्राप्तः पुनस्तत्र निरन्तरायम् ॥ ३ ॥ दिशो दिशं नेत्रयुगेन पश्यंश्छिद्रं न तस्मैदितवानवश्यम् । तदप्यसौ नो लभते सुरेन्द्र्यः, पुंजन्म भूयो न लभेन्मर्त्येभ्यः ॥ ४ ॥

॥ इति चर्म (कच्छप) दृष्टान्तः प्रोक्तः ॥

प्रष्टं युगं प्राग्दिशि नीरराशेः, शम्याऽपतत्पश्चिमदिक्प्रकाशे। छिद्रे परिभ्रम्य युगस्य शम्या, विशेत्कदाऽपि स्वयमेव रम्या ॥ १ ॥ छिद्रेऽपि तत्रोर्मिमहासमीराहता पयःपूरचलच्छरीरा । साऽपि प्रवेशं लभते सुरेन्द्र्यः, पुंजन्म भूयो न लभेन्मर्त्येभ्यः॥२॥

॥ इति युगशम्यादृष्टान्तो नवमः ॥

स्तम्भोऽजयस्कोऽप्यथ सोऽष्टमाणः, सुरेण चक्रे कणसारपुरावः । स्तम्भास्तदीया अपि निर्विभागाः, कृताः समग्रा नलिकावलागाः ॥ १ ॥ पश्चादयौ मन्दरचूलिकाया, शयालुयस्कोमलतूलिकायाम् । अणूँस्तदीयान् सकलान् पवेन, पृथक् पृथक् फूत्कृतवान्मुखेन ॥ २ ॥ कश्चित् पुनः स्तम्भमिमं महिष्ठं, दिशो दिशं चूर्णनतः प्रणष्टम् । करोति सेन्द्र्यः परमाणुकेन्द्र्यः, पुंजन्म भूयो न लभेन्मर्त्येभ्यः ॥ ३ ॥

॥ इति स्तम्भदृष्टान्तो दशमः ॥

---

१ ग्रीवाम् २ ग्रीवा

नरभवोपरि दश दृष्टान्ताः प्रथमपदे समुद्भाविताः । अथ द्वितीयपदस्यायं परमार्थः—नृभवे प्राप्तेऽपि पवित्रं कुलं दुर्लभं । कुले प्राप्तेऽपि आर्यक्षेत्रं विना न धर्मप्राप्तिः । तत्राप्यार्यक्षेत्रे गुरूक्तं तत्त्वश्रवणं दुर्लभं । यदुक्तम्—" भूएसु जंगमत्तं तत्तो पंचिंदियत्तमुक्कोसं । तेसु वि य माणुसत्तं मणुअत्ते आरिओ देसो ॥ १ ॥ देसे कुलं पहाणं कुले पहाणे य जाइमुक्कोसा । तीइ वि रूवसमिद्धी रूवे वि बलं पहाणयरं ॥ २ ॥ होइ बले वि य जीयं जीए वि पहाणयंति विन्नाणं । विन्नाणे सम्मत्तं सम्मत्ते सीलसंपत्ती ॥ ३ ॥ सीले खाइयभावो खाइयभावे य केवलं नाणं । केवलिए संपत्ते तत्तो परमक्खरो मुक्खो ॥ ४ ॥ पन्नरसंगो एसो संपन्नो मुक्खसाहणोवाओ । इत्थ बहू संपत्तं थोवं संपावियव्वं ते ॥ ५ ॥ " अथार्यक्षेत्राण्यमूनि—" मगहंगवंगकासीकलिंगकुसकोसलाकुसट्टा य । जंगलवच्छविदेहा पंचालसुरट्ठसंरम्भा ॥ १ ॥ मलयत्थासिंधुचेईवयराढदसन्नजंगवट्टा य । लाटा य सूरसेणा कुणाल तह केयई अद्धं ॥ २ ॥ जत्थ न जिणकल्लाणा न चक्किबलकेसवाण अवयारो । न य जिणधम्मपवित्ती सगजवणाई अणज्जा ते ॥ ३ ॥ " अथ गुरूक्तं साध्वधिकारे तत्त्वमिदमेव यत्साधुना क्रियाकलापसाधुनाऽत्यन्तमुपसर्गकारिण्यपि वैरिणि प्रकामक्षमाभाजा भाव्यं । यस्तु तद्विपरीतो भूत्वा भूयोऽपि प्रान्तेऽप्यक्षामतितिक्षां कक्षीकुरुते स संवराख्यमुनिवत् कृतकृत्यः प्रसिध्यसिद्धिसौधमध्यमध्यास्ते । एतदुपरि श्रीसंवरमुनिदृष्टान्तो निदर्श्यते—

श्रीसंवराख्यो मुनिरुग्रचर्यः, कृतार्हदुक्तागमसत्सपर्यः । चक्रे स उत्तुङ्गगिरौ गरीयस्तपस्तनूत्सर्गवशाद्वरीयः ॥ १ ॥

१ क्रियाकलापेन साधुः सुंदरस्तेन.

तुष्टाऽन्यदा शासनदेव्यमुष्मै, पक्षः कृतं कैश्चिदपीह दुर्मैः । कष्टे यदा कष्टमुपैति तुभ्यं, कार्यं तदा मे स्मरणं सुखन्यम् ॥ २ ॥ अथो मुनिः पारणकालि जाते, ग्रामस्य मार्गे चलितः प्रजाते । एकः समागाच्छकटः कुतश्चित्सरसन्मुखं तत्र तदैव कश्चित् ॥ ३ ॥ मार्गं मुनिर्मुञ्चति नो तदानीं, यथा नरेन्द्रो निजराजधानीम् । न मन्यते शाकटिकस्य वाक्यं, यथाऽऽस्तिकः शासनमत्र शाक्यम् ॥ ४ ॥ रथात्समुत्तीर्य तदा तपोधनः, स ताडितो निर्मितमार्गरोधनः । तोत्रप्रहारैः प्रचुरैस्तनौ यथा, शीर्षेऽमुना शाकटिकेन सर्वथा ॥ ५ ॥ दण्डप्रहारैर्मुनिभिः स रोषाद्वेष्टितः सोऽपि निगृह्य दोषा । तयोर्मिथो युद्धविधौ प्रपात, दिवौ स मासक्षपकः सघातः ॥ ६ ॥ आगात्स्मृता शासनदेवता नो, महान्धकूपेषु विवेकज्ञानोः । गते पुनः शाकटिके यथासाऽऽगता शासनदेवता सा ॥ ७ ॥ साधुः समाख्यापित एव सूर्या, त्वं केत्यथादीदय साऽऽह यर्या । त्वत्सेविनी देव्यहमेयमुक्तिं, निशम्य स प्राह मुनिः कुयुक्तिम् ॥ ८ ॥ पापे यदाऽस्मारि मया स्वकार्ये, किं नागता तत्र जघन्यनार्ये । किं साम्प्रतं दर्शयसि स्वमास्यं, कृते विवादे न विज्ञाति हास्यम् ॥ ९ ॥ अथ मुनिर्वा पशुपाक्ष एव, प्रोचे सुरी नापि मया विशेषः । द्वयोस्तदानीं सरूपोः कथञ्चिन्मयापि तत्रोपकृतं न किञ्चित् ॥ १० ॥ यत्कोकिलानां स्वर एव रूपं, पतिव्रतात्वं वनितासु रूपम् । विद्या कुलीनस्य नरस्य रूपं, क्षमैव साधोः शुभकारि रूपम् ॥ ११ ॥ कोपः कुटुम्बस्य करोति हानिं, कोपश्च दुःखस्य ददाति खानिम् । कोपो भवेद्दुर्गतिमार्गसार्थः, कोपान्मनुष्यस्य जयोऽप्यपार्थः

१ तेभोभि

॥ १२ ॥ अन्तर्दधे शासनदेवतेयं, प्रबोध्य तं संवरनामधेयम् । तप्त्वा तपः सोऽपि च भूरिकालं, प्रान्ते शिवं साधुरगाद्विशालम् ॥ १३ ॥

॥ इति श्रीसंवराह्वयमुनीश्वरकथा ॥

अथैतस्यैव काव्यस्य तुर्यपदे " तुम्ह पमायायरणं न जुत्तं " इति यदुक्तं तत्र प्रमादोऽष्टप्रकारः—"पमाउय जिणिंदेहिं भणिउ अट्ठभेयउ । अन्नाणं १ संसउ २ चेव मिच्छानाणं ३ तहेवय ॥ १ ॥ रागो ४ दोसो ५ मइब्भंसो ६ धम्मम्मि य अणायरो ७ । जोगाणं दुप्पणीहाणं ८ अट्ठहा वज्जियव्वउ ॥ २ ॥ " इति । इतिकारणात्प्रमादः अज्ञानरूपः । स यथा श्रीस्थूलभद्रमुनिना स्थानत्रये कृतस्तथाऽन्यैर्धीधनैः साधुभिः "समयं गोयम मा पमायए" इति श्रीवीरवचश्चित्ते संस्मृत्य कर्हिचिन्न कार्यः । प्राणी तावत्प्रमादे एकान्तनिमग्न एवास्ति । ये त्वप्रमादिनस्त एव स्वकार्यसाधका दुःखबाधकाश्च स्युः । अथ प्रमादाचरणस्थानज्ञापने स्थूलभद्रदृष्टान्त उच्यते—

जगत्प्रसिद्धः प्रविभाति नन्दः, क्षितीश्वरः कीर्तिलतैककन्दः । मन्त्रिप्रधानः सगडाल आसीत्तस्योत्तमः पाटलिपुत्रवासी ॥ १ ॥ समुल्लसत्कल्पकवंशकेतुर्मेधाचतुष्कोपचयैकहेतुः । आसीत्स दुर्नीतिविभेदकारी, श्रीनन्दराज्यप्रथितोऽधिकारी ॥२॥ श्रीस्थूलभद्रस्तनयः प्रधानस्ततोऽपरोऽभूत्सिरियाभिधानः । जक्षादिकाः सद्गुणरूपवत्यः, पुत्र्योऽभवन् सप्त गृहेऽस्य सत्यः ॥ ३ ॥ जक्षा द्वितीयाऽजनि जक्खदिन्ना, भूता तुरीयाऽपि च भूतदिन्ना । सेणाऽभिधाना प्रबभूव वेणा, षष्ठी सुता सप्तमिका च रेणा ॥ ४ ॥ गाथापदश्लोकसमूह एकद्वित्र्यादिकोक्तिक्रमसातिरेकः । मुखे समायाति कुमारिकाणां, तासां

मनीषोदयधारिकाणाम् ॥ ५ ॥ जिनेन्द्रपूजागुरुपमस्या शास्त्रार्थविज्ञानसुपमशस्या । घस्राः प्रयान्ति स्म सुखेन तासां, सुवर्णसंकाशशरीरजासाम् ॥ ६ ॥ कविर्द्विजन्मा वररुच्यभिख्यस्तत्रैव चास्ते निवसन् सुदक्षः । अष्टोत्तरं काव्यशतं विरच्य क्षापं सदा स्तौति नयं विमुच्य ॥ ७ ॥ तत्काव्यजातस्य सुखसितोऽपि मानं, समीहते दातुमनीष्टदानम् । नृपः परं नो संगमाचसृष्ट्वार्था विना यच्छति तस्य तुष्टः ॥ ८ ॥ द्विजन्मना तेन ततः कदर्थं, मन्त्रीश्वरस्यास्य कृतं स्वमित्रम् । सत्पुष्पदानादिनिरर्थयित्वा, भार्यां स्वचित्ते परिपृच्छ्य नूनम् ॥ ९ ॥ मन्त्रिस्त्रियोक्तं वद विप्र सत्यं, मया समं ते किमिहास्ति कृत्यम् । सोऽप्याह मन्त्री त्वयकैव कार्यः, स्तोता मम क्ष्मापपुरो विचार्य ॥ १० ॥ स्त्रियाऽपि तद्वाक्यमिदं प्रपन्नं, प्रोचे च काले सचिवं प्रसन्नम् । न श्लाघ्यसे किं द्विजमाह सोऽपि, किं स्तौति मिथ्यादृशमत्र कोऽपि ॥ ११ ॥ प्रपन्नयान् वाक्यमसौ निजाया, निर्बन्धमायेध पुनः प्रियायाः । कृता प्रशंसा यवतस्तु तस्य, प्रत्यग्रकाव्यानि पुरो नृपस्य ॥ १२ ॥ अष्टाधिकं दापितवान्नरेशः, सुवर्णदीनारशतं द्विजेशः । सदेयती तस्य यज्न्य वृत्तिः, शक्या न जातु क्षुधि कुमवृत्तिः ॥ १३ ॥ अजाप्यमास्येन पुनर्नृपस्य, शुभद्वयं वीक्ष्य वृथा किमस्य । प्रदीयते स्वं धनमाह नृपः, स्तुतस्त्वयैवैष कुबुद्धिकूपः ॥ १४ ॥ मन्त्र्याह देवान्यकृतैर्जवस्त्ते, संस्तौति काव्यैरयमर्थधस्मम् । ज्ञातं पुरा नास्य मयाऽपि चि(वृ)त्त, राजाह सत्यं किमिदं कुवृत्तम् ॥ १५ ॥ ऊचे पुनर्मन्त्रिवरस्तदेति, द्विजोक्तमेतत्सकलं समेति । मुखाम्बुजे मामककन्यकानां, प्रज्ञाप्लुतां सप्तकसप्तकानाम् ॥ १६ ॥ श्वयैव विप्रः समये नृपाग्रतः, स्वकाव्यमालाकथनार्थमागतः । धृता यवन्यन्तरिताः स्वपुत्रि-

१ जनिन्यम्.

कास्तदा त्वमात्येन सुयुक्तिपत्रिकाः ॥ १७ ॥ आकर्ण्य वाचं तमथैकवारं, द्विजोदितं नूतनकाव्यवारम् । कृत्वा मुखाधीतमुवाच यक्षा, श्रीनन्दभूपालपुरः सुशिष्या ॥ १८ ॥ श्रुत्वा द्विजेनोच्चरितं च यक्षया, द्वितीयवारं किल यक्षदिन्नया । उक्तं नृपाग्रे क्रमतस्तृतीयया, तुरीययैवं किल यावदन्यया ॥ १९ ॥ ततोऽधिकक्रोधधरेण राज्ञा, प्रदापिता तस्य सत्राऽगमाज्ञा । पश्चात्स गङ्गापयसोऽन्तराले, यन्त्रप्रयोगं सृजति स्म काले ॥ २० ॥ दीनारमालां निशि तत्र दृष्ट्वा, संस्थापयत्येष जले प्रविश्य । आहृत्य यन्त्रं चरणद्वयेन, प्रातः पुनर्लाति नुतिच्छलेन ॥ २१ ॥ लोकाग्रतो वक्ति नुतिप्रसङ्गात्तुष्टा धनं मे प्रददाति गङ्गा । प्रोक्तं पुरस्तात्सचिवस्य सम्यक्कालान्तरे भूपतिना निशम्य ॥ २२ ॥ मन्त्रयूचिवांश्चेन्मम राति दृष्टौ, गङ्गा तदा सत्यमिदं न पृष्टौ । विलोकयिष्याम इदं हि कल्ये, राज्ञा प्रपन्नं कुतुकेऽत्यतुल्ये ॥ २३ ॥ नियोगिना प्रत्ययितो मनुष्यः सन्ध्याक्षणेऽज्ञाणयथ लब्धलक्ष्यः । प्रच्छन्नमास्थाय विलोकनीयं, वृत्तं द्विजस्याम्बुनि निन्दनीयम् ॥ २४ ॥ संस्थापयत्यम्बुनि यद्द्विजन्मेच्छया त्वमानीय प्रदेहि तन्मे । तेनापि गत्वा जगृहेऽस्य दीनाराणां ततः पोट्टलिकाऽतिपीना ॥ २५ ॥ एत्य प्रभाते नरपत्यमात्यौ, तत्र द्विजं पश्यत एव जात्यौ । द्विजोऽपि गङ्गाम्बुभरे सुखेन, प्राविक्षदीशां कलयन्मुखेन ॥ २६ ॥ प्रान्ते स्तुतेर्यन्त्रमिदं पदाभ्यां, संघट्टयामास मुहुः कराभ्याम् । दत्ते न किञ्चित्स ततो विलक्षः, पुरो जनानामभवत्सलक्षः ॥ २७ ॥ राजावदत्येष तु दुष्टकुम्भीनसोपमो वक्रतयाऽतिदम्भी । स्वाचारदारूत्करधूमकेतुर्व्यलीककीर्तिर्नगरान्तरेषु ॥ २८ ॥ स्वयं नृपाग्रे सचिवेन चाविष्कृतं तदीयं धनमप्रभावि । राजादिलोकस्तमथो जहास, रुरोष मन्त्रिएयथ विप्रपाशः ॥ २९ ॥

चिन्तयति च—

समाहृतं यच्चरणेन पुंसा, मूर्धानमारुह्य ददाति सिंसाम् । मध्यस्थतां संवधतोऽपमाने, वरं मनुष्याधम आसहाने: ॥३०॥ स छिद्रमालोकयितुं प्रवृत्तस्मन्त्रिणो दोषपरैरकृष्टः । मन्त्रयन्यदाऽसौ सिरियाविवाहं, विधातुमुत्कः कुशलाम्बुवाहम् ॥३१॥ नरेन्द्रदेयानि धनायुधानि, क्षमं गृहे कारयतीप्सितानि । एतच्चिरायार्जितमन्त्रिदास्या, मोर्कं द्विजायाचिकदारुवास्या ॥ ३२ ॥ प्राग्रहवस्तत्र सदा द्विजासिखिके चतुष्केऽध्यानि मन्त्रयराति: । शिशूनिदं पाठयति स्वतस्तु, द्विष्टो ददन्मोदकमुस्यचस्तु ॥३३॥ किञ्चिज्जनः सम्मति वेत्ति नासौ, मन्त्र्येष यन्नन्दनृपे परासौ । कृते सति स्वं सिरियाङ्गजातं, राज्येऽस्ति संस्थापयिता धिया सम् ॥ ३४ ॥ एहु लोय नवि जाणइ जं सिगडाल करिस्सइ । नंदराय मारेविकरि सिरियउ रज्जि ठविस्सइ ॥ ३५ ॥ एतच्छ्रुत कापि महीधवेन, प्रेक्षोपितं मन्त्रिगृहं जवेन । व्यलोकि तत्रायुधपक्वतार्थं, निष्पद्यमाने चरकैः प्रजालम् ॥ ३६ ॥ तर्कं च तैर्भूपतयेऽथ नन्दः, पराङ्मुखीभूय रुषातिमन्दः । तस्थौ सभायां सति पादलग्ने, सेयागते मन्त्रिणि लक्ष्यलग्ने ॥ ३७ ॥ यतः—मन्तास्यवदो विश्वसनं न राजा दर्वीकराणीकुटिलस्वभावाम् । निवापितं कूपकसन्निकर्षे, विस्मस्य चैतत् सति सुरप्रकर्षे ॥ ३८ ॥ मन्त्री स्मरत्यस्ति वधे स्वयस्यमधालकालस्य ममैककस्य । चूपादतोऽमुष्य कुटुम्बकस्य, कुजाम्मृतिः स्यान्न हि मामकस्य ॥ ३९ ॥ विज्ञाय नन्दं कुपितं निशान्ते, समेत्य मन्त्री प्रमदाद्युपान्ते । जगाद पुत्रं सिरियाभिधानं, नाहं मरिष्यामि यदि प्रधानम् ॥ ४० ॥ तदा हनिष्यत्यधिपोऽत्र हीमास्त्वकाम्मनुष्यान्

१ भमिका कामुकः २ मेखासम्बात् नामधातौ कर्मणि भूतकृदन्तम्

सकलानधीमान् । तस्मादहं वत्स[1] गुणातिकम्र, त्वया निपात्यः क्षितिपांह्रिनम्रः ॥ ४१ ॥ श्रुत्वेदमाक्रन्दमसौ ततान, प्रोचे च वंशद्वय एकतानः । किं तात जातोऽहमिहाकुलीनस्त्वं येन मामादिशसीत्यदीनः ॥ ४२ ॥ कुलोपसर्गस्य वार्तां प्रदेहि, त्वं तात मामेव मृतं विधेहि । नृपाग्र एवं गदिते पिताऽऽह, त्वं नो कुलध्वंसकृताग्रहः ॥ ४३ ॥ कुलद्वयस्यान्तकरोऽसि किं तु, स्यास्त्वं विधायेति सुतापमन्तुः । अथाह पुत्रो भवतात्तु यत्तद्भावी परं वसुवधो न मत्तः ॥ ४४ ॥ मन्त्र्याह सोऽहं विपज्जलक्षणेन, स्वं मारयिष्यामि सुत क्षणेन । त्वया विपन्नस्य ममैव याह्यवृत्त्या विपत्त्यै ह्यसिरत्र वाह्यः ॥ ४५ ॥ नाक्रन्दकालोऽस्त्यधुना महीयानाज्ञा गुरुणां तु न लङ्घनीया । रक्ष स्वकीयं कुलमापदन्धोर्[2]मां तारयोद्दामकुकीर्तिसिन्धोः ॥ ४६ ॥ दीप्येकतोऽम्भोभृतसिन्धुरन्यतस्तथैकतोऽन्धुर्[3]दैववह्निरन्यतः । भोग्येकतः कपटकराशिरन्यतः, सुतोऽविदत्सकूट एष मेऽद्भुतः ॥ ४७ ॥ यदेकतो मे गुरुशासनातिक्रमोऽन्यतो वसुवधो विजाति । स्वहत्यया भाव्ययशोऽपि मेऽतिप्रौढं तमोऽस्मै फलितं किलेति ॥ ४८ ॥ दिवानिशं नन्दनृपाङ्गरक्षकः, स्वतातवाचा स्थगितश्रुतिद्विकः । स मन्त्रिसूनुर्नयनस्रवज्जलः, शुशोच मालिन्यजितोग्रकज्जलः ॥ ४९ ॥ स्वकीयसूनोः पुनरप्यनेन, प्रोक्तं तदा मन्त्रिमहत्तमेन । वध्योऽहमीशांह्रिपुरोऽपकृदस्त्वयापशङ्कं श्रितकालकूटः ॥ ५० ॥ आबालवृद्धार्दनशङ्कितेन, प्रतिश्रुतं तत्सिरियाभिधेन । पुत्रेण पित्राऽपि मिथो विमृश्य, समागतं पर्षदि नृधनस्य ॥ ५१ ॥ दृष्ट्वा तमन्याभिमुखः समाजासीनोऽतिरोपादभवत्स राजा । पार्श्वे स्थितो मन्त्र्युचितं वचः स्वं, द्विस्त्रिः प्रयुङ्क्ते स्म धनीव स स्वम् ॥ ५२ ॥ न जल्पितं नृपतिनाऽप्यनेन, नतं पुरो-

१ हे वत्स. २ आपद्रूपकूपात्. ३ कूपः.

च्युत च धीसखेन । तथैव पादौ पतितस्य नेतुश्छिन्नं शिरोऽनेन पितुर्विजेतुः ॥५३॥ चित्ते पुनश्चिन्तयतीति हा रे, बला-
त्त्वयाऽहं विषमो वधारेः । किं कारितोऽस्म्यत्र ममाधमा त्वं, मत्तो न हृत् किं स्फुटितं स्वतातम् ॥ ५४ ॥ हा हा किमा-
कार्यमिदं प्रजल्पन्निस्युत्थितो राजुदयन्विकल्पः । तदाऽन्यथाम्मन्त्रिसुतः स्वदेवं, नृपाऽऽकुलत्वेन वधादमेवम् ॥ ५५ ॥
स्फुरत्सुराचारविकारकस्यास्य प्रशासनाविक्रमकारकस्यात् । स्तोकं मयाऽमुष्य कृतं तदेतत्कार्या मनागप्यघृतिर्न नेतः ॥५६॥
त्यक्त्वा समग्रं स्वजनस्य कार्यं, कुर्वन्ति भृत्या निजनाथकार्यम् । किमन्यथा चक्रधरागवन्तः, शक्याः समाराद्धुमिनो
जयन्तः ॥ ५७ ॥ वामो जयेचस्तव देव नित्यं, न तेन पित्राऽपि ममास्ति कृत्यम् । तदा च राज्ञाऽवसितं कुशोका, किम-
न्यथा मन्मयति हुवोकः ॥ ५८ ॥ किं त्वेष विप्रप्रथितोऽस्ति दम्भः, सोऽहं कुकर्मा विषमिश्रकुम्भः । येनेदृशं शुभ्ययमृ-
ष्टकार्यं, विनिर्मितं सम्प्रति दुर्निवार्यम् ॥ ५९ ॥ तन्मन्त्रिपट्टे यदि मन्त्रिपुत्रः, संस्थाप्यते वर्धनिरामयत्र । ततः स राज्ञा
न्यगितस्त्यज स्वस्वास्थ्यं निजं मन्त्रिपदं जजस्व ॥ ६० ॥ ज्येष्ठं ततस्तेन ममास्ति भ्राता, श्रीस्थूलभद्रः सहजः प्रसिद्धः ।
पण्याङ्गनामन्दिरमाश्रितस्य, क्रान्ताः समा द्वादश देव तस्य ॥ ६१ ॥ प्रदीयतां मन्त्रिपदं तु तस्मा, आकारितः स प्रभु-
णाऽप्यकस्मात् । क्रमागतं मन्त्रिपदं गृहाण, त्वमेवमुक्ते स पुनर्बभाषे ॥ ६२ ॥ विचिन्तयामीत्यमुना प्रजल्पिते, प्रोचे
नृपोऽशोकवने प्रणोचिते । विचिन्तयैकान्ततयेत्यथागतः, श्रीस्थूलभद्रोऽपि वने सुखाश्रितः ॥ ६३ ॥ दध्यावसौ जोग-
रसप्रचारिणां राज्याधिकारोत्सुकचित्तधारिणाम् । नृणाममात्यत्वमवद्यकारकं, संसेवितं राति विविद्धनारकम् ॥ ६४ ॥

१ स्वामिन २ कोपगृहरूप . ३ सुखरामस्वास्थ्यं.

दुःखप्रदाः स्युर्विषयाः सदाऽमी, एतत्कृते को विजहाति कामी । सुदुर्लभं प्राप्तमिदं नरत्वं, विधाय संसारसुखे ममत्वम् ॥ ६५ ॥ नानाजन्तुःसङ्गकुरङ्गवन्ये, दुर्वारसंसारवनेऽत्यगम्ये । लब्धे नरत्वेऽल्पसुखोद्यतेन, क्रीतेव कोट्यत्र वराटकेन ॥ ६६ ॥ निषेवितं वह्निशिखाकरालं, विलोक्यमानं यदि वेन्द्रजालम् । स्याद्द्यूतवच्चारि च रम्यमाणं, स्त्रीसेवनं चारु निवार्यमाणम् ॥ ६७ ॥ न ज्ञायते स्त्री घटिता विधात्रा, कीदृग्विधैरेव दलैः प्रमात्रा । यस्तत्र रागी रतिमादधाति, दुःखानि सौख्यस्य कृते स लाति ॥ ६८ ॥ न रज्यते यो विषये कथञ्चित्तत्कामनं यः कुरुते न किञ्चित् । भवेत्तदङ्गे सततं समाधिर्नाविर्भवत्येव रुजाद्युपाधिः ॥ ६९ ॥ विमुच्य तद्भोगमहाविलासं, तावत्क्षणोम्युत्कटमोहपाशम् । यावज्जराराक्षसिका मदङ्गं, न निर्मिमीते कृतशौर्यभङ्गम् ॥ ७० ॥ यावद्दशत्येष न रुग्भुजङ्गस्तावद्विधेयः सुकृतप्रसङ्गः । जीवोऽस्ति कल्येऽद्य कृतप्रयाणः, पान्थेन तुल्यो जरसा पुराणः ॥ ७१ ॥ ध्यात्वेति शीर्षेऽकृत पञ्चमुष्टिकं, लोचं क्षणान्निर्मितपुण्यपुष्टिकम् । धर्मध्वजं सोऽमलरत्नकम्बलं, छित्वा व्यधात् स्वं परलोकशम्बलम् ॥ ७२ ॥ आगत्य पार्श्वे नरनायकस्य, प्रोवाच धर्माशिषमेव तस्य । एतन्मया चिन्तितमेवमुक्ते, नृपोऽवदच्चार्विदमाप्तमुक्ते ॥ ७३ ॥ यावद्बहिर्निर्गतवान्मुनीशः, स्वारक्षकांस्तावदवक् क्षितीशः । विलोकनीयं कपटेन यायान्न वाऽसकौ धाम्नि पणाङ्गनायाः ॥ ७४ ॥ पश्यत्सु तेष्वेष मृतात्कलेवरादास्यं पिधायापसरेत् पथान्तरा । यथा जनः सोऽपि मुनिः पणाङ्गनागृहात्तथा दूरमगान्महामनाः ॥ ७५ ॥ तैर्भूधनाग्रे कथितं तथैव, क्ष्मापोऽपि तुष्टाव मुनिं तदैव । कृतश्च मन्त्री सिरियाभिधानः, श्रीस्थूलभद्रोऽथ शुभावधानः

१ आशा मुक्तिर्निर्लोभता येन तत्संबोधनं.

॥ ६६ ॥ संभूतिपूर्वविजयस्य गुरोरुपान्ते, जेजे मतं च सिरियास्य इतोऽर्थ्ययान्ते । कोश्याजिघमकटपयचपूगृहेऽसि-
प्रेम्णा निजस्य सहजस्य सदा समेति ॥ ६७ ॥ सा स्थूलभद्रे गणिकाऽस्ति रक्ता, नान्यं जनं वाञ्छति रागयुक्ता । कोश्या-
जगिन्यस्त्यथ योपकोश्या, कुर्यात्प्रवेशं स गृहे द्विजोऽस्याः ॥ ६८ ॥ पश्यंश्चरं मन्त्रिसुतो द्विजातेः, स भ्रातृजायामवद-
यथा तां । माता वयं भ्रातुरथो वियुक्तिं, द्विजादमुष्मात् पितृजीयमुक्तिम् ॥ ६९ ॥ कार्यं तथाऽद्य तु यथा मेदिष्ठो,
विमेलवेयं जगिनी कनिष्ठाम् । गत्वाऽथवत्त्यं सुरयाऽतिमत्ता, द्विजस्त्वमत्तः कथमेकवृत्ता ॥ ७० ॥ अथ त्वया कारयि-
तव्यमस्य, स्वसः सुरापानमिदं द्विजस्य । तयाऽपि विप्रो जगदे यदाऽथ, नेष्टेसदा साऽस्य वचाण सायम् ॥ ७१ ॥ सुतं
त्वया मेऽद्य स तद्वियोगं, सोढुं समर्थो न जरीव रोगम् । चन्द्रप्रजायाः कृतवांश्च पानं, विप्यावनः क्षीरमिति प्रधानम्
॥ ७२ ॥ तन्मन्त्रिसूनोः कथित च कोश्यया, राजाऽन्यदोषे सिरियाख्यमिष्ठया । हितः पिताऽऽसीत्तव मे तथा पुनः,
कुकर्म तत्प्राह स मद्यपानिनः ॥ ७३ ॥ राजाऽऽह किं तेन सुराऽपि पीयते, स प्रोषितवान् सत्यमिदं विधीयते । कस्या
प्यदात्ताचितमुत्पलं करे, देयं द्विजस्येति निगद्य विप्ररः ॥ ७४ ॥ सजासमाकारितवारुणस्य, मदापि तेनावसरेऽथमस्य ।
आघ्राय तद्वान्तमनेन निन्द्य, चूडारमध्येऽखिलमेव मद्यम् ॥ ७५ ॥ सर्वत्र लोकान्तरवार्त्तरीकः, स प्रापितः शोधिमधा-
यवीवः । भ्रूणभिना पायित एव सर्व, पश्चात्त्वमासोऽधिककष्टलिसम् ॥ ७६ ॥ श्रीस्थूलभद्रो गुरुसन्निधाने, लीनस्तपः-
कर्मणि चासमाने । विहारकृत्पाटलिपुत्रमागात्रयोऽपरे सन्त्यनगारनागाः ॥ ७७ ॥ अङ्गीकृतास्तैर्विविधा अभिग्रहाः,

१ मदिराम् २ रीढाऽवज्ञा ३ पापयुक्तः ४ मुनिश्रेष्ठाः

समाश्रितैकेन महाहरेर्गुहा । तमीक्ष्य शान्तिं स वजार केसरी, प्राप्तस्तदन्योऽहिविलं च संवरी ॥ ८८ ॥ आलोक्य तं दृष्टिविषः प्रशान्तः, कूपस्य चैकः फलकेऽतिदान्तः । तस्थौ च कोश्यागृहमाससाद, श्रीस्थूलभद्रो मुनिरप्रमादः ॥ ८९ ॥ ज्ञात्वेति तुष्टा गणिका परीषहैः, पराजितोऽत्रागत एष दुस्सहैः । प्रोक्तं च कुर्वे किमुवाच साधुः, स्थातुं प्रदेहि स्वभवनेऽत्र साधु ॥ ९० ॥ तथा कृते सा मणिहेममुक्तालङ्कारसंशोभितदेहयुक्ता । आगत्य लग्ना निशि चाटु कर्तुं, परं न शक्नोति मनोऽस्य हर्तुम् ॥ ९१ ॥ ततः स्वभावाद्विरस्यति स्म, प्रबोधमेषोऽप्यनुतिष्ठति स्म । वार्धिः सरिद्भिर्दमुनाः समिद्भिः, प्राणी न तृप्येद्विषयैर्महद्भिः ॥ ९२ ॥ निवासमासूत्र्य चिरं स्वबान्धवैर्विधाय तृप्तिं हृदयेप्सितैर्नवैः । प्रपालितं लालितमप्यनारतं, विमुच्य गन्तव्यमिदं वपुर्मतम् ॥ ९३ ॥ धान्यं धनं बन्धुजनोऽतिकान्तः, पञ्चप्रकारा विषया महान्तः । त्याज्यं क्षणादेव वपुश्च दासास्तथापि दीर्घाऽस्ति विशां हृदाशा ॥ ९४ ॥ श्रुत्वेति सा धर्मपथि व्रजन्ती, नृपालदत्तं मनुजं त्यजन्ती । ब्रह्मव्रतं सम्प्रति पालयन्ती, सुश्राविका जातवती लसन्ती ॥९५॥ मासां चतुष्कं तदशोपवासी, यत्याययौ सिंहगुहाधिवासी । दैरोत्थितार्यैः समवाचि तस्य, स्यात्स्वागतं दुष्करकारकस्य ॥९६॥ अभिमहान्ते समुपागतस्य, व्यालास्पदस्थस्य च कूपगस्य । तथैव चक्रेऽथ तपोधनस्य, श्रीमद्भिरार्यैः कुंदनां निरस्य ॥ ९७ ॥ श्रीस्थूलभद्रोऽपि च वारवध्वा, गृह्णाति सद्मन्यनिशं सदध्वा । नानाप्रकारं विकृतिप्रविष्टं, प्रायोग्यमाहारमतीव मिष्टम् ॥ ९८ ॥ समागतः सोऽपि ततश्चतुर्मास्यन्ते गुरूणां निकटे सुधर्मा । अभ्युत्थितैस्तैःस्तुतमस्य सत्त्वं, त्रिः प्रभितं दुष्करकारकत्वम् ॥ ९९ ॥ तदा त्रयः

१ स्वगृहे. २ अग्निः. ३ दरं शीघ्रम्. ४ दंभम्.

पूर्वनुतासु वाचयमा भिमसे ब्रुवते स्म वाचम् । कृत्वेति मन्त्रिमसखो यदार्यो:, छिद्यन्ति लोकव्यवहारवार्या: ॥ १०० ॥
विलोक्य यत्कं मनुजा: सुजेयुर्खलोम चाप्यादरमाचरेयु: । तपन्ति गाङ्गेयमयेऽपि जिह्वां, पात्रे न कुर्वन्ति मनाग्विपक्ष्याम्
॥ १०१ ॥ तत्र स्थितोऽसौ स्ववपु:समाधिना, तथापि आत: स्वयनोषितोऽधुना । यत्यन्यवर्षे मुगराड्गुहास्थित: स्था-
स्वामि वेश्यागृह एवमुच्यत: ॥ १०२ ॥ अजिमहं खाति तदा निपिञ्जसौरार्यवर्यैर्न श्रृणोत्यशुद्ध: । गत्वा यथाचे वसतिं
पद्माक्षी, तदोपकोशाऽस्य ददौ नृशाखी ॥ १०३ ॥ स्वाजायिकौदारिकदेहचर्यपिता, धर्मं समीपेऽस्य श्रृणोत्यदूषिता । तद-
ङ्गसङ्गं स विधातुमुत्सकाद्रूनि यत्कीडति सा न सत्त्वत: ॥ १०४ ॥ प्रबोधनार्थं जगतीति तस्य, मदेहि किञ्चित्स्व च वक्ति
यस्य: । ददामि किं साऽह च सद्मेकं, मदीयतां जो मम सातिरेकम् ॥ १०५ ॥ तस्मात्सुपायं श्रृणु नृप आस्ते, नेपा-
लदेशो कृतपर्युपास्त्ये: । पुंसा प्रदत्ते जिनधर्म्यमुख्यं, स कम्बलं सम्प्रति लक्षमूल्यम् ॥ १०६ ॥ देयं तदेवेति निशम्य निर्ग-
तस्तं प्रार्थयामास नृपं स दुर्गत: । सत्कम्बलं प्राप्य च वंशदण्डके, क्षिप्त्वा सरन्ध्रे चचले ह्यलक्तके ॥ १०७ ॥ एकत्र
चौरै: सरणिर्निबद्धा, पद्मी तदस्यो वदतीति शुद्ध: । लक्षं समायाति तदा च चौरस्वामीक्षतेऽमुं यतिमेव घोर: ॥१०८॥
तस्मिंश्च पश्चाद्गलिते स पद्मी, कोकूयते तत्र कुजदयजल्पी । याति स्म लक्षं पुनरेत्य तेन, भेक्ष्यैव मुक्तो यतिरम्बुतेन
॥ १०९ ॥ तयाजयं दत्तमहो मया परं, सर्वं नियेद्यं त्ययका तत: परम् । यथास्थितं तच्चरितं तदग्रत:, स कथितवान्
समदत: समग्रत: ॥ ११० ॥ पद्माक्षिये कम्बल एष कष्टत:, प्राप्तोऽस्ति नेपालनृपात्स्वदिष्टत: । ज्ञात्वा प्रजल्पस्त्यस चा-

१ तिलकं.

क्यतस्त्वतः, सोऽमुं मुमोचैप सुखात्समागतः ॥ १११ ॥ पणस्त्रियेऽदायि स तेन कम्बलः, क्षिप्तस्तया क्षालमलेऽतिनि-
र्मलः । लग्नो निपेद्धुं स विनाशनीयस्त्वया न साऽप्याह वचो वरीयः ॥ ११२ ॥ यते किमेनं हृदि शोचसे त्वकं, जाड्या-
त्पुनः किं न हि शोचसे स्वकम् । त्वमप्यहो ईदृश एव लक्ष्यसे, त्यावी व्रतं प्रोज्झ्य च मां यदिष्यसे ॥ ११३ ॥ धृत्वा
चिरं शीलमिहाकलङ्कं, प्रक्षाल्य चारित्रजलेन पङ्कम् । त्योगं यदिक्षेर्विपद्मुक्सवर्णं, ध्मातं हरेः फूत्करणैः सुवर्णम् ॥११४॥
अचीकथत्सा गणिका विदस्य, प्रौढेन्द्रियव्यापसमाकुलस्य । गात्रे जरा मृत्युरुपैति तूर्णं, तत्साम्प्रतं धेहि शमं प्रपूर्णम् ॥११५॥
॥ ११६ ॥ सितच्छदैः का तुलना वकानां, केर्ष्या मृगेन्द्रोपरि जम्बुकानाम् । श्रीस्थूलभद्रव्रतिना वराकामुना तवास्ते समशीर्षिका का
स्यात्खलु का खलानाम् ॥ ११७ ॥ क टिट्टिभः क्वापि च राजहंसः, क शान्तचेताः क पुनर्नृशंसः । क चाप्युपानत्क्व
शिरोऽवतंसः, क चक्रवर्ती क पुनर्नटुंसः ॥ ११८ ॥ काहर्पतिः कुत्र पुनः पतङ्गः, क वेसरः कोरुतरस्तुरङ्गः । क्व या-
सुकिः कुत्र च वारुरङ्गः, क स्थूलभद्रः क पुनस्त्वमङ्ग ॥ ११९ ॥ प्रेक्षस्व साधो मम यज्ञगिन्या, सौभाग्यवत्याऽद्भुतरूप-
खन्या । न चालितो मेरुरिवासरेखः, श्रीस्थूलभद्रस्तिलमात्रमेपः ॥ १२० ॥ प्रलोभितोऽसि त्वमदृष्टपूर्वया, मयेव गौः
प्रोज्झतनव्यदूर्वया । परस्परं भूरितरं तदन्तरं, निरीक्ष्यतेऽत्रापि नृणां निरन्तरम् ॥ १२१ ॥ विशन्ति वह्नौ समरे म्रियन्ते,
स्पर्शं सृजन्त्युत्कटकुम्भिदन्ते । केचित्पुनः प्रोच्चनगात्पतन्ति चित्रा जिताक्षाः पुरुषा भवन्ति ॥ १२२ ॥ स्त्रीभ्रूधनुर्निर्य-

१ नटः. २ सर्पः.

वषाक्रमनस्त्या, नाज्ञे कृता ये पुरुषाः सशल्याः । गङ्गापयोनिर्मलशीलपङ्क्तयस्तेभ्यो नरेभ्योऽस्तु नमो महद्भ्यः ॥१२३॥
तद्विस्मितोऽयं स्खलितमतिज्ञः, श्यामाननः पुण्यपथानभिज्ञः । पुनः पुनः संस्मजति स खेदं, स्मृत्वा गरीयो गुरुगीर्वि-
धेयम् ॥ १२४ ॥ मार्गं करे प्रोऽस्य मार्षि रविमने, ग्लातुं प्रजन् काचदखं किलाशुजम् । स्तम्भे स्फिटित्वाऽर्धपथि स्फुट-
क्षिरा, हा हास्यमाप्तोऽस्मि विधेर्गतिः परा ॥ १२५ ॥ पूर्वं विधायामृतपानखष्टं, यथोऽममाश्च स्वगुरूपदिष्टम् । पश्चात्क-
रोति स शुच यशस्वी, वेश्योपकोशागृहगस्तपस्वी ॥ १२६ ॥ मत्तेभयत्सोऽयनमाप धुर्यस्तपोधनोऽन्यद्विपये पटुर्यः । स्वकु-
क्षरिन्न इति निन्दतीह, प्रशंसया स्यादगुणोऽप्यनीहः ॥ १२७ ॥ छजन्ति ते सद्गुणकीर्तनेन, श्रिता यके स्वगुरुसाहसेन ।
प्रशंसया चानुतया तदन्ये, न सन्ति केचिद्भुवीति मन्ये ॥ १२८ ॥ जगाम सद्यः स्वगुरोः समीपे, कुमार्गसेवाप्रथनप्र-
दीपे । मतेन साधुः स कुकर्मसेनापथं जिगाय प्रविनश्यदेनाः ॥ १२९ ॥ आर्यैरजायपयस्य शरीरपीडाकरा अद्रिव्याघ्र
गजाः सेनीकात् । नृणां न हि ज्ञानचरित्रजङ्गमदाश्च सम्यक्त्वहराः सुरज्ञ ॥ १३० ॥ श्रीस्थूलभद्रो जगदाननीयं
श्याकामपि स्मासिशिरः सुतीक्ष्णम् । श्रितः परं नो दैमुनःशिखायां, दग्धो यतश्चाप्यय न दमायाम् ॥ १३१ ॥ तुष्टयाऽप्य
नन्देन कदापि दत्ता, निजस्य कोशा रथिकस्य चित्ता । श्रीस्थूलभद्रस्य तु सा प्रशंसां, चक्रेऽधिकां नो दधती रिरंसाम्
॥ १३२ ॥ सन्त्यत्र लोकेऽतिघना महीनाश्चित्रमदाः पञ्चजनाः कुलीनाः । नास्ते न भूतो न च जातुकोऽपि, श्रीस्थूलभद्र-
रूप समोऽत्र कोऽपि ॥ १३३ ॥ सदाकृतैतद्गुणमंत्रजापा, सा तं तथा नोपचरत्यपापा । स्वमन्दिराशोकवनेऽन्यदा सा,

१ मार्गम् २ समीपात् ३ नमिशिखायाम् ४ पञ्चभिर्भूतैर्भन्यन्ते इति पञ्चजन्या मनुष्याः

तेनाथ नीता विलसद्विलासा ॥ १३४ ॥ स्वकीयविज्ञानविकाशनाय, प्रोद्दामसौभाग्यसमर्जनाय । लातुं करारोपितचापदण्डः, स चाम्रराशेरुपरि प्रचण्डः ॥ १३५ ॥ चिक्षेप तावत्कलयाऽनुपुङ्खं, पुनः पुनः स्वं शितिचित्रपुङ्खम् । यावत्कराग्र्यर्णमथार्धचन्द्रच्छित्त्या व्यधात्तत्करगां वितन्द्रः ॥ १३६ ॥ तदा पुनः सा वदति स्म तस्य, स्याद्दुष्करं नेह हि शिक्षितस्य । सिद्धार्थराशिस्थितसूचिकाग्रे, नाट्यं व्यधात्साऽपि तदास्य चाग्रे ॥ १३७ ॥ कृत्वोर्ध्वमंह्री स्वशिरोऽप्यधस्तात्तदा स कचे गुणवत्स्वशस्ता । कृतान्यसूया हृदि सा वहन्ती, तदेव वृत्तं न्यगदद्धसन्ती ॥ १३८ ॥ न दुष्करं चूतफलप्रकर्तनं, न दुष्करं सूचिशिरोऽग्रनर्तनम् । तद्दुष्करं यत्स तपोधनाग्रणीः, क्षुब्धो न मत्सङ्गमितो महागुणी ॥ १३९ ॥ यो जन्तुदुर्जेयमनोजमल्लस्फूर्जद्बलोल्लासनिरासदक्षः । यत्क्षोभणे स्युर्मरुतोऽपि नालं, श्रीस्थूलभद्राय नमस्त्रिकालम् ॥१४०॥ सदा प्रकुर्वन्नतिमिष्टभोज्यं, समस्तसुस्वादुरसप्रयोज्यम् । क्षुब्धो न यो मद्गृहवर्तमानः, श्रीस्थूलभद्राय नमः सदा नः ॥ १४१ ॥ मत्कोद्दविक्षेपसूतीक्ष्णकाण्डैश्शुक्षोभ विध्यन्नपि यः प्रकाण्डैः । न क्वापि तस्मै मुनिनायकाय, श्रीस्थूलभद्राय नमः शुभाय ॥ १४२ ॥ परीषहं स्त्रीकृतमत्रसोऽन्यः, सोढुं क्षमः कोऽस्ति महामनोज्ञः । श्रीस्थूलभद्रेण विना मया यः, सज्जीकृतो न स्मरसेवनाय ॥ १४३ ॥ मदीयसंसर्गवशादपीषद्भ्रष्टो न योऽग्नेरिव सत्करीषः । सुवर्णवर्तिः त्वभवत्सुकान्तिः स स्थूलभद्रो जयतादतान्तिः ॥ १४४ ॥ सा तत्कथां तत्र जगाद वेश्या, तदग्रतोऽङ्गीकृतधर्मलेश्या । तद्वर्णनातो मुमुदे स भेजे, सुश्रावकत्वं च गुणैर्विरेजे ॥ १४५ ॥ वन्दापनार्थं प्रययावथो मुदा, श्रीस्थूलभद्रो मुनिनायकोऽन्यदा । सुदूर-

१ चित्रपुंखं बाणं. २ अर्धचंद्रो बाणः. ३ काक्षाः कटाक्षाः. ४ कांडः शरः. ५ प्रशस्तैः.

देशागतबन्धुरुर्विपद्विजस्य गेहे स्थितमूर्षिमान् बुधः ॥ १४६ ॥ अत्रेदृशां तत्र तथाऽस्ति तादृशी, प्रेक्ष्य आर्तं परिवर्ति कीदृशाम् । एवं त्वचित्वा विगते मुनीश्वरे, प्रासो द्विजः पृच्छति धर्मिणीमरे ॥ १४७ ॥ प्राज्ञा प्रदत्तं किमपीह तेन, मज-हिप्तं वा मम सुमतेन । प्रोक्तं तया नो किमपि प्रदत्तं, यथोक्तवाक्यं च तदाऽवदत्तम् ॥ १४८ ॥ निष्कासयामास ततः स तस्मात्स्थानान्निधानं चतुरस्त्वकस्मात् । बुभुजे स्म तत्तत्र स निर्विषाद , कृत्वेस्वयं साधुकृतः प्रसादः ॥ १४९ ॥ अथा पतद्द्वादशवर्षधारी, दुष्काल उग्रोऽखिलविनाशकारी । त्रिमेषु त्रिमेष्वथ मरुस्थलेषु, प्रयातवन्तो यतयोऽपि केषु ॥ १५० ॥ तन्निर्गमे पाटलिपुत्रमागतः श्रीस्थूलभद्रोऽपि पुनः स्वजातवतः । किं कस्य पार्श्वेऽस्ति तदेति निर्मिता, सङ्घेन चिन्ताऽखिलसूत्रसङ्गता ॥ १५१ ॥ उद्देशमात्राध्ययनादिचित्रं, यद्यस्य पार्श्वेऽजवदत्र सूत्रम् । संघट्टयित्वैकत एव तानि, श्रेकाद-शाङ्गान्यथ मीलितानि ॥ १५२ ॥ "परिकम्म सुत्ताइ पुव्वगयं चूलियाणुओगो य । दिट्ठीवाओ इय पंचहा वि नो अत्थि तत्थ पुणो ॥ १ ॥" तदा च नेपालयसुन्धरास्थः, श्रीभद्रबाहुर्गुरुरस्ति सास्थः । स दृष्टिवाद धरतीति कृत्वा, सङ्घेन सा धुरिस्तयं प्रहित्या (त्य)॥१५३॥ कथापितं वाचय दृष्टिवादं, सन्त्यर्थिनो यच्चतयोऽनुपादम् । श्रीसङ्घकार्ये कथितेऽमुनाऽपि, मोक्ष महाप्राणमिदं मयापि ॥ १५४ ॥ पूर्णीकृतध्यानमिदं विना न, स्याद्वाचनादानसमर्थता नः । सङ्घस्य तेनोक्तमथाग-तेन, सङ्घाटकोऽन्यः प्रहितश्च तेन ॥ १५५ ॥ कथापितं चास न योऽत्र मन्यते, सङ्घं तु कस्तेन हि दण्ड आप्यते । स सङ्घबाह्यो भवतीति भद्रबाहुः स्वमेवास्यवदत्समक्षः ॥ १५६ ॥ तदा गुरुः प्राह सुबुद्धिमन्तः, प्रेष्याः सुवक्षा मुनयोऽत्र

१ समक्षः २ पूर्णम्

सन्तः यद्वाचनासप्तकमह्नि दास्ये, यावन्निजं ध्यानमहं तदास्ये ॥ १५७ ॥ नैद्ययागमेऽग्रो दिवसार्धकाले, संज्ञानिषेधाव-
सरे विकाले । आवश्यके चापि कृते त्रिवारं, तद्वाचनादाय्यहमस्म्युदारम् ॥ १५८ ॥ श्रीस्थूलभद्रादितपोधनानां, तद-
न्तिके पञ्चशती शुभानाम् । तदन्विता लाति च कालवेलासु वाचनास्त्यक्तघनावहेला ॥ १५९ ॥ ते नैकशो द्विस्त्रिरपि
प्रयुक्तं, चित्ते न यावद्धतेऽह्नि नक्तम् । तावत्तु सर्वेऽपसृताः किलामी, श्रीस्थूलभद्रः स्थित ऊर्ध्वगामी ॥ १६० ॥
आर्येण चार्यो तनुतावशिष्टे, ध्याने सति क्लाम्यसि नेति पृष्टे । ऊचे स नो मे क्लम आह चार्यः, कालं प्रतीक्षस्व किय-
न्तमार्य ॥ १६१ ॥ यद्वाचना दद्मि तवाविलम्बं, गुरुं च पप्रच्छ स निर्विलम्बम् । कियन्मया भो जगन्नधीतं, स चाणु-
मेरूपमयाह नीतम् ॥ १६२ ॥ तवात्र सूत्राणि चतुरष्टाशीतिस्त्वय स्तोकदिनैः पठिष्ठा । तत्पूर्तिरास्ते तव भो चवित्री,
सुखेन दुष्कर्मलताजयित्री ॥ १६३ ॥ पूर्वाण्यधीतानि दश क्रमेण, वस्तुद्वयोनान्यमुनाऽश्रमेण । सस्थूलभद्रा गुरवोऽन्य-
दाऽऽसा, विहारतः पाटलिपुत्रमासाः ॥ १६४ ॥ बाह्ये वने तेऽपि च तस्थिवांसस्ताजन्तुमायान्ति घनाः पुमांसः । ता
यामयोऽप्यैयरुरत्र यक्षाद्याः स्थूलभद्रस्य हि सप्त दक्षाः ॥ १६५ ॥ पृच्छन्ति नत्वा गुरुमस्ति कुत्र, श्रीस्थूलभद्राख्यमुनिः
पवित्रः । तेनोदितं देवकुले निजाख्यः, प्रीतो गुणज्ञस्ति सुकीर्तिमाख्यः ॥ १६६ ॥ समुत्थितास्ता गुरुसन्निकृष्टाज्ज्ञातुर्नि-
नंसाविधयेऽतिहृष्टाः । ससापि साध्व्यस्तदनुप्रकृष्टाचारप्रचारप्रशमैकनिष्ठाः ॥ १६७ ॥ आगच्छतीर्वन्दनहेतवे ता, विलो-
क्य सोऽहङ्कृतिपूर्णचेताः । पञ्चाननाकारधरश्च जातस्त्रस्तास्तमालोक्य च तास्त्वरातः ॥ १६८ ॥ उपद्रुतोऽयं हरिणा

१ निद्रावसरे. २ क्रियाविशेषणम्. ३ भगिन्यः.

शरीरि, गत्वा ववन्दि स्म गुरोस्तु तीरे । आर्यस्तदाऽऽहेति यशोऽतिहारि, स स्थूलभद्रो न पुनर्मृगारिः ॥ १६९ ॥ आ-
गत्य तान्त्रिः प्रहतोऽनसूया, श्रीस्थूलभद्रास्यमुनिः स चूपः । ताकेन पृष्ठः कुशाग्रमपूर्ति, यताऽऽह तस्मै सिरियाक-
त्तितिम् ॥ १७० ॥ यथैव श्रीकामरूपावनन्तरं, मखेन पर्यापमुखपयसमुत्तरम् । प्रकारिताः सोऽपि ततश्चिविर्भप, प्रातश्च
मृत्वाऽसिरियोन्मदद्विपम् ॥ १७१ ॥ अथर्षिहत्याजयजीतयित्ता, सपअज्ञाचादस्ममत्ता । नीता विदेहे जिनशासना-
धिष्ठाम्योपसीमन्धरमर्दितावधि ॥ १७२ ॥ आनीतवत्याध्ययनद्वयं स्वयं, सज्ञावनामुक्त्यभिधं महामहम् । छक्स्येति ता-
स्तत्र गता निजास्पदं, द्वितीयवासेऽथ मुनिः ससंमदम् ॥ १७३ ॥ गुर्वन्तिकेऽगामवसूत्रशिक्षामहासमुद्देशकृतेऽथ तेषा ।
मुखेऽप्ययोग्यस्त्वमितीव वक्ति, प्रोद्देशमस्मै न गुरुर्व्यनक्ति ॥ १७४ ॥ तदा प्रमादं स्मरति स्म स स्वकृतं यशोभ्यासस-
मस्तविश्वः । नाहं करिष्ये पुनरित्यथादीन्नयेत्स्वदन्योऽपि यतः प्रमादी ॥ १७५ ॥ तस्मात्र यच्छामीति गुरुः प्रपेदे, कष्टेन सष्टे
सति विस्तरेदे । अमेवनं पूर्वचतुष्कमस्य प्रादाद्गुरुः सूत्रत एव यदयः ॥ १७६ ॥ तस्मै पुनर्नो दशमस्य वस्तुद्वयं सदर्थं
कथितं ततस्तु । तावत्प्रभूतं श्रुति यावदार्यवज्राभिधोऽभूत्महिमाभिरार्यः ॥ १७७ ॥ श्रीस्थूलभद्रस्य मुनेः समासाच्चरि-
त्रमेतत्स्वमतिप्रजासात् । कृतं स्वसुकृता शिवसुन्दरेण, प्राहोर्विशोध्यं प्रगुणादरेण ॥ १७८ ॥ सिरिथूलभद्दपहुणो पमाय-
चरियाई सिसि तस्साथि । सीहगिरिजणगुणाणं कहणं दक्खस्स सयणासं ॥ १७९ ॥

इति काव्यतुर्यपदस्यप्रमादापरमोपरि श्रीस्थूलभद्रचरित्रम् ॥

---

१ उपवासम् २ पक्षे ३ विश्वकर्मा

अथ वयस्त्रिकेऽपि धर्मावसरो दुर्लभ एव तदुपरि काव्यमुच्यते—

बालत्तणं खिड्डपरो गमेइ, तारुण्णए भोगसुखे रमेई ।
थेरत्तणे कायबलं वमेई, मूढो मुहा कालमइक्कमेइ ॥ ६८ ॥

व्याख्या—बालत्वं क्रीडापरः प्राणी गमयति मुधा हारयति "बालः प्रायो रमणासक्तः" इत्युक्तेः । अथ तारुण्ये प्राप्ते भोगसुखेषु रमते । तदनु स्थविरत्वे वार्धके वपुर्बलं वमति एवं मुग्धात्मा मुधा नैरर्थक्येनैव कालं समयमतिक्रामतीति काव्यार्थः ॥

अथ शैशवादश्रेयस्करणं श्रेयस्करमित्युद्भावयन्नग्रिमं काव्यमाह—

लहुत्तणाउ वि न जेण पुन्नं, समज्जियं सव्वगुणोहपुन्नं ।
थेरत्तणे तस्स य नावयासो, धम्मस्स जत्थ त्थि जरापयासो ॥ ६९ ॥

व्याख्या—शैशवादप्यारभ्य येन प्राणिना पुण्यं न समर्जितं नात्मसात्कृतं पुण्यं सत्कर्मपुद्गला इति दानशीलाद्यं, किंभूतं तत् ? सर्वगुणौघैः पूर्णं तस्य स्थविरत्वे नावकाशो धर्मस्य शक्तिवैकल्येन शीतवातातपाद्यतनुतनुक्लेशाधिसहनासामर्थ्यप्राप्तेरिति नावकाशो धर्मस्य, यत्र जरसा जर्जरीभावमासादयेद्वपुर्मृत्स्नाभाजनवदिति काव्यार्थः ॥

अत्रार्थे श्रीअन्तकृद्दशासूत्रोक्तोऽतिमुक्तकाभिधेयक्षुल्लकसाधुसम्बन्धः सन्धिबन्धेन प्रस्तूयते—

इह भरहखित्ति अत्थइ पसिद्ध पोलासनामि पुर घणसमिद्ध। जिहिं वसइ लोय परधणअलुद्ध जलहिव सु परवज्जिहिं अलुद्ध ॥ १ ॥ जयजयरव मग्गण भणइं जस्स जयनाम राय पालेइ तस्स। न हु देससीम जंपेइ जस्स अइउग्गरिउघरु जगि अयस्स ॥ २ ॥ पच्चक्ख सरस्सइ सिरीय जाणि तसु सिरीय भज्ज अइमहुरवाणि। अणुदरुदरुग्गलावण्णसालि वर-कमलसुकोमलचरणपाणि ॥ ३ ॥ इत्थंतरि सुमिणसमम्मि दिट्ठ अइमुत्तयतरु अइसयवरिट्ठ। सा तम्मि चेव दिवसम्मि गब्भ धरइ जेम जलजार अब्भ ॥ ४ ॥ नवमास अद्ध अट्ठमदिणम्मि पसवइ सा नंदण सुहखणम्मि। अइमुत्तय तसु अभिहाण किद्ध, अइउच्छव नय नय नयरि सिद्ध ॥ ५ ॥ हत्थाउ हत्थि सो संचरंत पिउमाइमणोरह पूरयंत। दीसंत सुपिय दसण अईय निसु मणइ नियकुलघरपईव ॥ ६ ॥ मंदरगिरि सुरतरु अंकुर व, सो वड्ढइ पियघरि गुणिअपुव। मम्मणपण वयण भणंतु सप परियण आणंदइ रुचि दिव ॥ ७ ॥ घात—इत्थंतरि सामिय सिद्धिहिं गामीय विहरंतउ सिरिवीरपहो। संपत्तउ तिणि पुरि सेविय नरसुरि पुन्निमचंदसमाणमुहो ॥ ८ ॥ भास—उज्जाणपाल आविय नरिंद वद्धाविउ चरमजिणिंदचंद। सामिय इह पत्तउ विजयवंत मुणिवरपरिवारिहिं गहगहंत ॥ ९ ॥ तसु दिद्ध पारितोसिय मईत घणदाणसयं पमुजत्तिमंत। अह चल्लिय विल्लिय गुणिहिं राय गंतूण तत्थ पमु नमइ पाय ॥ १० ॥ सिपयाहिण-पुप नमिसु नाह संतोस धरइ नियमणि अगाह। पारद्ध धम्मदेसण जिणेण पीयूसवरिसमहुरत्तणेण ॥ ११ ॥ जो जय सयसंसारसार नरजम्म लहे वि ण अइउदार। जिणधम्मरम्म जणदिन्न सग्ग आराहउ साहउं सिद्धिमग्ग ॥ १२ ॥

चत्तारि न किज्जइ मणि कसाय पच्चक्खत्व नणु ते पिसाय । वसि किज्जइ ते नियउज्जमेण खमदमउवसमवलिनिज्झएण ॥ १३ ॥ इच्चाइ सुदेसण रससुसाउ परिपीय सयजण गयविसाउ । जिणगुण थुणंतु नियगेहपत्त पडुत्तत्तिकरंवियसुद्धचित्त ॥ १४ ॥ अह उउ सुड्ड तवपारणम्मि आपुच्छिय पहु भिक्खाखणम्मि । पोलासपुरिहिं गोयममुणिंद आवइ मुहचंगिमविजियचंद ॥ १५ ॥ अह रायमग्गि अइमुत्तनाम पुरकुमर समन्निय मणभिराम । खिल्लंतउ अच्छइ कंदुगेण नाणाविहकीलारसभरेण ॥ १६ ॥ नहु थक्कइ हक्कइ पुरकुमार रे धावहु लावहु कंउयार । इय जंपिरेण हरिसेण तेण दिट्ठउ गोयमरिसि तरकणेण ॥ १७ ॥ पयपउमि लग्ग सो मुणिवरस्स वहुपुन्नजोगि समुवागयस्स । को रायहंस गइ सिक्खवेइ को उच्छुदंरु महुरिम ठवेइ ॥ १८ ॥ कुलवंत होइ नणु विणयवंत विणसिक्खिय अक्खिय सो महंत । अंगुलीयलग्ग अइमुत्त वत्त इय करइ हरइ मुणिवरहचित्त ॥ १९ ॥ तुम्हे पहु निवसहु कत्थ ठामि पुरनयरदेसि आरामिगामि । पुरमज्झि भमहु कुण कारणेण तो अक्खिय गोयममुणिवरेण ॥ २० ॥ घात-भो भिक्खाकारणि उच्छहपारणि हउं भमामि पुरि कुमरवर । सिरिवीरहपासिहिं नणु वणवासिहिं वासमज्झि अच्छइ पवर ॥ २१ ॥ भास-इय गुरुवयण सुणेवि कुमारो सिरिअइमुत्त कहइ जगसारो । सामीय मज्झघरिहि पधारउ सुकयवल्लि वणराइ वधारउ ॥ २२ ॥ आवंतउ नियनंदण निरखीय सुगुरुसत्थि जणणी मणि हरखिय । पुन्नवंत अप्पणपउं मन्नइ कुमरतणा गुण वयणिहिं वन्नइ ॥ २३ ॥ तरकणि संमुह आविय अंवा गुरुदंसणि पुलइय अविलंवा । पयजोहारिय मोयग अप्पइ अप्पण पुन्नवंतधुरि थप्पइ ॥ २४ ॥ चित्तवित्तसुद्धीय मुणेविण पडिगाहइ मुणिपत्तधरे विण । तो अइमुत्तकुमर मणि तुट्ठउ मज्झ मणोरह फलियगरिट्ठउ ॥ २५ ॥ महुरवाणि

अह नंदण जाणइ जणणी जणयह मण उल्लासइ । सामि कहउ तुम्हि किंहि आएसहु वीरपासि आवहु आएसहु ॥ २६ ॥
गोयमगणहर घणिरिहिं पहुत्तउ मणहरकुमरिरिहिं सो संजुत्तउ । रूवकंतिरवि जिम दिप्पंतउ जगपरीसहरिउ जिप्पंतउ
॥ २७ ॥ सामिय कुमर पिक्खि समुयागय पुछइ घण सछमइ सागय । वेसणअमियरसिरिहिं सिंचेई जवउरदाहसु परिवे-
वेई ॥ २८ ॥ इहु असारसंसार गणिज्जइ धम्मसार नरजम्मि सुणिज्जइ । देहसिरि जिम धययरूअंचल धणजुवणपरि-
यण सहु चंचल ॥ २९ ॥ जररक्कसि आवइ धावंती ठवइ सयणजण इत्थ न जंती । तसु जो अप्प न रक्खइ मुक्खो
अंतकाळि सो होइ विलक्खो ॥ ३० ॥ आहिवाहि जा तणु न विणासइ सोगसंग जा अंग न गासइ । इंदियसत्तिहाणि
नहु गच्छइ जाव पिरूअल पयरूउ अच्छइ ॥ ३१ ॥ ताव धम्म आयरिहिं करिज्जइ जीवियजम्मतणाउ फल लिज्जइ । सव-
संजलि जिणवाणी पिज्जइ जरामरण दुह दूरिं गमिज्जइ ॥ ३२ ॥ दीक्खदीणजण करुणा किज्जइ पाणीय साथी नेव हणि-
ज्जइ । अलिय अदत्त अबंभ निवारउ अप्पण पउं संसारह तारउ ॥ ३३ ॥ घात-इज्जइ सुणेविणु तव मुणेविणु चि-
त्तिहिं रंजिय कुमरवरो । संपत्तउ नियघरि पुछइ अवसरि आवीय जणणीजणयपुरो ॥ ३४ ॥ जाम—धणउळ्ळइ घण
जिम उल्हसीयउ मह मणु अज्ज धम्मि नणु वसीयउ । वड्ढमाण जिणवर वक्खाणीय धम्मवत्त मइं निच्चउ जाणीय ॥ ३५ ॥
धम्म इक्क परमत्थ मुणिज्जइ अवर सहू अकयत्थ गणिज्जइ । जउ चिंतामणि करियलि कलीयउ तउ किं काच करइ अगि
रुलीयउ ॥ ३६ ॥ सामिय पासि गहिसु हउं दिक्खा घणु परिपालिसु निच्चल सिक्खा । घरि घरि गोयरचरिय जमेसो
चंचलचित्तपयंग दमेसो ॥ ३७ ॥ तो पियरिहिं पुछियउ कुमारो, एवडउ किम मुणिय वियारो । महुर वयणि अइसु-

त्तउ बुज्झइ पिउ सणेहबुद्धिहिं नहु रुज्झइ ॥ ३८ ॥ जं मइं जाणिय तं नवि जाणिय जं जाणिय तं पुण न वियाणिय । एरिस असमंजस तव्वासिय निसुणिय माइपियर उव्वासिय ॥ ३९ ॥ वछ कहं एरिस तउं जंपइ तो अइमुत्तउ वोल्लइ तं पइ । एय वत्त परमत्थ महंतउ तुम्हि बुझउ मइं पयडिज्जंतउ ॥ ४० ॥ जउ जायउ तउ निच्छइ मरई पुन्नपावसत्थिहिं अणुसरई । तं न मुणिज्जइ जं पुण किणिखणि जीव मरेस्सइ पुरि वाहिरि वणि ॥ ४१ ॥ नवि बुझउं कुणसउं जिउ गच्छइ नरयमझि तिहिं दुक्खिय अच्छइ । जाणउं पुण सो वेढिय कम्मिहिं जाइ सही संकिण अधम्मिहिं ॥ ४२ ॥ घात— तो अरकइ राया मिच्छिय माया जाया संत्रलि तउं लहु य । कह चरण चरेसी कउ करेसी खुह पिवास दुह अइवहुय ॥ ४३ ॥ त्रास—तुह पउमपत्तसुकुमालदेह लायन्नपुन्न नणु सुक्ख गेह । खग्गधारतिक्खा पुण दिक्खा कह मग्गिसि घरि घरि पुरि भिक्खा ॥ ४४ ॥ पंचमहव्वयमेरु धरेवा भुयवलि निय सिरिलोयकरेवा । दुसह परीसह अंगि सहेवा दुक्खसुक्ख न लगार कहेवा ॥ ४५ ॥ सत्तुमित्त तणतुल्ल गणेवा विणयगुणिहिं सुत्तत्थ भणेवा । दुक्कर किरिय करिसु तउं केम वछ सुक्ख अणुहवि सुर जेम ॥ ४६ ॥ भुत्तभोग चारित्त धरे जे रहि घरि नंदण रज्ज करे जे । कहइ कुमार किं पि न दुहे- लउ धीर नरह सवं पि सुहेलउ ॥ ४७ ॥ दुद्धर गिरि भुयवलि उप्पाडइ मेरुसिहरि अप्पाण पउं वाडइ । गयणमग्गि चरणहवलि चल्लइ सेसनाग नियकंठिहि घल्लइ ॥ ४८ ॥ तिहुयण जण नयणह त्रिण कहइ जं असझ तं कज्ज पसाहइ । इय अइमुत्त वव(य)इ पिउ अग्गइ दुक्करदिक्ख सिक्ख सो मग्गइ ॥ ४९ ॥ उत्तालत्तणवाल न किज्जइ कित्तिय काल विलंब वहिज्जइ । इय जा जणणि जणय तं बुज्झइं पुत्तविरह जाणी मनि रुज्झइं ॥ ५० ॥ ताव कुमार कहइ जो निसुणह जीविय

जुवण पयस्र वियाणह । पाखण्णवि जिणि धम्म न किब्दउं तेणि अमिय मिल्हवि विस पिब्दउ ॥ ५१ ॥ पाव मुङ्क वक्षो वि न मुट्टइ खिज्जइ जमकिंकरिहिं अखुट्टइ । धण परियण सहु ठब्रिय पछइ संबल विणु जणु परजवि गच्छइ ॥ ५२ ॥ इय निसुणिय सुयपजणिय माया हरिसुल्लसिरसरीरा आया । पछि किज्जउं तुह परिस सुपइ ठहिं यरसिहिं पेक्खिव अणुघट ॥ ५३ ॥ कहमवि माइपियरि अणुमन्निय संघसयल अच्चिय बहुमन्निय। रयणुज्जल आजरण अलंकिय परछ कम्मि चढिय निस्संकिय ॥ ५४ ॥ नरसहस्सवाहणसिबियागय धरिय ठत्तचामरजुय संगय । जय जय रव मग्गणजण घुप्पई पियरचित्त सुयनेहिणि सप्पई॥५५॥जह तारायणि ससि परियरियउ परियणि सयणि तहा अणुसरीयउ । तूरनादिगिरि अंबर गज्जइ मधुरभेरि फल्लरि तिहिं वज्जइं॥५६॥रयहरणिहिं मुणिवेसिहिं जुत्तउ अइ असार ससार विरत्तउ। तिहिं गुणिहिं गुत्तउ अइमुत्तउ सामी समवसरणि संपत्तउ ॥ ५७ ॥ अह राया तह सिरियामाया विणवंति पणमिय पहुपाया । अम्ह सुयह पहु दिस्का दिज्जइ कुमरोपरि सुपसाउ करिज्जइ ॥ ५८ ॥ तो दिस्किय पहुणा नियहत्थिहिं सिक्खियउ रायकुमर मुणिसत्थिहिं । उपारिसिउवि संजम पालइ पावपंकजर दूरिहिं टालइ ॥ ५९ ॥ सामि जणइ नवइ तउ धम्मउ अमु नंदण इणिपरि कयपुन्नउ । होस्सइ चरमसरीरी निच्छइ धन्न पुन्न जे लोयणि पिच्छइ ॥ ६० ॥ मास धरिस सो कइया होही जइया अम्हे विहु कयसोही । पहुपासिहिं चारित्त गहेस्सउं मोहपास मूलिहिं छिंदिस्सउं ॥ ६१ ॥ इय चिंतंता जिणयरयदिय निय कुमार मुणियर अभिनंदिय । नरवि जणय नियमंदिरि पत्ता देसण अमीयरसहिं संसित्ता ॥ ६२ ॥ अह

वरसालइ वाहिरि पत्तउ थविरसत्थि मुणिवर अइमुत्तउ । वाल वहुल खिल्लंता गंठिय रमणकजि हूअउं उकंठिय ॥६३॥ मट्टी तणीय पालि सो वंधइ खलहलंत जलवेगिहिं रुंधइ । नरितलाय जिमं फिरइ मिल्हइ नाव जेम दंडिहिं करि पिल्लइ ॥ ६४ ॥ हउं नावरू मुक चल्लइ नाव इम जलि रमलि करइ सो जाव । वय अणुसारइ मइ उप्पजइ सच्चिय वत्त जणह नणु गिज्जइ ॥ ६५ ॥ थविरमुणिंदिहिं ताव सुहकीय तयणिहिं खुडुयमुणि संकिय । लज्जिय जाव अहोमुह जाउं समवसरणि मुणिसत्थिहिं आउं ॥ ६६ ॥ थिरमुणिहिं पहु अग्गइ साहिय दगमट्टी य नणु एणि विराहिय । मा हीलइ अइमुत्तकुमारं उम्भरउब्भियसंजमभारं ॥६७॥ अन्नपाणदाणिहिं ससालह अम्ह सीस खुडुय परिपालह । इय पहु जाम भणिय ता पुज्जइं थविरमुणिंदे सुणंता अच्छइं ॥ ६८ ॥ जयवं जय अजव कुमारो चरमतणू अचरिमतणुधारो । पहु आइसइ भव चरमंगी इय सुणितु मुणि हुय सुहसंगी ॥ ६९ ॥ पहुपइ लग्गिय सुठु खमंतउ पुण पुण विणयभत्ति पणमंतउ । इक्कारस अंगाइं अहिज्जिय सिरि अइमुत्ति चरणविहिसज्जिय ॥ ७० ॥ तव करेइ गुणमणिसंवच्छर न धरइ अरइ रई दम मच्छर । अट्ठकम्मट्ठम मूलुच्छिंदिय केवलनाणलच्छि अभिणंदिय ॥ ७१ ॥ तेर वरिस सवाऊ पालिय संजमजलि अप्पउं परकालिय । निहुइरमणि सयंवरि वरीयउ दंसणनाणरयणगणभरीयउ ॥ ७२ ॥ घात—इणिपरि लहुयत्तणि जेम वुहत्तणि अइमुत्तइ जिणधम्मकिय । तिणि परि आराधउ सिवसुह साधउ भवियलोय खेमेहिं सहिय ॥ ७३ ॥

॥ इति श्रीअतिमुक्तकसन्धिः ॥

अथ पूर्वकृतसुकृतमाहात्म्यमाह—

पुव्विं कयं ज सुकयं उदारं, पत्तं नरत्तं नणु तेण सारं ।
करेसि नो इत्थ जया सुकम्मं, कहं सुहं जीव लहेसि रम्मं ॥ ४० ॥

व्याख्या—पूर्वं पूर्वजन्मनि कृतं निर्मितं यत्सुकृतं दानशीलतपप्रभृति । किंभूतं ? उदारं अद्भुतं स्वर्गमोक्षसुखप्रदाने जिनधर्मस्य दानशौण्डत्वात्, न तथाऽन्यधर्मस्य सामर्थ्यं, तत उदारमिति, प्राप्तं लब्धं नरत्वं नरजन्म । नन्विति निश्चितं । तेन कारणेन सारं तत्त्वभूतं सुकृतानुभावेनैव सत्कुले जन्म लभ्यते, नान्यथा । एवंविधायां धर्मसाधनसामग्र्यां प्राप्तायां सत्यामपि रे प्राणिन् करिष्यसि न अत्र जन्मनि यदा सत्कर्म कथं तदा सुखं लप्स्यसे रम्यं चेतोहारि इति काव्यार्थः ॥

अत्रार्थे श्रीमृगापुत्रेण यथा मातरपित्रोरग्रे स्वमनोरथ एतदुपदेशगर्भो यथोद्दिष्टस्तथैवोपदिश्यते—

पुरे वनोद्यानविभूषयाऽऽवृते, नाम्नास्ति सुग्रीवपुरं रमाम्बुवम् । यकास्ति तस्मिन् बलभद्रभूपतिर्यः प्रधनीतिप्रततावनूपति ॥ १ ॥ गुणाकरस्तस्य गृहेऽस्ति कामिनी, नाम्ना मृगा भर्तृमनोनुगामिनी । तयोर्मृगापुत्र इति प्रसिद्धिमान्, सुतो बलश्रीरजयश्रयर्द्धिमान् ॥ २ ॥ स यौवराज्यं सुकृती दधाति, प्रेष्ठः स्वपित्रोर्न गुणान् जहाति । सौधस्थितः क्रीडनमङ्गनाभिः, करोति दोगुंदकवत्सयान्निः ॥ ३ ॥ मणीमयावासगवाक्षसङ्गतः, पुरश्रियं पश्यति चित्तरञ्जकः । स्थाने चतुष्कत्रिकचत्वरादिके, दृष्टिं दधच्चेतसि तुष्टिमान् स्वके ॥ ४ ॥ तेषु त्रिकादिष्वथ संयतं समागच्छन्तमालोकयति स निस्तमाः ।

१ अनूपो जलमयः प्रदेशस्तद्वदाचरति.

तपःक्षमासंयमविभ्रमाधरं, स शीलवन्तं श्रमणं शमाकरम् ॥ ५ ॥ मृगासुतस्तं किल निर्निमेषया, प्रैक्षिष्ट साधुं निजदृष्टिरेप ( ख ) या । व्यचिन्तयद्रूपममूदृशं मया, व्यलोकि किं क्वापि पुरा दृशाऽनया ॥ ६ ॥ जातिस्मृतिर्नैव गलस्तिमालिनस्तदाऽस्य रम्याध्यवसायशालिनः । जज्ञे मनोज्ञे मुनिदर्शने सति, मालस्य मूर्ध्नि प्रससार सन्मतिः ॥ ७ ॥ श्रामण्यमैक्षिष्ट पुरा कृतं स्वयं, सस्मार जातिं च पुरातनीमयम् । महर्द्धिको मंक्षु मृगातनूभवः, प्राप्तो विरक्तिं विषयेषु सूत्सवः ॥ ८ ॥ रक्तान्तरः संयममार्गलग्ने, भजन् विरक्तिं च भवे सदम्भे । इत्यब्रवीदग्रत एत्य मातुः, पितुश्च संयोज्य करौ प्रमातुः ॥ ९ ॥ श्रुतान्यहो पञ्च महाव्रतानि, श्रुतानि तिर्यङ्नरकाश्रितानि । मयोग्रदुःखानि भवाद्विरक्तः, पित्राज्ञया प्रव्रजनेऽस्मि सक्तः ॥ १० ॥ हे अम्ब हे तात विषानुरूपा, भुक्ता मया भोगभरा विरूपाः । पश्चाद्विपाके कटुतां भजन्तः, कष्टं गरीयोऽसुमतां सृजन्तः ॥ ११ ॥ कुशाग्रवार्बिन्दुचलं शरीरं, पूत्युद्भवं चाशुचिताकुटीरम् । जीवस्य च स्थानमिदं ह्यनित्यं, दुःखस्य विभ्रत्परमाधिपत्यम् ॥ १२ ॥ अशाश्वतेऽङ्गे न रतिं लभेऽहं, पश्चात्पुरा त्याज्यमिदं हतेहम्[2] । जितोद्वसद्बुद्बुदवारिफेनं, स्वचापलेनोन्मदकर्मसेनम् ॥ १३ ॥ नो रंरमीत्यत्र हि मानुषत्वे, मनो ममाविष्कृतरोगसत्त्वे । जनुर्जरामृत्युभयाभिभूते, सदाप्यसारे कलुषैर्विधूते ॥ १४ ॥ दुःखानि रोगा मृतिरस्ति दुःखं, जन्मास्ति दुःखं जरितास्ति दुःखम् । क्लिश्यन्ति जीवाः सकला यदर्थं, स दुःखमेवास्ति भवस्तदर्थम् ॥ १५ ॥ दृष्टो गृहं क्षेत्रमथो हिरण्यं, स्त्रीपुत्रबन्ध्वादि न मे शरण्यम् । मया स्वकं संहननं हठेन, प्रोन्मुच्य गन्तव्यमिहावशेन ॥ १६ ॥ कान्तानि यद्वत्परिणामगानि,

१ दीप्तिरिव. २ हता ईहा इच्छा यस्य तत्.

स्तुर्नैव किंपाकतरोः फलानि । रम्याणि नो भोगतरोः फलानि, स्युरत्र तद्वत्परिणामजानि ॥ १७ ॥ निशम्यलोकोऽध्वान-
महो महान्तं, यः पूरुषः सर्पति ही नितान्तम् । गच्छन् स दुःखं लभते पिपासा, क्षुधातुरो भूरितरप्रयासात् ॥ १८ ॥
यथैत्यमत्राविरचय्य पुण्यं, नरः भवात्यन्यभवोर्यरण्यम् । गच्छन् स रोगैः परिपीड्यमानः, पदे पदे स्यादसुखैः सहानः
॥ १९ ॥ पाथेययुक्तः सरति महान्तं, यथाध्वगो गच्छति यो नितान्तम् । गच्छन् स सौख्यं लभते पिपासाक्षुदादिकष्टै
रहितोऽल्पयासात् ॥ २० ॥ इत्थं भवे योऽत्र विधाय पुण्यं, नरः भवात्यन्यभवोर्वरण्यम् । स सेपनीयपत आप्तशर्मा,
गच्छन् विमुक्तो व्यथयाऽल्पकर्मा ॥ २१ ॥ यथा प्रदीप्तेऽपि गृहे गृहस्य, स्वामी प्रभुस्तस्य शुभं विमृश्य । उपेक्षते सर्व-
मसारभारं, बहिर्नयत्येव स सारभाण्डम् ॥ २२ ॥ एवं जरामृत्युयुगेन लोके, सति प्रदीप्ते न शुभं विलोके । स्वं तार-
यिष्यामि भवाब्धिमध्यादनुज्ञयाऽहं भवतोः स्वमुक्त्या ॥ २३ ॥ तदाहतुस्तत्पितरौ सुदुष्करं, भोः पुत्र चारित्रमिहाक्षि
दुष्करम् । भिक्षोः सहस्राणि पुनर्गुणानां, धार्याणि सम्यक् सदोत्स्वपानाम् ॥ २४ ॥ अरौ च मित्रे समताऽनिवारा,
भूतेषु कार्या निखिलेषु तैरा । प्राणातिपातादिरतिश्च यावज्जीवं विधेया जगतीह तावत् ॥ २५ ॥ सदोपयुक्तेन मृषा न
भाषाऽऽभाष्या कृशावधसराभिलाषा । हितं मितं भोः परिभाषणीयं, सेव्या स्थितिः सज्जनसाक्षिणीयम् ॥ २६ ॥ न
दन्तसंशोधनमात्रमिष्टं, ग्राह्यं परस्यानिशमप्यदत्तम् । देयं महादुष्करमेषणीय, हेयं तथानाध्यमनेषणीयम् ॥ २७ ॥ अम-
स्मर्यादनिशं विरक्तियोग्या भवोऽभीप्सितभोगमुक्तिः । महाव्रतेष्वेतदतीव दुष्करं, धार्य व्रतं वा करवर्तिपुष्करम् ॥ २८ ॥

* अन्यभव एवारु विशालमरण्यम् १ जरामृत्युयुगलेन २ दीप्तोज्ज्वलेति यावत् ३ पुष्करं खड्गधारा

धनेषु धान्येषु परैधितेषु, त्याज्यं मनः सङ्ग्रहकारितेषु । आरम्भवृत्तिः सकला प्रहेया, सुदुष्करा निर्ममताऽभ्युपेया ॥ २९ ॥ चतुर्विधाहारकृतापहत्या, त्याज्यं निशाभोजनकं विरत्या । स्याहुष्करस्त्यकुमसौ मुनीनां, यत्संचयः प्रोज्झितसन्निधीनाम् ॥ ३० ॥ सह्याश्च शीतोष्णतृषाबुभुक्षाः, कार्या न दंशे मशकेऽङ्गरक्षा । सह्या मलाक्रोशनदुःखशय्याः, स्पृष्या तृणानां सह कष्टमय्या ॥ ३१ ॥ भिक्षाटनं याचनमप्यलाभता, बन्धो वधस्ताडनतर्जनावता । द्वाविंशतिर्व्यक्तपरीषहाणामस्तीह सह्या सुधियाऽप्रमाणा ॥ ३२ ॥ कापोतिकी वृत्तिरियं सशङ्का, स्याहुष्करा दोषहृतेरपङ्का । आत्मेक्ष्यते ब्रह्म गुणानुसर्ता, स्यात्केशलोचोऽपि च कष्टकर्ता ॥ ३३ ॥ त्वमाश्रितब्रह्मणपिपरूसाम्यः, सुखी मृदुः स्त्रीजनचित्तकाम्यः । ज्ञोः पुत्र न स्याः प्रभविष्णुरङ्गे, धर्तुं चरित्रस्य गुणं सुचङ्गे ॥ ३४ ॥ आजीविताद्भार उरुर्गुणानां, वाह्योऽस्त्यविश्रामतयोह्वणानाम् । यः स्यादयोभार इवातिदुःसहः, स्फुरद्बलानामपि वत्स दुर्वहः ॥ ३५ ॥ आरब्धमेतत्तरणाय नव्यं, गङ्गानदीश्रोत इह प्रसव्यम् । स्वकीयदोर्भ्यां तरणीय एष, स्फुरद्गुणाम्भोधिरवाप्तरेषः ( खः ) ॥ ३६ ॥ आस्वादमुक्तः कवलोऽधमायाः स्याद्यादृशः सम्प्रति वालुकायाः । स्यात्संयमस्तादृगसिस्थधारागमोपमाः सन्ति तपःप्रचाराः ॥ ३७ ॥ एकान्तदृष्ट्याऽहिरिवोपलक्षितुं, स्यात्संयमो दुष्कर एष शिक्षितुम् । अयोमयाः स्वेन च चर्वणीया, यवा मुखेनासुखसमर्पणीयाः ॥ ३८ ॥ यथोग्रकष्टाय च जातवेदःशिखाप्रपानं भुवि जायतेऽदः । श्रामण्यकं पुत्र तथाऽवसेयं, स्वयौवने दुष्करमप्रमेयम् ॥ ३९ ॥ दृतिर्न यद्वत्सुकराऽनिलेन, स्यात्कस्यचित् पूरयितुं वलेन । क्लीवेन नो पालयितुं प्रपार्यते, तद्वद्यतित्वं न

तमोऽपि पार्यते ॥ ४० ॥ स्याद्दुष्करस्तोलयितुं यथा नुस्तुलाधिरूढः किल रत्नसानुः । तथा चरित्राचरणं गयेन्यं, कष्टाय निःशङ्कतया विशेष्यम् ॥ ४१ ॥ न स्यात्तरीतुं सुकरो भुजाभ्यां, रत्नाकरो यद्वदसाधुजाभ्याम् । तथोपशान्तेर्दमवीचिमाली, स्याद्दुस्तरः पुण्यपथाशुमाली ॥ ४२ ॥ मनुष्यजोगाननुपञ्चक पञ्चप्रकारयुक्तांस्त्वमतः सदैवः । भुक्तेष्वभोगस्तदनूरुहाहो, नूयाः सधर्मः परियाजयाहो ॥ ४३ ॥ ततो मृगापुत्र उवाच मातस्तातेयमेवेदमुदीरणातः । सुदुष्कर किञ्चिदहो नरस्य, स्यान्नेह लोके तृषयोज्झितस्य ॥ ४४ ॥ सोढा अनन्ताः स्वमनःशारीरजा, दुर्वेदना नित्यमिमाः समं रुजा । प्राप्तानि दुःखानि घनेनसा भयान्यमून्यनेकान्यपि सर्वतो मया ॥ ४५ ॥ स्फुरज्जरामृत्युजयास्त्यरण्ये, जयेऽत्र चातुर्गतिकेऽप्यगण्ये । जयप्रपूर्णेऽहमनेकरूपः, सोढा सदा जन्ममृतीरसत्यः ॥ ४६ ॥ जाज्वल्यमानो भुवि यादृशोऽत्र, भोग्यस्तोऽप्यस्ति स धीतदोत्रः । यथारकेऽनन्तगुणो प्रधार्त, तत्रापि सोढं भयकोष्णजातम् ॥ ४७ ॥ लोकेऽस्ति यादृग्विषमत्र शीतं, तदरस्यतोऽनन्तगुणे प्रशीतम् । सापि स्वदुष्कर्मकृतापराधात्सोढा मया नारकशीतबाधा ॥ ४८ ॥ आक्रन्दकर्तोर्ध्वपदोऽप्यधस्यस्फुरच्छिराः कष्टज्वरैरसुस्थः । ज्वालाकुलेऽहं ज्वलनेऽस्मि पक्वः कुम्भीगतोऽनन्तश एव पक्वः ॥ ४९ ॥ कदम्बयवादिमवालुकानधन्तर्गतेऽहं पुलिनेऽधिमानः । दग्धोऽपितुल्ये मरुवालुकायाश्वास्यमाने पचुशोऽस्मि तावत् ॥ ५० ॥ सुजीमकुम्भीषु रसन् विशिष्य, प्रोच्चैर्निबध्योपरि पा भुविभ्यः । निर्बान्धवः सन् क्रकचासिधाराज्जरैर्विभिन्नोऽहमनन्तवारान् ॥ ५१ ॥ सुतेऽतितीक्ष्णाननकण्टकाकुले, यच्छाल्मलिद्रोरुरुच्चे सदाविखे । हा पाशबद्धेन मयाऽपकर्षणे,

१ नरस्य. २ हे पुत्र ३ भसि।

पुनः पुनः खिन्नमतीव कर्पणैः ॥ ५२ ॥ अथारसन्निक्षुरिवातिभैरवं, बलेन यन्त्रे महतीव कैरवम् । सौमालमङ्गं विदधत्स-
कार्मुकैर्निष्पीडितोऽहं परमाधधार्मिकैः ॥ ५३ ॥ स्वरूपवच्छूकररूपवद्भिः, श्यामैस्तथाऽहं शबलै रसद्भिः । आक्रन्दकृद्भूमि-
तले प्रपातितश्छिन्नोऽथ जीर्णांशुकवच्च पाटितः ॥ ५४ ॥ नव्यातसीपुष्पसमासिजालैर्ज्वलैस्तथा पट्टिशचक्रवालैः । दुष्कर्म-
कोट्या निरयेऽवतीर्णश्छिन्नो विभिन्नोऽहमथो विदीर्णः ॥ ५५ ॥ प्रयोजितो लोहरथे ज्वलत्याधारोज्झितो दुस्त-
रकर्मगत्या । अत्युष्णशम्ये पशुवच्च तोत्रैस्तत्रेरितः पातनतः कुयोत्रैः ॥ ५६ ॥ भस्मीकृतः सैरभवच्चितासु, ज्वलद्धूहङ्गा-
नुसमाश्रितासु । अहं पुनर्हा विवशो भटित्रीकृतोऽशुभ्रा पापकृतिर्भवित्री ॥ ५७ ॥ संदंशतीक्ष्णाननकोटिसङ्गैर्लोहोपमै-
श्चञ्चुपुटैः पतङ्गैः । ढङ्कैश्च गृध्रैर्विलपन् विलुप्तः, कठोरचौरैः सुधनीव सुप्तः ॥ ५८ ॥ इतस्ततो धावितवान्सधीतिर्यावन्नदीं
वैतरणीं सभीतिः । अहं गतः पानकृते तदा हतः, क्षुराभतप्तीचिभरैः समाहतः ॥ ५९ ॥ तृष्णाभितप्तस्त्वसिपत्रनामकं,
यदा वनं संगतवान् यथार्थकम् । तदाऽसिपत्रैः प्रबलैः प्रपातुकैश्छिन्नोऽहमंहोवशगोऽङ्गपातकैः ॥ ६० ॥ प्रोतस्त्रिशूलैर्मु-
शलैः कठोरैर्भग्नस्तनौ मुद्गरकैश्च घोरैः । अनन्तशो दुष्करदुःखमृष्टः, सोऽहं गताशो ह्यभवं निकृष्टः ॥ ६१ ॥ तीक्ष्णैः
क्षुरप्रैः क्षुरिकावलीभिः, शिताग्रधारायुतकल्पि (हप) नीभिः । अनन्तकृत्वो द्विदलीकृतोऽहं, विखण्डितः क्षुरमुखव्यं-
पोहम् ॥ ६२ ॥ प्रसारिवश्यो रुरुवन्निरुद्धः, पाशैश्च कूटैर्हृदयेऽप्यशुद्धः । व्यापादितोऽहं बहुशो निबद्धः, शिरोमणिः

१ शम्या युगकीलकः. २ प्राजनैः. ३ योत्रं "जोतर" इति भाषायाम्. ४ सपिपासः. ५ पापवशगः. ६ कल्पनी—कर्त्रिका. ७ व्यपोहं—वैपरीत्यं. ८ परितो रोधवश्यः.

पाप्मचूतां प्रसिद्धः ॥ ६३ ॥ तप्तस्वैर्येर्मकरानुकारिभिः, प्रपादितो निर्दयचित्तचारिभिः । जालैर्गृहीत्वा त्विव सक्षचारी, गर्तैर्गते भिन्न इवार्त्तिधारी ॥ ६४ ॥ श्येनैर्गृहीतः खगवच्च जालैर्बद्धश्च लिप्तः पटुलेपजालैः । अनन्तवारान् सकलैश्च मारितः, केनापि कर्माभ्युदयो न वारितः ॥ ६५ ॥ यथा द्रुनिर्कृत्त इवानिघातैर्मूर्छीकृतोऽहं निशितैः कुठारैः । तथोऽपरत्वोपरि तद्त्तिश्च, भिन्नोऽथवाः कुट्टितपाटितश्च ॥ ६६ ॥ तैराहतः कुट्टित एव मायस्कारैरहं लोह इव स्वपायः । श्वसत्सी- कृतः प्राप्य घनाश्चपेटा, मुष्टीश्च पुष्टीकृतकुम्भपेटाः ॥ ६७ ॥ तप्तानि ताम्राणि पराणयासि, अपूर्णयसो सीसकुडपयासि । प्रपायितः कामसयापितानि, स्वास्येऽपि कुर्वन् कटुकूजितानि ॥ ६८ ॥ आसन् पुरा तेऽतिमनोमतानि, शूल्यानि मांसानि विलम्बितानि । कृशानुवर्णानि निजानि पक्त्वा, मांसान्यहं खेमित एवमुक्त्वा ॥ ६९ ॥ तयाऽभवत् पूर्वभवे च कोंद- म्बिनी प्रियोक्त्वेति दयद्विपादम् । प्रपायितोऽहं निरये ज्वलन्तीरसृग्वसाः पूतिरसैर्मिलन्तीः ॥ ७० ॥ त्रस्तश्च नीतः परि- कम्पमानाङ्गोपाङ्गयुक्तोऽहमत्यासमानाम् । निरन्तरं वेदितवान् प्रचण्डां, दुर्वेदनां नारकवासजाताम् ॥ ७१ ॥ मयाऽतितीव्रा नरकस्य वेदना, सुदुःसहा निर्मितगात्रभेदनाः । संश्रूयमाणा अपि भीतिकर्त्र्यः, सोढा मनोऽन्तर्गततोपदर्त्र्यः ॥ ७२ ॥ याहश्यहो तात निरीक्ष्यमाणाऽस्ति वेदना लोकगताऽपेक्षाणा । साऽऽस्ते ततोऽनन्तगुणाधिकत्वं, समुद्वहन्ती नरकेऽनुस- त्वम् ॥ ७३ ॥ भवेषु सर्वेषु मम ह्यसाता, श्रिता व्यथा हे पितरत्र जाता । न आतवानस्मि निमेषमात्रं, कदाऽप्यहं सुख- निःसमसातपात्रम् ॥ ७४ ॥ श्रुतस्ततस्तत्पितरौ सुतस्य, स्वैरं भव प्रव्रजितः सुत त्वम् । श्रामण्यमार्गे परमस्त्यतुष्टा, सुदु-

१ मत्स्याः. २ मत्स्यविशेषैः. ३ सुखरामपायो नाशो यस्य सः. ४ मदिरा ५ अविनाशिनी

ष्करा रोगगणाचिकित्सा ॥ ७५ ॥ उवाच पुत्रः पितरौ मृगाया, योक्ता स्थितिर्निःप्रतिकर्मतायाः । सा दुष्करा नास्ति वयो-
मृगाणां, प्रतिक्रिया काऽस्ति वनेचराणाम् ॥ ७६ ॥ एकाक्यरण्येषु यथा कुरङ्गः, सर्वत्र कुर्याद्भ्रमणं सरङ्गः । धर्मं चरि-
ष्यामि तथाऽहमेनं, तपोयमैर्जैनमताम्बुजेनम् ॥ ७७ ॥ वने यदैणस्य भवेत्पुष्यातङ्कस्तदा ते(के)न शरीररक्षा । चिकि-
त्सया भोः क्रियते प्रयस्य, स्थितस्य मूले फलदस्य तस्य ॥ ७८ ॥ रोत्यौषधं तस्य च कः कृपालुः, पानाशने यच्छति कल्य-
पालुः । संपद्यते तस्य हि कः सुखस्य, प्रष्टा पुनः स्पष्टमवाङ्मुखस्य ॥ ७९ ॥ यदा च स स्यात्सुखितोऽत्र वातप्रमीस्तदा गच्छति
चेतनातः । स्वभुक्तपानादिकृते सरांसि, स्वयं वनान्यप्यथ नीरजांसि ॥ ८० ॥ स्वच्छन्दयमास्वाद्य पयो निपीय, स्वैरं
सरःकच्छरे निलीय । इतस्ततश्चोत्प्लवनैर्विजाति, स्वीयाश्रयश्रोणितटे प्रयाति ॥ ८१ ॥ कुरङ्गवन्निस्तुलसंयमानुष्ठानो मुनि-
र्भ्रमणोत्कजानुः । इत्थं चिकित्साभिमुखो न भावी, निर्वाणमाप्नोति च कर्मलावी ॥ ८२ ॥ मृगो यथैकोऽपि न नित्य-
वासी, नैकत्रचारी चटिताशनाशी । एवं मुनिर्गोचरणप्रविष्टः, कदन्नहीलाकरणान्न लष्टः ॥ ८३ ॥ अहं चरिष्यामि कुर-
ङ्गचर्यामेवं बलश्रीयुवराजवर्यात् । श्रुत्वोचतुस्तत्पितरावनुज्ञया, गच्छानयोः पुत्र यथासुखं स्यात् ॥ ८४ ॥ ततः स तत्याज
निजोपधिं समं, जगाद चैवं पितरौ गतभ्रमम् । अनुज्ञया वामसुखापहामहं, कुरङ्गचर्यां रचयाम्ययान्वहम् ॥ ८५ ॥ एवं
मृगासूः पितरं च मातरं, ह्यादनुज्ञाप्य समस्तमान्तरम् । ममत्वमुन्मूलितवान् सकञ्चुकं, तनोर्महानाग इवाधिकं स्वकम्
॥ ८६ ॥ मित्राणि पुत्रानपि पद्मवासां, कलत्रराजीं यदने सहासाम् । निर्धूय बन्धूनिरगान्निकायाद्रजोवदेषोऽपि बहिः

१ ईनः सूर्यः. २ ददाति. ३ निवासात्.

स्वराज्यात् ॥ ८७ ॥ समित्युपेतो व्रतपञ्चतय्या, श्रितश्च गुप्तिप्रकटत्रितय्या । सदा शुभध्यानयुगान्तरेण, बाह्येन युक्तस-
पसोन्त(त)रेण ॥ ८८ ॥ अगारवस्त्यक्तसमप्रसङ्गः, त्यक्ताभिमानोऽममः सुचङ्गः । जीवेषु तुल्यस्त्रसकस्थिरेषु च
स्थावरकेष्वनिर्वृतिः ॥ ८९ ॥ लाभे सुखे चरितरापमाने, माने मृतौ जीवितकेऽविगाने । ध्यानेऽप्यध्यानेऽप्यसमाधिवर्ती,
श्लाघासु निन्दासु च साम्यधर्ता ॥ ९० ॥ महाकषायेष्वथ गारवेषु, दण्डेषु शल्येषु पुनर्जये(बे)षु । शोकेषु हास्येषु दधौ
निवर्तनं, निर्बन्धतः प्राप्य निदानकर्तनम् ॥ ९१ ॥ अनिश्रितः साधुतयेह लोके, निरीहताभाक् च परत्र लोके ।
समोऽशने चानशनेऽपि वासीगोशीर्षसङ्गेऽपि समत्वभासी ॥ ९२ ॥ द्वारात्रयसो जन्तुवधादिकानि, स्थितः पिधायाप्र-
मतोऽशुभानि । अर्हन्मतस्थः सुदमः सुयोगश्चिरं शुभध्यानकृताभियोगः ॥ ९३ ॥ एवं चरित्रेण च दर्शनेन, ज्ञानेन रक्त-
तपसा घनेन । सद्भावनाभिः परिभावयित्वा, सम्यक्कयात्मानमघानि हत्वा ॥ ९४ ॥ बहूनि वर्षाणि च पालयित्वा, श्राम-
ण्यमागामि निभालयित्वा । मासोपवासानशनं ततान, प्रापोऽपवर्गं महिमैधमानः ॥ ९५ ॥ एवं प्रकुर्वन्ति विचक्षणा ये,
प्रबोधवन्तः शमिनः स्वकार्ये । निवृत्तिमायान्ति च भोगसुखेभ्यः, श्रुत्वा मृगापुत्रचरित्रयुक्तेः ॥ ९६ ॥ श्रुत्वा मृगापुत्रमुनि-
प्रवरस्य, प्रभाविनो भाषितमप्रमस्य । तपःप्रधानं चरितं च तस्य, गतिप्रधानं त्रिजगत्स्तुतस्य ॥ ९७ ॥ विज्ञाय दुःखो-
दयवर्धनं धनं, ज्ययोपयुक्तं सममत्वबन्धनम् । अनुत्तरा धर्मधुरा वरापदा, धार्याऽत्र धन्यैः शिवकृद्गुणावहा ॥ ९८ ॥

॥ इति श्रीमृगापुत्रराजर्षिचरित्रम् ॥

---

१ अमेदिका

अथ श्रीजैनधर्ममूलद्वारभूतश्रीसम्यक्त्वोपरि काव्यमाह—

तवेण पक्खालियकम्मलेवो, अन्नो जिणिंदाउ न कोइ देवो ।
गुरू सुसाहू जिणरायवुत्तं, तत्तं च सम्मत्तमिमं निरुत्तं ॥ ७१ ॥

व्याख्या—तपसा द्वादशविधेन प्रक्षालितः कर्मलेपो येन सः । तथाऽन्यो जिनेन्द्रान्न कश्चिद्देवः । तथा गुरुः सुसाधुरष्टादशसहस्रशीलाङ्गधारकः शान्तदान्तात्मा । तथा श्रीअर्हदुक्तं तत्त्वं । एतत्त्रयं सम्यक्त्वमुक्तं सम्यक्तत्त्वं सम्यक्त्वं । एतल्लाभेन जीवस्य नारकतिर्यग्गतयः पिहितद्वाराः संजायन्ते, दिव्यमानुषसिद्धिसुखानि स्वाधीनानि संपनीपद्यन्ते । सर्वलाभेष्वयमेव महान् लाभः । यतः—"सम्मत्तम्मि उ लद्धे विमाणवज्जं न बंधए आउं । जइ वि न सम्मत्तजढो अहव निबद्धाउओ पुव्विं ॥ १ ॥" इति काव्यार्थः ॥

एतदुपरि श्रीमृगध्वजस्वरूपमुच्यते, तेन पूर्वमुपशमो नानीतः, पश्चान्मन्त्रिगिरा सर्वविरतिरादृतेति, एतद्विशेषं पुनर्मृगध्वजसम्बन्धप्रान्ते दर्शयिष्याम इति ।

श्रीवीरतीर्थपं नत्वा तत्त्वार्थख्यापनोद्यतम् । मृगध्वजमुनेर्वृत्तं वित्तं वक्ष्ये जगत्त्रये ॥ १ ॥ आस्तेऽमरावतीतुल्या कुल्याकासारभूषिता । श्रावस्ती नगरी श्रेष्ठा ज्येष्ठाचारनरैः श्रिता ॥ २ ॥ जितशत्रुनृपः प्राज्यं राज्यं तत्र प्रतापवान् । प्रपालयति विस्फूर्जदूर्जित[2]ार्जितवासवः ॥ ३ ॥ तस्य कीर्तिमती कान्ता शान्ताकारा शशाङ्कवत् । सीतेव विलसल्लीलाशीलाल-

१ प्रसिद्धम्. २ ऊर्जे—बलम्.

हारधारिणी ॥ ४ ॥ लावण्यागण्यसौभाग्यभाग्यशोभाधिभूषितः । तत्पुत्रस्तरणिर्धाम्ना नाम्नाऽजनि मृगध्वजः ॥ ५ ॥
धनेन धनदप्रायः प्रायः श्रेष्ठिशिरोमणिः । कामदेवः सदा राज्ञो मान्यो वसति तत्र च ॥ ६ ॥ स स्वकं गोकुलं द्रष्टुं द्रष्टुं
सारां महिर्षयी । दधकास्यः कृपारोपो गोपोऽस्य मिलितस्तदा ॥ ७ आयस्यौ गोपतिः स्वामिन् कामितार्थमरुत्सरो ।
गोकुलं महिषीवृन्दं मन्दं मन्दं विलोकय ॥ ८ ॥ अथ गोकुलसंस्पर्शदर्शनोत्सुकचेतसा । श्रेष्ठिनैकस्तदा दृष्टः स्पृष्टः कोपेन
सैरत्नः ॥ ९ ॥ दृशोरसूणि वर्षन्तं संतं स्वमहिषं तदा । मा भैषीर्दधकः प्राह व्याहरन् कोमलां गिरम् ॥ १० ॥ अस्माकं
श्रेष्ठ्यसौ स्वामी ग्रामीणानां यथा नृपः । आगच्छास्य पुरः कामं नोमं स्वशिरसा कुरु ॥ ११ ॥ निष्कास्य रसनामेष देवमु-
कस्तदाऽकरोत् । नयार्तोऽमे समागत्य सस्वरूपा नमस्क्रियाम् ॥ १२ ॥ श्रेष्ठिनोक्तमसौ तिर्यङ्‌निर्यगिषुः सखीः कथम् ।
एवमुक्तेऽथ दधकोपः कोपनिर्मुक्तमानसः ॥ १३ ॥ आकर्णय स्वमायुष्मन् युष्मद्दृष्टौ विजेत्यसौ । ससकृत्वोऽनुतापत्त्या हत्याऽस्य
विहिता मया ॥ १४ ॥ ज्ञानिनो वचसा ज्ञात्वा ध्यात्वा हिंसा च दुःसहाम् । दत्तमस्मै मया दानं सानन्दमभयाह्वयम्
॥ १५ ॥ श्रेष्ठ्यपि प्राप वैराग्यं भाग्यं गुरुतरं वहन् । तद्रूपः श्रयशार्ङ्गिसां खिंसामिव हृदि स्मरन् ॥ १६ ॥ ये चान्धाः
कुष्ठिनः काणाः प्राणाघातस्य तत्फलम् । नरकादिगतिप्रान्तिः भ्रान्तिर्जीवयधाश्रयेत् ॥ १७ ॥ अतः परं करिष्ये नो तेनोमं
वधमप्यहम् । ध्यात्वेति महिषस्यापि प्रापितं श्रेष्ठिनाऽभयम् ॥ १८ ॥ त्वज्जन्म जीवित साधु साधुस्त्वं शिरोमणिः ।
प्रमाणं स्वकुलं जाति सातिरेका शुभोदये ॥ १९ ॥ एवं कृते दयाटोपे गोपेन श्रेष्ठ्ययं स्तुतः । हीरसर्पैः समानीय

---

१ नमस्कारम् २ गर्हाम्

स्वीयगेहे च भोजितः ॥ २० ॥ भुक्त्वा श्रेष्ठी गृहे याति ख्यातिमान् यावदात्मनः । लग्नो विधोर्यथा खेटः केटकेऽस्य
मैहस्तदा ॥ २१ ॥ वारितोऽपि धनैर्गोपैः सोऽपैनैःप्रदभुर्मतिः । वलति स कथञ्चिन्नो भिन्नोऽपि लकुटैः स्फुटैः ॥ २२ ॥
श्रेष्ठिनोक्तं समायातु मातुः पार्श्वेऽङ्गभूरिव । चिन्तामस्य करिष्येऽहं गेहं प्राप्तस्य मामकम् ॥ २३ ॥ इत्युक्त्वा स्वगृहं नीतः
क्रीतः कर्मकरो यथा । महिषोऽन्नादिभिर्दानैः पानैः संपोषितोऽमुना ॥ २४ ॥ अन्येद्युः सपरीवारः कारणाच्च कुतोऽप्यसौ ।
श्रेष्ठ्यगाद्भूपतेः सद्म पद्मदृग्मिलनोद्यतः ॥ २५ ॥ महिषोऽप्यभवत्सार्थे पार्श्वे यद्वत्पराक्रमः । स्थातुं शक्नोति नैकाकी नाकीश
इव भूतटे ॥ २६ ॥ राजद्वारे गतो यावत्तावदारक्षको नरः । अग्रे दत्ते-न तं गन्तुं रन्तुं पुत्रं यथा पिता ॥ २७ ॥ काम-
देवस्तदोदारद्वारपालाद्विमोच्य तम् । महिषं भूधनोपान्ते कान्ते गत्वाऽकरोन्नतिम् ॥ २८ ॥ महिषोऽथ नृपं नत्वा सत्त्वा-
तुरमना भिया । निष्कास्य रसनां राजद्राजपर्षदि तस्थिवान् ॥ २९ ॥ निरीक्ष्येदृशमाश्चर्यं वर्यं पप्रच्छ भूपतिः । श्रेष्ठिनं
सोऽप्यभाजाणीश्राणीकृतसुधर्मधीः ॥ ३० ॥ राजन् जीवदयाधर्मः शर्मदो जन्तुसंततेः । येषां यागे वधाशंसा संसारे पर्य-
टन्ति ते ॥ ३१ ॥ महिषस्यास्य दुष्कर्मकर्मठस्य निशम्यताम् । विपाकः कर्मणां नेतश्चेतसश्चित्रदायकः ॥ ३२ ॥ महिषः
सञ्जयश्चेष एष मन्त्रोकुलेऽभवत् । मरणाद्विग्रहेऽतीव क्लीबत्वं विदधन्निजे ॥ ३२ ॥ जातिस्मरणयोगेनानेनादर्शि पुरातनः ।
आत्मीयको भवो यस्मात्तस्माद्रोदिति खिद्यते ॥ ३४ ॥ वेत्त्यस्य कोऽपि नो मर्म धर्ममूर्त्तिरथान्यदा । ज्ञानी कोऽप्यागत-
स्तत्र हृत्रवैश्यादिबोधकृत् ॥ ३५ ॥ सोऽवग्गोपं प्रति प्रेयः श्रेयस्कारी मुनीश्वरः । महिषोऽयं तमस्तमः ससवारं हत-

१ चन्द्रस्य. २ ग्रहो राहुरित्यर्थः. ३ महिषः. ४ [illegible] एनःप्रदा पापप्रदा दुर्मतिर्यस्य.

स्वया ॥ ३६ ॥ एकस्या जठरे जन्म सन्महिष्याः समाश्रितः । ततोऽयं कथ्यते दर्शी दर्शी तावकदर्शनम् ॥ ३७ ॥ सर्वेषां
प्राणिनामिष्टं मिष्टं क्षीरमिवानिशम् । जीवितव्यमिति श्रुत्वा तुष्टो गोपो मुनीश्वरम् ॥ ३८ ॥ चक्रे हिंसापरित्यागं राग
धर्मेऽप्यनुत्तराम् । अन्यदा गोकुलेऽह स हंसवन्मानसे गतः ॥ ३९ ॥ माहिषं शृसमाकर्ण्य पर्यमेतत्र दवरूकात् । हननं
सर्वजन्तूनां दूनानामत्यमत्यजम् ॥ ४० ॥ स्वसर्पत्यनिरामायामायासीदेव मत्समम् । यावतेऽप्याजयं देव केवलं युष्मद-
न्तिकात् ॥ ४१ ॥ भ्रमस्थायी निराधारः पारवश्येन पीडितः । साम्प्रतं चास्त्यसौ दीनो मीनो याहःजलोज्झितः ॥ ४२ ॥
ईदृग्महिषमालोक्य शोच्ययं ध्यातवान्नृपः । कोऽपि नास्त्युपकारी वा जीवानां भ्रमतां जये ॥ ४३ ॥ न कश्चिदेति चाघ-
मेकर्मणां विषमोदयम् । जीवा नरकतिर्यक्षु न कुत्र भ्रमणाद्धमी ॥ ४४ ॥ जीवयोनिषु चाम्प्रानाज्ञानात्ते संचरन्ति हा ।
विवेक दधते नैव दैवदत्तविडम्बनाः ॥ ४५ ॥ निगोदेषु परिभ्रान्ताः श्रान्ता नैव कथञ्चन । यासा चारिपरिखेदच्छेदनेत्रक-
दर्शनम् ॥ ४६ ॥ कुर्वन्ति नटवद्धास्य दास्य दासा इवानिशम् । जजन्ते बहुरूपाणि पाणिपादादिचेष्टनैः ॥ ४७ ॥ व्रजन्ते
सुलक्षणानि स्वानिकर्मोऽहसां जये । जीवा इति विमृश्यान्तः शान्तवृत्तिर्नृपोऽभवत् ॥ ४८ ॥ दशी जनेषु चादेशं देश-
मध्येऽस्य कोऽपि यः । महिषस्य वधं कर्ता हर्ता तच्छिरसोऽस्म्यहम् ॥ ४९ ॥ चतुष्पथे चतुर्दिक्षु जिह्वयन्महिषस्ततः ।
सर्वत्र भ्रमति स्मायं सायं प्रातर्दिवा निशि ॥ ५० ॥ शृङ्गे विशति च स्वैरं स्वैरं शेते च तिष्ठति । क्रीडनं कुरुते स्वैरं
स्वैरमायाति याति च ॥ ५१ ॥ परिभ्रम्यैकदोद्याने मानेन परिपूरित । कुमारो भव्यवत्कोटीकोटीराजो मृगध्वजः ॥ ५२ ॥
ववोऽन्यमे समायातः पातकोपरि मन्दधीः । दृष्टो स पतितस्तस्य पश्यतोहरवत्पशुः ॥ ५३ ॥ तद्दर्शनसमुद्भूतनूतनकोपस-

ङ्गमः । दधावे खड्गमादाय न्यायमुक्तः स राजसूः ॥ ५४ ॥ जटैर्नत्वा पदावुक्तं भुक्तं स्यान्मृत्यवे विषम् । नृपाज्ञालोपनं कोपान्नोपादेयं कुमार जोः ॥ ५५ ॥ जीवहिंसाऽत्र च प्रेत्य जेत्स्यसह्यं सुखोदयम् । अश्रुत्वेति शुजालापं पापं धृत्वा नृपाङ्गजः ॥ ५६ ॥ चिच्छेद माहिषं पादं मादं प्राप्तस्तदाऽसिना । प्रहारपीरुयाऽऽक्रान्तः शान्ततां महिषो दधौ ॥ ५७ ॥ दध्यौ च जीव एकाकी व्याकीर्णः सन् कुकर्मजिः । शुजाशुजफलं जोक्ता मोक्ता कोऽप्यस्य नापरः ॥ ५८ ॥ शनैः शनैः पदत्रय्या शय्यावत्प्रस्खलँश्चरन् । गृह्णन् सर्वत्र विश्रामं क्षामं कर्म स्वमाचरन् ॥ ५९ ॥ निर्नाथ आगतः स्तम्जे दम्जेन रहितो निजे । क्रोधं पूर्वजवस्मृत्या कृत्याकृत्यविदाप नो ॥ ६० ॥ स्मरन् स्वकर्मणो दोषं तोषं चित्ते व्यधत्त सः । दध्रे शुजपरीणामं स्वामन्तर्हीनतां स्मरन् ॥ ६१ ॥ राजाऽश्रौषीदथान्यायं प्रायं कौमारमुत्कटम् । पौरलोकात्ततो रुष्टो कुष्टो मूर्त्तकृतान्तवत् ॥ ६२ ॥ शूलिकारोपणादेशः क्लेशदायी महीजुजा । दत्तस्तदाऽस्य पुत्रस्य नश्यद्दाक्षिण्यबुद्धिना ॥ ६३ ॥ अथात्मीयकराम्जोजयोजनं कीर्तिमत्यसौ । जालस्थले समाधाय नायकाय व्यजिज्ञपत् ॥ ६४ ॥ क्षम्यतामपराधोऽयं तोयं नोष्णं गृहं दहेत् । नापक्कं मारयत्याम्रं ताम्रं चान्त्यै न रूप्यगम् ॥ ६५ ॥ अविमृश्य कृतं कार्यं नार्यं वपुषि शल्यकृत् । पश्चाद्दत्ते मनःपीरुं क्रीरुं सुप्तामिवाहिना ॥ ६६ ॥ राज्ञीवचस्तिरस्कृत्य जृत्यवृन्दमिवालसम् । पौरानवगणय्याथो पाथोजालीमिव द्विपः ॥ ६७ ॥ हृदयं कठिनीकृत्य मृत्यर्थं नृपतिः सुतम् । वहिर्निष्कासयामास रासजारोपणेन तम् ॥ ६८ ॥ करवीरकृतोत्ताला मालाऽप्यारोपिता गले । उद्भूतः कृतहुद्दाहः काहलीध्वनिरुद्दवणः ॥ ६९ ॥ आनीतो वध्यजूजागे यागे पशुरिवाबलः । कुमारः सर्वगोपालबालप्रत्यक्षमक्षमः ॥ ७० ॥ न तस्य कोऽप्यजूत्राता वाताहततरोरिव ।

मन्त्रिणा उग्रजेदेन केनचिन्मोऽथ रक्षितः ॥ ७१ ॥ स्थापितः कोष्ठकस्यान्तश्चान्तव्यासमहीतटे । प्रबोधं च ददौ मन्त्री
स्वतन्त्रीकृतमानसः ॥ ७२ ॥ वत्स्य शमरमं धेहि देहि जैनमते मतिम् । विरोध त्यज भो क्रूरे क्रूरे पाप्मनि मा चर
॥ ७३ ॥ बन्धूनां पितृमातृणां नृणां प्रेमास्ति कृत्रिमम् । पतङ्गरङ्गवद्यासि स्फातिमत्यातपे रवेः ॥ ७४ ॥ सस्नेहा येऽत्र
राजन्ति सन्ति ते स्वार्थतत्पराः । मैत्री धर्मस्य या सत्या मत्याधार कुमार सा ॥ ७५ ॥ इन्द्रजालोपमं पश्य प्रत्यक्षसंसार-
सङ्गमम् । रमन्तेऽमेधसस्तत्र सत्रमध्ये कुरङ्गवत् ॥ ७६ ॥ अस्मिन् भवे फलं दृष्टं स्पष्टं हिंसाकृतं त्वया । परत्र यत्पुन-
र्भावि सा विशीर्णिरित्योच्यते ॥ ७७ ॥ हिंसा दुःखततेः खानिः सा नित्यं दुर्गतिप्रदा । हिंसातो जन्तुराप्नोति ज्योतिर्गण
इव भ्रमम् ॥ ७८ ॥ नमिनाथान्मयाऽश्रावि नाभिनारकदुःखदम् । हिंसाफलमुरूत्साहः प्राह मन्त्रीति तं प्रति ॥ ७९ ॥
श्रुतं मृगध्वजेनैतत्कृतमायोज्य हस्तयोः । चतुर्गत्यसुखमातो ज्ञातोऽनेन महात्मना ॥ ८० ॥ तदाऽस्य हृत्स्थिरीकारात्सारा
लेश्याविशेषतः । जातिस्मृतिः समुत्पेदे खेदेन रहितस्य वै ॥ ८१ ॥ परिजज्ञे रुषा रागः प्रागपि प्रास्तशान्तिना । तदाऽने-
नाप्रमत्तेन हीन सोपशमेन च ॥ ८२ ॥ सुकुमारं कुमारं तमन्तकारकर्महसाम् । मन्त्री गृहे निनायाथ माश्रकारं कुकर्म-
णाम् ॥ ८३ ॥ चेपमभ्यर्थयामास न्यासवत्तत्र साधुजम् । दधार हृदये हर्षं दर्पणेनेव कर्षकः ॥ ८४ ॥ महीप वेदनाश्लिष्ट
क्लिष्टं ज्ञात्वाऽथ मन्त्रिराट् । दशाधा श्रावयामास ध्यौसमाराधनाविधेः ॥ ८५ ॥ महीपोऽपि मनःशुध्या सुध्यानोऽनशनं
ददौ । अष्टादशदिनीं यावज्ज्ञावतोऽपालयत्ततः ॥ ८६ ॥ लोहिताक्षाह्वयः ख्यातो जातोऽयमसुरो बली । स्फुर्जत्पुण्यम-

१ अरण्यमध्ये २ युग्मम् ३ विस्तारम्

त्रावेण तेन पातालमध्यतः ॥ ८७ ॥ मृगध्वजमुनीन्द्रोऽपि गोपिताङ्गो विचारणाम् । चक्रे चेन्मिलति छेक एकवारं नृपो मम ॥ ८८ ॥ तदोपशान्तिमायाति स्वातिशायी रुपोदयः । लालगीति न मे दोषः ध्लोषवज्जालमध्यतः ॥ ८९ ॥ मध्ये स्थिताः कियावन्या धन्यास्ते साधवः सदा । ये वहन्ति शुभाचारं भारं संयमसंभवम् ॥ ९० ॥ विमृश्येति मनोवीर्यादीर्यासमितिमान् मुनिः । चचाल मन्त्रियुक् प्राज्ञो राज्ञो मिलनहेतवे ॥ ९१ ॥ नृपस्याग्रे क्रमेणागाद्भागापगमसुन्दरः । मुनिं वीक्ष्य नृपश्चारु दारुसिंहासनं ददौ ॥ ९२ ॥ वेषयोगेन सन्मानदानतः पूजितो मुनिः । उपाविशत् पुनस्तत्र स भसेषु दयापरः ॥ ९३ ॥ पाणिभ्यां नृपतिः पादावादाय स्थितवान्मुनेः । भक्तो विलोकयत्यास्यं लास्यं कौतुकवानिव ॥ ९४ ॥ यावत् पुत्रं न वेत्त्येष लेखनिर्मितरूपवत् । तदोक्तं मन्त्रिणा नेतः श्वेतवासास्त्वदङ्गजः ॥ ९५ ॥ स्वकुलं निर्मलं सृष्टं कृष्टजन्मतरोः फलम् । अनेनेति निशम्याङ्गजागरूको नृपोऽभवत् ॥ ९६ ॥ पश्चात्तापान्महीभर्त्रा सभर्त्रा दुश्चरितं निजम् । क्षामितः साधुराक्षत्वान्नत्वा पादौ पुनः पुनः ॥ ९७ ॥ यन्मयाऽत्रापराद्धं तत्क्षन्तव्यमखिलं मुने । युष्मादृशाः क्षमावन्तः सन्तः स्युरुपकारिणः ॥ ९८ ॥ इदं राज्यमिदं पद्मासद्माघङ्गीकुरु त्वकम् । एवमुक्ते नृपेणेह नेहते निर्ममो मुनिः ॥ ९९ ॥ संसारभ्रमणोद्विग्नः संविग्नः साधुसत्तमः । नृपानुमतिमादाय ध्यायन् ध्यानं शुभं हृदि ॥ १०० ॥ जगाम वहिरुद्याने स्थाने कर्मोदये सति । स्वीचक्रे चरणं पार्श्वे सीमन्धरगुरोरसौ ॥ १०१ ॥ गृह्णाति स्रोज्झिताहारं सारं षष्ठतपः सृजन् । द्वाविंशतिदिनीं व्यापमाप छाद्मस्थ्यसङ्गतेः ॥ १०२ ॥ श्रारूढः क्षपकश्रेणीमेणीसुत इव स्थलीम् । सर्वकर्मक्षयादेव केवलज्ञान-

१ दाहवत्.

मासवान् ॥ १०३ ॥ सुरैर्व्यधायि सद्वर्णस्वर्णपङ्केरुहं तदा । तस्योपरि स्थितो ज्ञानी ग्लानीकृतरवी रुषा ॥ १०४ ॥
भूपोऽप्यागत्य निःशोकैर्लोकैः सार्धं प्रमोदवान् । चरणाम्भोजमानम्य कम्प्रकान्तिः पुरः स्थितः ॥ १०५ ॥ ज्ञानिना देश-
नाऽऽरब्धा लब्धानन्तगुणश्रिया । देशनामृतसंतुष्टः पृष्टः प्रमदा भूपतिः ॥ १०६ ॥ भगवन्नेष वृत्तान्तः शान्तवृत्ते निगद्य-
ताम् । वैरं किमत्र युष्माकं साकमेतेन शृङ्गिणा ॥ १०७ ॥ आचख्यौ केवली प्राच्यं प्राच्यं निजभवं ततः । प्राग्भवेऽहं
जकः शश्वदभ्रमीद्भूपोऽभवम् ॥ १०८ ॥ असौ मन्त्री कुकर्मा मे ग्रामे नास्तिकधर्मवान् । द्वावावां कुमते ख्यातौ पातौ
सप्तमनारकम् ॥ १०९ ॥ तत्रायान्या रुषा रुद्धं युद्धं कृत्वाऽऽयुरात्मनः । सागराणि त्रयस्त्रिंशद्धिसकान्त्यां प्रपूरितम् ॥ ११० ॥
कर्मातिरेपसम्बद्धं बद्धं तत्रामुनाऽधिकम् । भ्रान्तोऽहमथ ससारं स्फारं पुण्योदयोज्झितः ॥ १११ ॥ न केनापि कृता सारा
कारास्यस्येव तत्र मे । पशुकर्मद्वयं कृत्वा मृत्वाऽहं स्वरसुतोऽभवम् ॥ ११२ ॥ माहिषे शृणु सम्बन्धं बन्धनार्तिवधादि-
कम् । भ्रान्तोऽसौ बहुधं कायं नाथं धर्तुं सुधीरपि ॥ ११३ ॥ सप्तापि निरयाः स्पृष्टा दृष्टा तिर्यक्षु वेदना । चतुर्गत्यन्तरे
भ्रान्त भ्रान्तं नानेन कुत्रचित् ॥ ११४ ॥ महिष्या अथ जीर्णाया आयासीदुदरेऽप्ययम् । तत्र दुःसहिपक्षः सप्तकृत्वो-
ऽवजन्मुषितम् ॥ ११५ ॥ मिलितोऽयं भवे मेऽत्र नेत्ररोपान्मयाऽर्दितः । अथ प्राप्तो भवस्यान्तः शान्तवृत्तिजुषा मया
॥ ११६ ॥ महिषोऽप्यसुरः सोऽभूत्सौ भूयो दुःसमाप्स्यति । शार्ङ्गि प्राप्तः क्रमान्मुक्तो युक्तो भाव्येष सिद्धिगः ॥ ११७ ॥
एतत्पूर्वभवोद्भूतनूतन वृत्तभावयोः । विज्ञाय विबुधैः क्रोधरोधः कार्यो विशेषतः ॥ ११८ ॥ प्रबुद्धा बहवो भव्याः भव्या-
दसाद्भुदन्ततः । राजा प्राप्तो निजावासं त्रासं संसारतो दधत् ॥ ११९ ॥ मृगध्वजमुनेर्ज्ञानस्थानके कृतवानसौ । प्रासाद-

मसुरश्रङ्गं रङ्गन्मरूपमण्कितम् ॥ १२० ॥ मृगध्वजमुनेर्मूर्त्तिः स्फूर्तिमत्यन्तरे कृता । पादेन महिषः खञ्जः खञ्जनाभः कृतोऽपि सः ॥ १२१ ॥ वितीर्योरुधनं नाम कामदेवस्य दत्तवान् । भलापनां स्वचैत्यस्य तस्य सोऽयमथासुरः ॥ १२२ ॥ विहारं केवली मह्यां सह्यावन्यामिव द्विपः । चकार विकसद्वैरकैरवश्रीदवानलः ॥ १२३ ॥ श्रूयमाणयशस्तूर्यः सूर्यवज्ज्ञानरश्मियुक् । निघ्नन्नज्ञानभूच्छायं स्मायं भाति प्रबोधकृत् ॥ १२४ ॥ हताष्टकर्मगोमायुः स्वायुः पूर्णं प्रपाल्य च । ज्ञानी मोक्षे ययौ प्रान्ते कान्तेऽनन्तसुखात्मके ॥ १२५ ॥ एवं श्रीनमिनायकस्य विलसत्तीर्थे सुलब्धोदयः, संजातः स मृगध्वजो मुनिवरः प्राप्तप्रभासं च यः । ये चैतस्य चरित्रमत्र सुभगं शृण्वन्ति वृण्वन्ति ते, श्रेयःश्रीललनां घनां विदधते हृद्युन्नतिं सन्मतेः ॥ १२६ ॥

॥ इति श्रीमृगध्वजचरित्रं कृतं श्रीक्षेमराजोपाध्यायैः ॥

तत्प्रागुक्तं सम्यक्त्वं यथा जन्तोः स्यात्स प्रकारः सप्रपञ्चः प्रोच्यते—इह गम्भीरापारसंसारसागरमध्यवर्ती जन्तुः सकलदुःखपादपबीजभूतमिथ्यात्वप्रत्ययमनन्तान् पुद्गलपरावर्ताननन्तदुःखलक्षणाननुभूय कथमपि तथाभव्यत्वपरिपाकवशाद्गिरिसरिदुपलघोलनाध्यवसायरूपेणानाभोगनिर्वर्तितयथाप्रवृत्तिकरणेनायुर्वर्जानि ज्ञानावरणादीनि कर्माण्यन्तःसागरोपमकोटाकोटीस्थितिकानि करोति । अत्र चान्तरे कर्ममलपटलतिरस्कृतवीर्यविशेषाणामसुमतां दुर्भेद्यः कर्कशनिविडचिरप्ररूढगुपिलवक्रग्रन्थिवत्कर्मपरिणामजनितो निबिडरागद्वेषपरिणामरूपोऽभिन्नपूर्वो ग्रन्थिः स्यात् । तदुक्तं—"गंठि त्ति सुदुब्भेउ करकडघणरूढगूढगंठि व । जीवस्स कम्मजणिउ घणरागदोसपरिणामो ॥ १ ॥" इमं च ग्रन्थिं यावदभव्या अपि

यथाप्रवृत्तिकरणेन कर्म क्षपयित्वाऽनन्तशः समागच्छन्त्येव । एतदनन्तरं पुनः कश्चिदेव महात्मा समासन्नपरमनिर्वृतिसुखसमुल्लसितप्रचुरदुर्निवारवीर्यप्रसरो निशितकुठारधारयेव परमविशुद्ध्या यथोक्तस्वरूपग्रन्थिभेदं विधाय मिथ्यात्वमोहनीयकर्मस्थितेरन्तर्मुहूर्तमुदयक्षणादुपर्यतिक्रम्यापूर्वकरणानिवृत्तिकरणलक्षणविशुद्धिजनितसामर्थ्योऽन्तर्मुहूर्तकालप्रमाणतत्प्रदेशवेद्यदलिकाभावरूपमन्तरकरणं करोति । अत्र च यथाप्रवृत्त्यपूर्वानिवृत्तिकरणानामयं क्रमो वेदितव्यो यथा—"जा गंठी ता पढमं गंठिं समइच्छओ हवइ बीयं । अनियट्टीकरणं पुण सम्मत्तपुरक्खडे जीवे ॥ १ ॥" "गंठिं समइच्छ त्ति" ग्रन्थिं समतिक्रामतो भिन्दानस्येत्यर्थः । "सम्मत्तपुरक्खडे त्ति" सम्यक्त्वं पुरस्कृतं येन स तथा तस्मिन्नासन्नसम्यक्त्व एव जीवेऽनिवृत्तिकरणं भवतीत्यर्थः । शेषं सुगमं । एतस्मिंश्चान्तरकरणे कृते तस्य मिथ्यात्वमोहनीयस्य कर्मणः स्थितिद्वयं भवति अन्तरकरणादधस्तनी प्रथमस्थितिरन्तर्मुहूर्तमात्रा तस्मादेवोपरितनी शेषा द्वितीयस्थितिरिति । स्थापना चेयं । तत्र प्रथमस्थितौ मिथ्यात्वदलिकवेदनादसौ मिथ्यादृष्टिरेव, अन्तर्मुहूर्तेन तस्यामपगतायामन्तरकरणप्रथमसमय एवौपशमिकं सम्यक्त्वमाप्नोति, मिथ्यात्वदलिकवेदनाभावात् । यथा हि वनदवानलः पूर्वदग्धेन्धनं घनमूषरं वा देशमवाप्य विध्यायति तथा मिथ्यात्ववेदनाग्निरन्तरकरणमवाप्य विध्यायति । तस्यां चान्तर्मौहूर्तिक्यामुपशान्ताद्धायां परमनिधिलाभकल्पायां जघन्येन समयशेषायामुत्कृष्टतः षडावलिकाशेषायां कस्यचिन्महाविभीषिकोत्थानकल्पोऽनन्तानुबन्ध्युदयो भवति । तदुदये चासौ सासादनसम्यग्दृष्टिगुणस्थाने वर्तते । उपशमश्रेणिप्रतिपतितो वा कश्चित्सासादनत्वं यातीति तदुत्तरकालं चावश्यं मिथ्यात्वोदयादसौ मिथ्यादृष्टिर्भवतीत्यलं विस्तरेणेति ॥

अथ सम्यक्त्वप्राप्तौ सत्यां यदुत्तरोत्तरं फलं स्यात्तत् प्ररूप्यते—

पसत्थलेसं पकरंति चित्तं, जे सत्तखित्तेसु ववंति वित्तं ।
छिंदंति निम्मोहमणा ममत्तं, कुणंति ते जम्ममिमं पवित्तं ॥ ७२ ॥

व्याख्या—ये ज्ञाततत्त्वाः सत्त्वा अप्रशस्तलेश्यापरिहारेण स्वकीयं चित्तं प्रशस्तलेश्यं प्रकुर्वन्ति । तथा ये सप्तसु क्षेत्रेषु वपन्ति न्यायोपार्जितं वित्तं । क्षेत्राणि चैतानि समये प्रोक्तानि श्रीभक्तप्रकीर्णकग्रन्थे—"अह दुजा देसविरओ सम्मत्तरओ रओ य जिणवयणे । तस्स य अणुवयाइं आरोविज्जंति सुध्दाइं ॥ १ ॥ अनियाणोदारमणो हरिसवसविसट्टकंटयकरालो । पूएइ गुरुं संघं साहम्मियमाइभत्तीए ॥ २ ॥ नियदव्वमऊव्वजिणिंदभवणजिणविंबवरपइट्ठासु । वियरइ पसत्थपुत्थयसुतित्थतित्थयरपूयासु ॥ ३ ॥" इतिवचनाज्जिनभवनबिम्बपुस्तकचतुर्विधसङ्घरूपेषु सप्त (सु) क्षेत्रेषु धनं व्ययीकुर्वन्ति । तदनु दीक्षावसरे निर्मोहमनसः सन्तः ममतां छिन्दन्ति मूलान्निकृन्तन्ति । ते सर्वसंसारनिःसङ्गाः कुर्वन्ति जन्मैतत् नृजन्मलक्षणं पवित्रं शुचितरमिति काव्यार्थः ॥

अथैतदुपदेशसप्ततिकापर्यन्तकाव्ये पठनफलमाह—

पढिंतु एयं उवएससत्तरिं, मुणंति चित्ते परमत्थवित्थरं ।
तरित्तु ते दुक्खभरं सुदुत्तरं, खेमेण पावंति सुहं अणुत्तरं ॥ ७३

व्याख्या—पठित्वा सूत्रत एनां उपदेशसप्ततिकां गुणेति अवबुध्यन्ति चित्ते चेतसि परमार्थो मोक्षस्तस्य विस्तरः साधनोपायास्तं। सूत्रस्य केवले पठने न काचिदर्थसिद्धिर्जन्तोर्यावता परमार्थं तस्यार्थं नावगच्छति तत उक्तं गुणंतीति। तत्फलाधिगमफलमाह—"तरित्तु" तीर्त्वा ते प्राणिनो दुःखजलं जन्मजरामरणशोकरोगरूपं सुतरामाधिक्येन दुस्तरं क्षेमेण कुशलेन प्राप्नुवन्ति सुखं सिद्धिपुरस्त्रीप्राप्तिलक्षणं अनुत्तरं सर्वोत्कृष्टमिति श्लेषतोऽक्षरत्रयेण नामसंसूचकं काव्यमिदं। मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणीति हेतोः क्षेमेणेत्युक्तम्॥

॥ इति श्रीउपदेशसप्ततिकावृत्तिः॥

## ॥ अथ प्रशस्ति ॥

श्रीखरतरगणजायाः श्रीमज्जिनकुशलसूरयोऽभूवन्। यन्नामस्मरणादपि जयन्ति कुशलानि कुशलानाम्॥ १॥ तच्छिष्यविजयतिलकः पाठकमुख्यो बभूव पुण्यात्मा। विद्या यद्वदनाम्बुजमधिलीना सरसि हंसीव॥ २॥ तद्विनेयो विनीतात्मा जज्ञे श्रीविनयप्रभः। स्वर्णरेखेव यद्रेखा दर्शोपनिकषोपले॥ ३॥ तच्छिष्यः श्रीक्षेमकीर्तिः प्रसिद्धः, साधुश्रेष्ठो वाचनाचार्यवर्यः। मिथ्यात्वोग्रध्वान्तपूरो निरस्तः, स्थाने स्थाने यस्य वाग्दीपिकाभ्याम्॥ ४॥ कारितं येन शिष्याणां शतमेकं दशोत्तरम्। तद्गुणख्यातिसंयुक्तं वाक्पतिर्यथा॥ ५॥ जीरापल्लीपार्श्वोपासनतो यस्य सातिशयताऽऽसीत्। आचारे च विचारे विधौ विहारे विनेयजने॥ ६॥ येन स्वपर्यन्तमपेक्ष्य मासार्द्धोपूर्णपक्षानशनेन यातम्। श्रीसिद्धशैलप्रमुखति

विधातुं, तत्रैव तत्पादयुगं नमामि ॥ ७ ॥ तच्छिष्यः क्षेमहंसाख्यः सुगुरुः प्रवणो भुवि । येन हंसायितं कामं शुभ्रपक्ष-द्वयी श्रिया ॥ ८ ॥ श्रीवाचनाचार्यशिरस्सु मुख्या क्षेमध्वजाख्यास्तु तदीयशिष्याः । यैर्भूरिदेशेषु कृतो विहारः, सर्वत्र लब्धः स्वयशःप्रचारः ॥ ९ ॥ तच्छिष्याः प्रविभान्ति शान्तिसहिताः सौभाग्यभाग्यश्रिताः, सद्विद्याभ्युदयाधरीकृतसुराचार्याः क्षितौ विश्रुताः । कीर्तिस्फूर्तिमधिष्ठिता मुनिवराः श्रीक्षेमराजाह्वयाः, पुण्योल्लसत्यतिशायिपाठकशिरोरत्नोपमानोदयाः ॥ १० ॥ स्वकृतोपदेशसप्ततिकाह्वयसूत्रस्य निर्मिता टीका । तैरेवैषा वर्षे मुनिवेदशरेन्दुभिः ( १५४७ ) प्रमिते ॥ ११ ॥ विबुधजनवाच्यमाना नानाविधसूत्रयुक्तिललिताङ्गी । चिरकालमियं जीयादमेयधिषणोदयविधात्री ॥ १२ ॥ हिंसारकोट्टवास्तव्यः श्रीमालोत्तमवंशजः । पडुपर्पटगोत्रीयः श्रीमान् दोदाह्वयोऽभवत् ॥ १३ ॥ स श्राद्धगुणरत्नानां रोहणो रोहणो हृदि । कृता तस्याग्रहेणैषा नव्या सप्ततिका मुदा ॥ १४ ॥

॥ इति प्रशस्तिः ॥